६ खण्डम्

श्रीमद्भगवद्रामानुजविरचित-
वेदान्तसूत्रव्याख्यानम्

# श्रीभाष्यम् ।

## श्रीसुदर्शनाचार्य-श्रीरङ्गरामानुजार्यप्रणीत-श्रुतप्रकाशिका-भावप्रकाशिकाटीका-द्वयोपेतम्

वृन्दावनवास्तव्य-सर्वतन्त्रस्वतन्त्र-श्रीसुदर्शनाचार्य-
शास्त्रिणामन्तेवासिना पं० धरणीधरशास्त्रिणा
सम्पादितम् प्रकाशितञ्च


तच्च
श्रीधरणीधरशास्त्रिपादान्तेवासि वे० शिरोमणि
वेदान्ततीर्थ पं० श्रीधराचार्यद्वारा संशोध्य
श्रीवृन्दावनधामनि
श्री "श्रीनिवास" यन्त्रालये मुद्रापितम्

printed by p. Shridharacharya at the
Shri "Shrinibas" Press, Brindaban

सन् १९२५ ] [ रामानुजवत्सर ९०९

# अनियमः सर्वेषामविरोधः शब्दानुमा-नाभ्याम् ॥ ३२ ॥

१३ अधिकरणम्

उपकोसलादिषु येषूपासनेष्वर्चिरादिगतिः श्रूयते, किं तन्निष्ठानामेव तया ब्रह्मप्राप्तिः, उत सर्वेषां ब्रह्मोपासननिष्ठानाम्— इति संशये; इतरेष्वनाम्नानात् [1]"ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" [2]"श्रद्धां सत्यमुपासते" इतीतरसकलब्रह्मविद्योपस्थापकत्वे प्रमाणाभावाच्च तन्निष्ठानामेव—

* श्रुतप्रकाशिका *

अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ ३२ ॥ अर्चिरादिगतेः प्रस्तुतत्वात्तन्नियमानियमचिन्तेत्यवान्तरसङ्गतिः, किमर्चिरादिगतिस्तत्सन्निधिसमाम्नातोपासननिष्ठानामेव ? उत सर्वविद्यानिष्ठानां ?, किं छन्दोग्यवाजसनेयकयोः 'तद्य इत्थं विदुः' 'य एवमेतद्विदुः' इति वाक्ययोः पञ्चाग्निविद्यानिष्ठानामेवार्चिरादिगतिश्रवणम्, उत सर्वब्रह्मविद्यानिष्ठानां, 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' 'ये चामी अरण्ये श्रद्धां सत्यमुपासते' इति किं पञ्चाग्निविद्यानिष्ठानुद्दिश्य गतिर्विधीयते ? किमितरानप्युपासकान् ?, किं श्रद्धासत्यतपश्शब्दैरुपास्यब्रह्मोपस्थापनमुखेन उपासनान्तरप्रतिपत्तिरस्ति, नेति, किम् उपकोसलविद्यायाम्, 'आचार्यस्तु ते गतिं वक्ता' इति गत्यनुवादः उपासनान्तरप्रतिपत्ति :

ϕ भावप्रकाशिका ϕ

(आचार्यस्तु ते गतिं वक्तेति गत्यनुवाद इति) 'आचार्यस्तु ते गतिं वक्ता' इति अग्निवाक्येन परिशेषिताया गतेः 'तेर्चिषमभिसम्भवन्ति' इति यत्कीर्तनं तदुपासनान्तरे अर्चिरादिगतिं निरुणद्धि, उत नेत्यर्थः, अयं भावः— यद्यर्चिरादिगतिः सर्वसाधारणी 'तद्य इत्थं विदु'रिति पञ्चाग्निवाक्येनोपदिश्येत, तर्हि तस्यामेव शाखायामुपकोसलविद्यायामर्चिरादिपाठोऽनर्थकः

१. छा० ५-१०-१ ॥ | २. बृ० ८-२-१५ ॥

इति प्राप्तेऽभिधीयते- अनियमः- इति । सर्वेषां- सर्वोपासननिष्ठानां तयैव गन्तव्यत्वात् तन्निष्ठानामेवेति नियमो नास्ति । सर्वेषां तयैव गमने हि सति शब्दानुमानाभ्यां- श्रुतिस्मृतिभ्यामविरोधः; अन्यथा विरोध एवेत्यर्थः । श्रुतिस्तावत् छान्दोग्यवाजसनेय-

* श्रुतप्रकाशिका *

मुपोद्बलयति ? नेति, यदा नोपोद्बलयति तदा ब्रह्मोपस्थापनमुखेन उपासनान्तराप्रतिपत्तेः इतरोपासकानामनुद्दिष्टत्वात् पञ्चाग्निविद्यानिष्ठानेवोद्दिश्य गतिविधानात् छान्दोग्यादौ पञ्चाग्निविद्यानिष्ठव्यतिरिक्तानामर्चिरादिगतिश्रवणाभावात् न सर्वब्रह्मविद्यानिष्ठानामिति स्याद्, यदोपोद्बलयति, तदा ब्रह्मोपस्थापनमुखेनोपासनान्तरप्रतिपत्तेरितरानप्युद्दिश्य विहितत्वेन छान्दोग्यादौ पञ्चाग्निविद्यानिष्ठव्यतिरिक्तानामप्यर्चिरादिगतिश्रवणात्सर्वब्रह्मनिष्ठानामपि अर्चिरादिगतिः स्यादिति । सिद्धान्त्यभिमतवाक्यस्य निर्वाहमाह ( ये चेमे इति ) ( प्रमाणाभावादिति ) सत्यतपःशब्दयोर्ब्रह्मवाचकत्वे कारणाभावोऽभिप्रेतः ।

( इति प्राप्त इति ) ( गमने हि सतीति ) हि शब्दः सूत्रयोजनाशेषः (अविरोध इति ) श्रुतिस्मृतिभ्यामस्यार्थस्याविरोध इत्यर्थः । उदाहृतवाक्यैः सर्वब्रह्मविद्यानिष्ठाना-

❀ भावप्रकाशिका ❀

स्यात्, शाखैक्येन प्रतिपत्तृभेदेन परिहारासम्भवात्, नच शाण्डिल्यविद्यायामिव 'एकत्र विधिरन्यत्राऽनुवादः' इति नियन्तुं शक्यते, विनिगमकाभावात्, 'आचार्यस्तु ते गतिं वक्ता' इति गत्युक्तिपरिशेषेण उपकोसलविद्यायां गतेः प्रतिपिपादयिषितत्वावगमेन स्तुत्यर्थानुवादत्वाभावाच्च विद्यान्तरप्रतिपत्तिं प्रतिबन्धातीति पूर्वपक्ष्यभिप्रायः, 'यदु चैवास्मिन् शव्यं कुर्वन्ति यदु च न तेऽर्चिषमभिसम्भवन्ति' इति शवदहनादिवैगुण्येपि अर्चिरादिगतिरुपकोसलविद्यानिष्ठस्य सिद्ध्यतीति विद्यास्तुत्यर्थतया श्रुतोपनिषत्कसूत्रटीकोक्तरीत्या अपुनरावृत्तिरूपगुणविधानार्थतया वा अर्चिरादिकीर्तनस्य न विद्यान्तरे अर्चिरादिगत्यवगतिप्रतिबन्धकत्वमिति सिद्धान्त्यभिप्राय इति , एतत्सर्वं हृदि

वाक्ययोः पञ्चाग्निविद्यायामर्चिरादिमार्गेण सर्वब्रह्मोपासननिष्ठानां गमनमाह "य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसम्भवन्ति" इति वाजसनेयके; "तद् य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति" इति छान्दोग्ये; "य इत्थं विदुः" इति पञ्चाग्निविद्यानिष्ठान् "ये चेमेऽरण्ये" इत्यादिना श्रद्धापूर्वकं ब्रह्मोपासीनाँश्चोद्दिश्यार्चिरादिका गतिरुपदिश्यते, "सत्यं ज्ञानमनन्तं ब्रह्म" "सत्यं त्वेव विजिज्ञासि-

---

* श्रुतप्रकाशिका *

मर्चिरादिगतिमत्त्वप्रतिपादनं दर्शयति ( छन्दोग्य इत्थं विदुरिति ) सत्यशब्दस्य ब्रह्मवाचकत्वं दर्शयँस्तन्मुखेन तपःशब्दस्यापि तद्वाचित्वं दर्शयति ( सत्यं ज्ञानमिति ) तपश्शब्दस्यापि 'परमं यो महत्तपः' इत्यादिषु द्रष्टव्यम् । परैस्तु विद्यामन्तरेण केवलश्रद्धातपोभ्यामर्चिरादिगतिलाभासम्भवस्य 'विद्यया तदा-

छ भावप्रकाशिका छ

निधाय किमुपकोसलविद्यायामिति वाक्यं प्रयुक्तमिति द्रष्टव्यम्। उदाहृतवाक्यैः सर्वब्रह्मविद्यानिष्ठानाम् अर्चिरादिगतिमत्त्वं दर्शयति छान्दोग्ये 'इत्थं विदु'रिति क्वचित्कोशेषु पाठो दृश्यते, तत्र छान्दोग्ये इत्येतत् लेखकदोषकृतं, छान्दोग्ये इत्येतस्य पूर्वान्वितत्वात्, भाष्ये- 'य इत्थंविदु' रित्येतदुपलक्षणं 'य एवमेतद्विदु' रिति वाजसनेयिवाक्यस्याऽपि ।ततश्च 'य इत्थं विदुः' 'य एवमेताद्विदुः' इति च पञ्चाग्निविद्यानिष्ठानित्यर्थः, 'ये चेमेऽरण्ये' इत्यादिना- इत्यत्रादिशब्देन 'ये चामी अरण्ये' इत्यादि वाजसनेयवाक्यस्य ग्रहणम्, ये चामी अरण्ये स्थिता अमी वनस्थादयः श्रद्धां कृत्वा सत्यं परं ब्रह्मोपासत इति श्रुत्यर्थः, यत्र कामाः परागताः, कामाः- क्षुद्रविषयाः, परागता- निवृत्ता भवन्ति, तद्ब्रह्म लोकाख्यं स्थानं विद्यया आरोहन्ति तत्र स्थाने दक्षिणमार्गगा न यान्ति- न

तव्यम्" इति सत्यशब्दस्य ब्रह्मणि प्रसिद्धेः। तपःशब्दस्यापि तेनैकार्थ्यात्सत्यतपश्शब्दाभ्यां ब्रह्मैवाभिधीयते। श्रद्धापूर्वकं ब्रह्मोपासनं चान्यत्र श्रुतम्, "सत्यं त्वेव विजिज्ञासितव्यम्" इत्युपक्रम्य "श्रद्धा त्वेव विजिज्ञासितव्या" इति। स्मृतिरपि "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" इति सर्वेषां ब्रह्मविदामनेनैव मार्गेण गमनमित्याह—एवंजातीयकाः

* श्रुतप्रकाशिका *

रोहन्ति यत्र कामाः परागताः। न तत्र दक्षिणा यान्ति नाविद्वांसस्तपस्विनः' इत्यादिश्रुतिसिद्धत्वात् श्रद्धातपःपरायणानां विद्यानिष्ठत्वमार्थमित्युक्तम्, तदविरुद्धम्, आर्थत्वादपि शाब्दत्वं सम्भवद्युक्ततमम् 'स एनान् ब्रह्म गमयति' इति ब्रह्मप्राप्तिफलत्वात्, फलस्य च यथोपासनभावित्वात्, तत्रोपास्यतया प्रतीतं सत्यतपश्शब्दवाच्यं ब्रह्मैवेति च सिद्धम्। श्रद्धापूर्वकं ब्रह्मोपासनस्य श्रुत्यन्तरसिद्धतां दर्शयति (श्रद्धापूर्वकमिति) स्मृतिवचने 'ब्रह्म ब्रह्मविदो जनाः' इत्यत्र तात्पर्यं, न विद्याविशेष उक्तः। (एवंजातीयका इति) 'तयोर्ध्वमायन्नमृतत्वमेति' 'सूर्यद्वारेण ते विरजाः प्रयान्ति' 'अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्यया वाऽऽत्मानमन्विष्यादित्यमेवाभियान्ति' इत्यादयः श्रुतयः, 'स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु। द्रष्टव्यस्त्वनुमन्तव्यः श्रोतव्यश्च द्विजातिभिः। य एवमेनं जानन्ति ये चारण्यकमाश्रिताः। उपासते तपः सत्यं श्रद्धया परया युताः। क्रमात्ते सम्भवन्त्यर्चिरहः शुक्लं तथोत्तरम्। अयनं देवलोकं च सवितारं सवैद्युतम्। तत्र तत्पुरुषो दिव्योऽमानवो ब्रह्म लौकिकान्। करोति पुनरावृत्तिस्तेषामिह न विद्यते' इत्यादिस्मृतयश्च विवक्षिताः, सर्वविद्या-

* भावप्रकाशिका *

\गच्छन्ति, तपस्विनोऽप्यविद्वांसो न यान्तीत्यर्थः, (शाब्दत्वं सम्भवदिति) भाष्यो-

**श्रुतिस्मृतयो बह्व्यः सन्ति । एवं सर्वविद्यासाधारणीयं गतिः प्राप्तैवोपकोसलविद्यादावनूद्यते ॥ ३२ ॥**

अनियमाधिकरणं समाप्तम् ॥

---

* श्रुतप्रकाशिका *

स्वर्चिरादिगतिः प्राप्ता चेत् छान्दोग्ये प्रदेशद्वयेऽर्चिरादिगतेर्द्विरुक्तिः कथमित्यत्राह ( एवं सर्वेति ) पूर्वपक्षे 'तद्य इत्थं विदु'रित्यादिवाक्यस्य सङ्कोचोऽनुवादत्वं च, सिद्धान्ते तु न तत्सङ्कोचः, अन्येषामनुवादत्वमात्रमेव, इदमधिकरणम् अर्चिरादिगतिचिन्तनस्य तत्सिद्ध्यर्थत्वात् अर्चिरादिगतेः सर्वविद्यासु चिन्तनीयतया कृतं – तद्व्यक्तीभविष्यति । इतरे सर्वेऽपि 'यावदधिकार'मिति सूत्रमतः परस्तात् पठित्वा अधिकरणान्तरमाहुः । तत्र परे तु विदुषस्तद्देहपातानन्तरं देहान्तरमुत्पद्यते न वेति संशय्य ब्रह्मविदामपि वसिष्ठादीनामितिहासपुराणेषु देहान्तरोत्पत्त्यवगमाद्विद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वेति पूर्वपक्षं कृत्वा वर्त्तमानब्रह्मविदां प्रारब्धभोगक्षय इवाधिकारिकपुरुषाणामपि प्रारब्धाधिकारहेतुकर्मक्षये मोक्ष इति न पाक्षिकहेतुत्वाहेतुत्वे इति सिद्धान्तयन्ति ; तदयुक्तम्– प्रत्यक्षया श्रुत्या विद्याया अपवर्गहेतुत्वे श्रुते तद्विरुद्धेतिहासपुराणवचसामप्रमाणतया विद्याया अपवर्गसाधनत्वे संशयानुत्थानात् । किञ्च 'यावदधिकारमवस्थिति'रित्युक्ते कथमहेतुत्वपरिहारः, यावदधिकारमवस्थानेन वर्त्तमा-

ॐ भावप्रकाशिका ॐ

क्तरीत्या तपश्शब्दस्यैव ब्रह्मवाचकत्वसम्भवादिति भावः, ( सङ्कोचोऽनुवादत्वञ्चेति ) 'श्रद्धां सत्यमुपासते' इत्यस्य पञ्चाग्निविद्यामात्रविषयत्वमेव, ततश्च 'तद्य इत्थं विदु' रित्येदनुविजानन्तीत्यत्र अनुविद्येतिवदनुवाद इत्यर्थः, नच 'तद्य इत्थं विदुर्येचेमेऽरण्ये' इति यच्छब्दद्वयस्य चशब्दस्य च वैयर्थ्यं शङ्क्यम्, गत्यभावादुपपत्तेरिति भावः ( अन्येषामनुवादत्वमात्रमिति ) उपकोसलविद्यापर्यङ्कविद्यादिवाक्यानामित्यर्थः ( तद्व्यक्तीभविष्यतीति ) उत्तराधिकरणे सम्भृतिश्रुतिव्याख्याने गतेस्सर्वविद्याचिन्तनीयत्वं व्यक्तीभविष्यतीत्यर्थः ( इतिहासपुराणवचसामप्रमाणतयेति ) ननु भवत्पक्षेपि समानमेतत् 'अश्व इव रोमाणि विधूय पापम्'

* श्रुतप्रकाशिका *

नदेहानन्तरमप्यपवर्गाभावस्य सिद्धत्वादहेतुत्वमेव समर्थितं भवति । नन्वधिकारस्य प्रारब्धकर्मकृतत्वात् तदवसाने मोक्षहेतुत्वमेव विद्याया मोक्षहेतुत्वमिति चेत्— न, प्रारब्धकर्मणोऽपि स्वाप्नार्थवन्मिथ्यात्वेन निवर्त्तकज्ञाने सति स्थित्यनुपपत्तेः, प्रवृत्तफलस्य कर्माशयस्य मुक्तेषोर्वेगक्षयादिव फलक्षयान्निवृत्तिरिति चेत्— न, स्वाप्नशरवेगस्येव मिथ्यात्वेन बोधादनन्तरं भोगानुपपत्तेः, न हीषुमोक्षणक्षण एव पुरुषे प्रबुद्धे शरश्च वेगश्चाबाधितौ तिष्ठतः, यदि वसिष्ठादीनां न निवर्त्तकज्ञानमुदितम्, तर्ह्यहेतुत्वशङ्काया अभावात्सुतरामनारम्भणीयता । अपरे तु वसिष्ठादीनां देहान्तरोत्पत्तिदर्शनेन विद्याया अर्चिरादिनाऽपवर्गहेतुत्वव्यभिचारशङ्कानिवारकं सूत्रं व्याचक्षते, तन्मतेऽपि श्रुतिविरोधे स्मृत्यप्रामाण्येन संशयाभावात् अधिकरणानारम्भस्तुल्यः । अन्ये तु अर्चिरादिमार्गस्य ऋजुत्वादादित्यादीनां परिभ्रमणशीलत्वेन अत्र नियमेनानवस्थानादार्जवेन न सदा देवाश्चिन्त्याः, किन्तु यदा यत्र यस्तिष्ठति स तत्र तदा चिन्त्य इति विचार्य भ्रमतामपि सूर्यादीनां शरीरान्तरेण मार्गानुगुणस्थित्युपपत्तेर्मार्गानुगुण्येन सदा ते देवाश्चिन्तनीया इति सिद्धान्तयन्ति, तदयुक्तं— कृत-

* भावप्रकाशिका *

इति श्रुतिबलात् ब्रह्मविदश्शरीरपातसमये सर्वकर्मक्षयार्चिरादिगतिविरजातरणब्रह्मप्राप्त्यादीनां श्रवणात् वसिष्ठावान्तरतपःप्रभृतीनां देहान्तरसम्बन्धप्रतिपादकपुराणवचसामप्रामाण्यप्रसङ्गेन शङ्कानुत्थितिप्रसङ्गात् । नच 'भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते' इत्यत्रोक्तन्यायेन 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इत्यस्य विद्यायोनिशरीरावसानत्वनिराकरणात् तच्छ्रुत्यनुग्रहसत्त्वेन वसिष्ठादीनां देहान्तरसत्त्वप्रतिपादकपुराणवचसाम् प्रामाण्यं सम्भवतीति वाच्यम्, तर्हि तन्मतेपि तेषां प्रामाण्यं सम्भवतीति वक्तुं शक्यत्वात्, किञ्च तेनैवाधिकरणेन प्रारब्धानाशावधिकत्वे संसारस्य निश्चिते सति किमत्र विचार्यमवशिष्यत इति चेत्, अत्रोच्यते—अस्मन्मते विदुषश्शरीरपातसमये सर्वकर्मक्षये वसिष्ठावान्तरतपःप्रभृतीनां जन्मान्तरसम्बन्धप्रतिपादकपुराणानां का गतिरित्याशङ्क्य 'भोगेन त्वितरे' इत्यधिकरणसिद्धन्यायस्मारणं सूत्रकृता क्रियत इति शक्यते वक्तुम्, परमते स्मृतिप्रमाणमवलम्ब्य श्रुतिप्रामाण्यात्ते-

* श्रुतप्रकाशिका *

करत्वात्, देवताऽधिकरणे 'अनेकप्रतिपत्तिदर्शना'दिति युगपदनेकत्र प्रवृत्तिविरोधो हि शरीरभेदेन परिहृतः, यतो विचारान्तराण्ययुक्तानि, अत एवास्य सूत्रस्य विदुषो देहात्यये सकलकर्मक्षयस्य व्यभिचारशङ्काव्युदासपरत्वमेव युक्तम्, यतस्तदेव युक्तम्। अत एव साम्परायाधिकरणशेषत्वमेव घटत इति अनियमसूत्रात् प्रागेव पाठः समीचीनः। ननु अनियमसूत्रात् परत्वमुपपद्यते, विदुषोऽर्चिरादिनाऽपवर्गप्राप्त्यदर्शनपरिहारपरत्वेऽपि सङ्गत्युपपत्तेः, नैवम्, अर्चिरादिगतेर्देहानन्तरभावित्वचिन्तनपरत्वाभावादनियमसूत्रस्य, सर्वविद्यानिष्ठसाधारणत्वं हि तेन सूत्रेण निरूपितम्। अतो विद्याफलविशेषस्य देहपातानन्तरभावित्वचिन्तनपरस्य 'यावदधिकार'मिति सूत्रस्य साम्परायाधिकरणशेषतया पूर्वमेव पठनं युक्तम् ॥ ३२ ॥

अनियमाधिकरणं समाप्तम् ॥ १३ ॥

---

* भावप्रकाशिका *

पपर्यन्तपूर्वपक्षप्रवर्तनमसङ्गतमित्यत्र तात्पर्यात्, ननु 'अर्चिरादिना तत्प्रथितेः' इत्यधिकरणे अर्चिरादिमार्गव्यतिरेकेण मार्गान्तरं नास्तीति स्थापयिष्यमाणत्वात् देशविशेषविशिष्टब्रह्मप्राप्तेः मार्गान्तरेणाऽसम्भवात्, अर्चिरादिगतेः सर्वविद्यासाधारण्यं सिद्धमेवेति सिध्यत्येव सर्वविद्यासाधारण्यमिति व्यर्थोऽयं विचारः, नच अर्चिरादिगतेः सर्वविद्यासाधारण्येऽपि सर्वविद्यासु अनुचिन्तनीयत्वसिध्यर्थमिदमधिकरणमिति वाच्यम्, ब्रह्मप्राप्त्युपायतया सर्वविद्यान्वये सिद्धे तत्क्रतुन्यायेन सर्वत्र चिन्तनीयत्वस्यापि सिद्धेः, अस्मिन्मते अस्याधिकरणस्यार्चिरादिगतिचिन्तनविषयत्वाभावाच्च इति चेत्—सत्यम्, छान्दोग्ये एव प्रदेशभेदेन द्विःपाठस्य गतिप्रदर्शनपरत्वादस्याधिकरणस्य ॥ ७ ॥

इति अनियमाधिकरणम् ॥ १३ ॥

---



## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥

१४ अधिकरणम्

बृहदारण्यके श्रूयते [1]"एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन एतस्य वा ऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इति । तथा आथर्वणे [2]"अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्" इति । तत्र संशयः— किमिमे अक्षरशब्दनिर्दिष्टब्रह्मसम्बन्धितया श्रुताः अस्थूलत्वादयः प्रपञ्चप्रत्यनीकतास्वरूपाः सर्वासु ब्रह्मवि-

---

* श्रुतप्रकाशिका *

अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥ अर्चिरादिगतेः सर्वविद्यासाधारण्यमुक्तं, तथाऽस्थूलत्वादेरपि सर्वसाधारण्यं निरूप्यत इति सङ्गतिः, पूर्वाधिकरणे प्रकरणं पूर्वपक्षहेतुः, अत्रापि नथेति वा सङ्गतिः । (प्रपञ्चप्रत्यनीकतास्वरूपा इति) प्रपञ्चप्रत्यनीकं ब्रह्म तस्य प्रपञ्चप्रत्यनीकत्वरूपस्वभावेन निरूपकाः अस्थूलत्वादिधर्मा इत्यर्थः ।

छ भावप्रकाशिका छ

नन्वस्थूलत्वादीनां सर्वेषां प्रपञ्चप्रत्यनीकतारूपत्वे एकतरवैयर्थ्यमित्याशङ्क्याह (प्रपञ्चप्रत्यनीकमित्यादिना) सर्वैरप्यस्थूलत्वादिभिर्धर्मैः प्रपञ्चप्रत्यनीकत्वं प्रत्याय्यते, निरूप्यनिरूपकयोरभेदोपचारेण च निर्देश इति भावः ।

---

१. बृ० ५-८-८॥ | २. मु० १-१ ५ ॥

द्यास्वनुसन्धेयाः ? उत यत्र श्रूयन्ते तत्रैव– इति । किं युक्तं ? यत्र श्रुतास्तत्रैवेति । कुतः विद्यान्तरस्य रूपभूतानां गुणानां विद्यान्तरस्य रूपत्वे प्रमाणाभावात्, प्रतिषेधरूपाणामेषामानन्दादिवत् स्वरूपावगमोपायत्वाभावाच्च । आनन्दादिभिरवगतस्वरूपे हि ब्रह्मणि स्थूलत्वादयः प्रपञ्चधर्माः प्रतिषिध्यन्ते, निरालम्बनप्रतिषेधायोगात् ॥

एवं प्राप्ते प्रचक्ष्महे– अक्षरधियां त्ववरोधः– इति । अक्षरब्रह्मसम्बन्धिनीनामस्थूलत्वादिधियां सर्वब्रह्म-

---

* श्रुतप्रकाशिका *

किं (मैत्रेयीब्राह्मणे) श्रुतमस्थूलत्वादिकं तत्रैवोपसंहार्यम् ? उत सर्वासु विद्यासु, अस्थूलत्वादीनां किं ब्रह्मासाधारणतया तत्स्वरूपनिरूपकत्वम् ? उत केवलज्ञानानन्दादीनामिति, किमस्थूलत्वादिकं विना शङ्कितकृत्स्नदोषव्यावृत्तिप्रतीतिरस्ति नेति, अस्ति चेत्– केवलज्ञानादीनामेव निरूपकत्वेनास्थूलत्वादेरनुपसंहार्यत्वम्, न चेत्– स्वरूपनिरूपकत्वात् सर्वासूपसंहार्यत्वम्, प्रमाणाभावात्– हेत्वभावात् । वस्तुसामर्थ्यं प्रमाणमाशङ्क्य प्रतिषेधति (स्वरूपेति) स्वरूपावगमोपायत्वाभावं विवृणोति (आनन्दादिभिरिति) लब्धरूपे क्वचित् किञ्चित्तादृगेव निषिध्यत इत्यभिप्रायः ।

(अस्थूलत्वादिधियामवरोध इति) सर्वब्रह्मविद्यास्वस्थूलत्वादिकमनुसन्धेयमित्यर्थः, सामान्यतद्भावाभ्यामिति समुच्चित्यैको हेतुः, सर्वविद्यासु ब्रह्मानुगतं चेत्कथम-

ⵈ भावप्रकाशिका ⵈ

(कि मैत्रेयीब्राह्मणे श्रुतमिति) अत्र मैत्रेयीशब्दो लेखकस्खलनकृतः, गार्गीब्राह्मणे इति पठितव्यम्, (समुच्चित्यैको हेतुरिति) ब्रह्मस्वरूपप्रतीत्यन्तर्भावलक्षणस्तद्भाव एव हेतुः, तत्र तु प्रपञ्चप्रत्यनीकब्रह्मस्वरूपस्य सर्वविद्यानुगतत्वलक्षणं सामान्यं हेतुरिति व्यापारव्यापारिभावापन्नतया सामान्यतु-

विद्यास्ववरोधः—सङ्ग्रहणमित्यर्थः । कुतः ? सामान्यतद्भावाभ्यां— सर्वेष्वपासनेषूपास्यस्याक्षरस्य ब्रह्मणः समानत्वादस्थूलत्वादीनां तत्स्वरूपप्रतीतौ भावाच्च । एतदुक्तं भवति— असाधारणाकारेण ग्रहणं हि वस्तुनो ग्रहणम् । न च केवलमानन्दादि ब्रह्मणोऽसाधारणमाकारमुपस्थापयति, प्रत्यगात्मन्यप्यानन्दादेर्विद्यमानत्वात्, हेयप्रत्यनीको ह्यानन्दादिर्ब्रह्मणोऽसाधारणं रूपम् । प्रत्यगात्मनस्तु स्वतो हेयविरहिणोऽपि हेयसम्बन्धयोग्यताऽस्ति । हेयप्रत्यनीकत्वं च चिदचिदात्मकप्रपञ्चधर्मभूतस्थूलत्वादिविपरीतरूपम् । अतः असाधारणाकारेण ब्रह्मानुसन्दधताऽस्थूलत्वादिविशे-

---

* श्रुतप्रकाशिका *

स्थूलत्वादिगुणानां तत्स्वरूपप्रतीत्यनुबन्धित्वमित्यत्राह ( एतदुक्तमिति ) अत्र विवक्षिता प्रतीतिर्न येन केनचिदाकारेण प्रतीतिः, अपितु व्यावृत्ताकारेण प्रतीतिर्विवक्षिता, तादृशप्रतीत्यन्तर्भावोऽस्थूलत्वादीनामस्त्येवेत्याह ( असाधारणेति ) आकारमुपस्थापयति—स्वरूपमुपस्थापयतीत्यर्थः । हेयसम्बन्धाभावः प्रत्यगात्मनोऽप्यस्ति तत्कथं हेयप्रत्यनीकानन्दादि ब्रह्मणोऽसाधारणं रूपमित्यत्राह ( प्रत्यगात्मनस्त्विति ) ब्रह्मणो हेयप्रत्यनीकत्वमसाधारणमस्तु, तत्रास्थूलत्वादिकं कथमसाधारणमित्यत्राह ( हेयप्रत्यनीकत्वं चेति ) विपरीतरूपं—विरोधिरूपम्, तत्तद्धेयशङ्काव्यावर्तकमित्यर्थः अस्थूलत्वादिविशेषितेति अस्थूलत्वाद्युपेतत्वमुक्तं, स्थूलत्वादिविरोधिशब्दाभि-

* भावप्रकाशिका *

द्भावयोर्हेतुत्वमिति भावः, भाष्ये— स्थूलत्वादिविपरीतरूपम्— इति, ततश्च स्थूलत्वादिषु प्रतिषिद्धेषु हेयप्रत्यनीकत्वं फलतीत्यर्थः, मुण्डकाद्याम्नातैस्सर्वैरपि मिलितैरस्थूलत्वादिभिर्हेयप्रत्यनीकत्वमुपस्थाप्यत इति भावः, ननु निषेधप्रतीतेः निषेधाधिकरणप्रतीतिनिबन्धनत्वादित्यस्य कः परिहार उक्त इति चेत्—

षितज्ञानानन्दाद्याकारं ब्रह्मानुसन्धेयमिति अस्थूल-
त्वादीनामानन्दादिवद्ब्रह्मस्वरूपप्रतीत्यन्तर्भावात्सर्वासु

* श्रुतप्रकाशिका *

लप्य आकारोऽस्थूलत्वादिः— भावान्तरस्यैव अभावशब्दार्थत्वात्, अत एव ह्यस्थू-
लत्वं सुसूक्ष्मशब्देनोक्तं श्रुत्यन्तरे, अस्थूलत्वादिधर्मैर्यथायोग्यं तत्तद्व्यावृत्ति-
रवगन्तव्या, अचक्षुष्ट्वाप्राणत्वादिभिरिन्द्रियाधीनज्ञानप्राणायत्तचेष्टितजीवव्यावृत्तिः,
अनणुत्वसूक्ष्मत्वादिभिर्मुक्तस्यापि व्यवच्छेदः, आनन्त्येन सर्वव्यवच्छेदेऽपि
शङ्कितस्थूलत्वादिव्यवच्छेदस्तु तद्विरोध्यस्थूलत्वादिभिरेव सिद्ध्येदित्यवश्यानुसन्धे-

* भावप्रकाशिका *

शब्दाभावज्ञाने अधिकरणज्ञानस्याऽकारणत्वात्, प्रत्यगात्मव्यावृत्तब्रह्मस्वरूपप्रती-
त्यभावेपि ब्रह्मस्वरूपप्रतीतिमात्रस्य प्रागपि सत्वाच्च नानुपपत्तिः, (अस्थूल-
त्वं सुसूक्ष्मशब्देनोक्तमिति) नचैवम् अह्रस्वमित्युक्ते दीर्घत्वस्य अदीर्घमित्यु-
क्ते ह्रस्वत्वस्य च प्रसङ्ग इति वाच्यम्, नहि दीर्घत्वाभावो ह्रस्वत्वम्,
ह्रस्वत्वाभावो वा दीर्घत्वम्, तथाहि सति गुणक्रियादीनाम् अह्रस्वत्वादी-
र्घत्वाद्यभावप्रसङ्गात्, अपि तु धर्मान्तरमिति नोक्तदोषः, ननु स्थूलत्वादिवि-
रुद्धो धर्मो ज्ञानानन्दत्वादिरेव, नतु तद्व्यतिरिक्तः प्रमाणाभावात्, ज्ञानानन्द-
त्वादिश्च सत्यज्ञानादिवाक्यादेव प्रतिपन्न इति व्यर्थमस्थूलत्वादिप्रतिपादन-
मिति चेन्न, ज्ञानानन्दत्वादिप्रतीतेः स्थूलत्वादिप्रतीतिविरोधित्वाभावेन ज्ञाना-
नन्दत्वादेः स्थूलत्वाद्यभावरूपत्वाभावात्, यस्मिन्प्रतीयमाने यत्प्रतीतिर्न भवति
तस्य तदभावरूपत्वात्, यथा पटत्वप्रतीतिप्रतिबन्धकप्रतीतिविषयस्य घट-
त्वस्य पटत्वाभावरूपत्वम्, आनन्दत्वादिप्रतीतेश्च स्थूलत्वादिप्रतीत्यप्रति-
बन्धकत्वेन स्थूलत्वाभावरूपत्वाभावात्, सत्यपि स्थूलत्वाद्यभावरूपत्वे
अस्थूलत्वाद्युपदेशस्याऽर्थवत्त्वमस्त्येव, गोत्वस्यैव अश्वाद्भेदरूपत्वेपि गौर-
श्वाद्भिन्न इति वाक्यस्य साफल्यदर्शनात्। ननु गोत्वस्य अश्वाद्भेदरू-
पत्वप्रतिपादकतया गौरश्वाद्भिन्न इति वाक्यं सफलमिति चेत्, तर्हि ज्ञाना-
नन्दादेः स्थूलत्वाद्यभावरूपत्वप्रत्यायकतया अस्थूलत्वादिवाक्यमपि सफलमस्तु

ब्रह्मविद्यासु तथैव ब्रह्मानुसन्धेयमिति । गुणानां प्रधानानुवर्तित्वे दृष्टान्तमाह– औपसदवदिति; यथा जामदग्न्यचतूरात्रपुरोडाशिन्युपसद्गुणभूतः सामवेदपठितः "अग्निर्वै होत्रं वेतु" इत्यादिको मन्त्रः

* श्रुतप्रकाशिका *

श्रत्वम्, एतदधिकरणार्थमुपजीव्य पूर्वमानन्दादिष्वमलत्वं च सह पठितम् । औपसदवदिति वक्ष्यमाणदृष्टान्तः कर्मविषयः, दार्ष्टान्तिक तूपासन, तस्मात् दृष्टान्तोपजीव्यमंशमाह (गुणानां प्रधानानुवर्तित्वे इति) जामदग्न्यचतूरात्रं जमदग्निना मुहुरनुष्ठितं चतूरात्रं नाम कर्म, तत्र पुरोडाशद्रव्यकोपसदङ्गभूतः साम-

* भावप्रकाशिका *

ननु एवं ब्रह्मस्वरूपाभिन्नत्वेपि आनन्दत्वास्थूलत्वादेः तदुपदेशसाफल्यमस्तु, किमतिरिक्तेन आनन्दत्वास्थूलत्वादिधर्मजातेन, ततश्च आनन्दत्वास्थूलत्वादीनां ब्रह्मस्वरूपादभिन्नतया सर्वविद्यानुयायित्वमपि सूपपादितमिति चेत्, इष्टत्वात्, तर्हि सर्वाधारत्वसर्वशेषित्वादीनामपि स्वरूपरूपतया सर्वविद्यानुयायित्वं कुतो न भवेदिति चेन्न, सर्वविशेषितमाधारत्वं न स्वरूपरूपम्, तद्घटकपदार्थानां सर्वमुक्तौ वा प्राकृतप्रलये वा अभावेन इतरेषां च विकारशालितया तद्घटितमाधारत्वमपि न सततैकरूपमिति न धर्मिस्वरूपाभिन्नमिति वैषम्यात्, 'आनन्दादयः प्रधानस्य' इत्यधिकरणे अस्यापि पक्षस्य प्रदर्शितत्वेनाऽस्य विरुद्धत्वाभावादिति सर्वमवदातम्, नन्वस्थूलत्वादीनाम् उपसंहारे 'निष्कलं निष्क्रियं शान्तम्' इत्यादिशाखान्तरस्थितानामपि उपसंहारप्रसङ्गः, निषेध्यानामानन्त्यादुपसंहाराशक्तिश्चेति चेत्, अस्थूलमित्यादि अदीर्घमित्यन्तेन 'अवाय्वनाकाश'मित्यनेन च दोषावहशरीरदोषनिषेधः, 'अचक्षु'रित्यादिना इन्द्रियनिषेध इत्यादिरूपेण परिपूर्णस्य शरीरेन्द्रियादिदोषनिषेधस्य अस्थूलादिवाक्ये मुण्डकवाक्ये च श्रवणात् तदुपसंहारे च नान्यापेक्षाऽस्तीति आनन्त्यदोषपरिजिहीर्षयैव सूत्रे अक्षरग्रहणं कृतमिति नानुपपत्तिः (जमदग्निना मुहुरनुष्ठित इति) सकृदनुष्ठानस्य सर्वसाधारण्यात्

× अन्त्राक्षरमुद्रिते ग्रन्थाद्यु–इति पाठ., औचित्य चिन्त्यम् ।

प्रधानानुवर्त्तितया याजुर्वैदिकेनोपांशुत्वेन प्रयुज्यते, तदुक्तं प्रथमे काण्डे "गुणमुख्यव्यतिक्रमे तदर्थ- त्वान्मुख्येन वेदसंयोगः" इति ॥ ३३ ॥

---

* श्रुतप्रकाशिका *

वेदपठितो मन्त्रः 'उच्चैः साम्ना' इति वचनात् सामवेदपठितत्वेन तस्य मन्त्रस्यो- च्चैर्गाने प्राप्तेपि 'उपांशु यजुषा' इत्युपांशुपठितव्ययजुर्वेदोक्तोपसत्कर्मशेषत्वेन तदनु- वर्त्तित्वादुपांशुप्रयोगः प्राप्त इत्यर्थः । ( गुणमुख्यव्यतिक्रम इति ) व्यतिक्रमो विरोधः

* भावप्रकाशिका *

मुहुरित्युक्तम्, 'जामदग्न्यं पुष्टिकामस्तस्य पुरोडाशिन्य उपसदः' इति जाम- दग्न्यस्य चतूरात्रस्याहीनविशेषस्य पुरोडाशिन्य उपसदो विहिताः, तत्र एक- कपालादिद्वादशकपालान्तपुरोडाशद्रव्यकाणां द्वादशानां यागानाम् 'अग्नेर्वै होत्रम् वैनध्वरम्' इत्याद्याः स्वाहान्ताः द्वादश होममन्त्राः समाम्नाता इत्यर्थः ( उच्चैः साम्नेति वचनादिति ) उच्चैस्साम्नेत्यस्याऽयमर्थः— सामशब्द उपक्रमाधिकरणन्यायेन मन्त्रब्राह्मणसमुदायात्मकसामवेदपरः, ततश्चायमर्थः सामवेदेन यत्क्रियते यद्विधीयते तस्योच्चैस्त्वं धर्म इत्यर्थः, ततश्चैषामपि मन्त्राणां सामवेदे उत्पन्नत्वेन उत्पत्तेरपि विधिरूपत्वेन सामवेदविहितत्वात् तन्नि- बन्धनमुच्चैस्त्वं प्राप्तमित्यर्थः, सामवेदे पठितत्वेन सामवेदविहितत्वेनेत्यर्थः, ( उच्चैर्गान इति ) उच्चैरुच्चारण इत्यर्थः, एषां होममन्त्राणां गानस्याप्राप्ते- रिति द्रष्टव्यम्, उपांशु पठितव्यं यद्यजुर्वेदविहितं उपसत्कर्मेत्यर्थः, उपांशु यजुषेत्यस्यापि पूर्वोक्तन्यायेन यजुर्वेदेन यद्विधीयते तदुपांशु कर्तव्यम्, तस्यो- पांशुत्वं धर्म इत्यर्थः, ततश्चोपसदोपि यजुर्वेदविहिततया तत्र च स्वरस्योपां- शुत्वस्य साक्षादनुष्ठातुमशक्यत्वात्, आनर्थक्यतदङ्गन्यायेन तदङ्गभूतेषु मन्त्रेषूपां- शुत्वं निविशते, ततश्चोपांशुपठितव्यत्वं मन्त्रद्वारेण लभ्यते, ततश्चोपांशुत्वं मन्त्र- निष्ठमपि उपसदङ्गम्, उच्चैस्त्वं तु मन्त्राङ्गम्, ततश्च तेषु मन्त्रेषु सामवेद- विहितमन्त्रधर्मभूतस्य उच्चैष्ट्वस्य यजुर्वेदविहितोपसद्धर्मभूतस्योपांशुत्वस्य च प्रसक्तौ प्रधानधर्मेण उपांशुत्वेन तदङ्गधर्मभूतमुच्चैष्ट्वं बाध्यत इत्यर्थः । ( गुणमुख्यव्यतिक्रमे इतीति ) गुणमुख्ययोर्मन्त्रोपसदोर्व्यतिक्रमे

नन्वेवं सर्वासु ब्रह्मविद्यासु ब्रह्मण एव गुणित्वाद् गुणानां च प्रधानानुवर्त्तित्वात् "सर्वकर्मा सर्वगन्धः सर्वरसः" इत्यादेर्गुणजातस्य प्रतिविद्यं व्यवस्थितस्याप्यव्यवस्था स्यात्तत्राह—

इयदामननात् ॥ ३४ ॥

आमननम्—आभिमुख्येन मननम्—अनुचिन्तनम्। आमननाद्धेतोरियदेव गुणजातं सर्वत्रानुसन्धेयत्वेन

---

* श्रुतप्रकाशिका *

यथा प्रकरणान्तराधीतानामपि प्रधानानुवर्त्तित्वं दृश्यते, तथा प्रकरणान्तराधीतानामप्यस्थूलत्वादिधर्माणां प्रधानभूतधर्म्यनुवृत्तिरुपपन्नेत्यर्थः । अयं दृष्टान्तः आनन्दादेरपि तुल्य इत्यभिप्रेतः ॥ ३३ ॥

अनन्तरसूत्रशङ्कामाह ( नन्वेवमिति ) अस्थूलत्वाद्यनेकगुणानां बहुशाखोक्तानां सर्वविद्यानुगतत्वे तेषां बाहुल्यात् प्रधानानुवर्त्तितया प्राप्तानां सर्वकर्मत्वादीनां चानन्त्यादुपसंहाराशक्तिः स्यादिति चाभिप्रायः ।

इयदामननात् ॥ ३४ ॥ सूत्रस्याक्षरार्थमाह ( आमननमित्यादिना ) तात्पर्य-

* भावप्रकाशिका *

स्वस्ववेदविहितस्वरप्राप्त्या विरोधे सति मुख्येन प्रधानानुसारेण वेदसंयोगः स्वरविधायकवेदसम्बन्धः प्रधानविधिविधेयत्वादङ्गानामित्यर्थः, अत्र तु शबरस्वामिना न्यायसाम्यादन्यदुदाहरणं दर्शितम्, अस्त्याधानं यजुर्वेदविहितम् 'य एवं विद्वानग्निमाधत्ते' इति, तदङ्गत्वेन 'वारवन्तीयं गायति' इत्यादिना सामवेदे सामानि विहितानि, तत्र सामसु सामवेदविहितत्वनिबन्धनोच्चैष्ट्वस्य प्राप्तिं पूर्वपक्षीकृत्य आधानस्य प्रधानस्य याजुर्वैदिकतया तद्धर्मत्वादुपांशुत्वस्य, तेनोच्चैष्ट्वं बाध्यते, ततश्च वारवन्तीयादिसामसु उपांशुत्वं प्रयोक्तव्यमिति सिद्धान्तितम्, न तूच्चैष्ट्वमभिप्रेतमिति, नचानेन तस्य गतार्थता शङ्कनीया, तस्यैव न्यायस्य प्रपञ्चनं क्रियत इत्युक्तत्वात् ॥ * ॥

प्राप्तम्; यदस्थूलत्वादिविशेषितमानन्दादिकं, येन गुण-जातेन विना ब्रह्मस्वरूपस्येतरव्यावृत्तस्यानुसन्धानं न सम्भवति; तदेव सर्वत्रानुवर्त्तनीयम्, तच्चेयदेवेत्यर्थः । इतरे तु सर्वकर्मत्वादयः प्रधानानुवर्त्तिनोऽपि चिन्त-नीयत्वेन प्रतिविद्यं व्यवस्थिताः ॥ ३४ ॥

अक्षरध्यधिकरणं समाप्तम् ॥१४ ॥

* श्रुतप्रकाशिका *

माह ( येनेति ) ब्रह्मणो व्यावृत्ताकारानुसन्धानाय प्राप्तं गुणजातमियदेवेत्यर्थः ।

अत्र परे तु 'सामान्यतद्भावाभ्यां' प्रतिषेधमुखेन प्रतिपादनप्रकारस्य समानत्वादक्षरस्य ब्रह्माभिन्नतया प्रत्यभिज्ञानाच्चेति योजयन्ति, ततोऽपि वरमुक्तार्थपरत्वं निदर्शनानुगुण्यात्, अङ्गानां प्रधानानुवर्त्तित्वे हि निदर्शनोपन्यासः, भावाभावरूपधर्मविषयत्वात् 'आनन्दादयः' इत्यनेन न पौनरुक्त्यमित्याहुः, तदयुक्तम्, सत्यादिवाक्यानामतद्व्यावृत्तिपरत्वाभ्युपगमात्, तत्रापि स्वरूपातिरिक्तव्यावृत्तिरूपधर्मानभ्युपगमात् सकलेतरव्यावृत्तस्वरूपस्य सत्यादिवाक्यप्रतिपन्नस्य व्यवच्छेद्यविशेषव्यावृत्तिप्रतिपत्तौ प्रयोजनाभावाच्च । न हि पांसुराशेर्विविक्तस्य रत्नस्य पुनः पुनः प्रत्येकपांसुव्यतिरेचने किञ्चित्प्रयोजनम् । 'ऋतं पिबन्तौ' 'द्वा सुपर्णा' इति वाक्ययोर्विद्याभेदाभेदविषयम् 'इयदामनना'दिति सूत्रमधिकरणा-

❀ भावप्रकाशिका ❀

'इयदामनना'दिति सूत्रमपि 'इतरे त्वर्थसामान्यात्' इत्यस्यैव प्रपञ्चः( परे त्वित्यादि ) ( समानत्वादिति ) सर्वविद्यापेक्षितत्वेन समानत्वादित्यर्थः ( अङ्गानां प्रधानानुवर्तित्वे हीति ) त्वन्मते निर्भेदतया अङ्गप्रधानभावाभावादिति भावः, ( न पौनरुक्त्यमित्याहुरिति ) सिद्धस्याऽपि प्रपञ्चनस्य बहुशश्शास्त्रेषु दर्शनादिति भावः ( ऋतं पिबन्ताविति ) अयं मन्त्रः कठवल्लीगतः 'द्वा सुपर्णा' इति मन्त्रस्तु मुण्डकश्वेताश्वतरगत इति द्रष्टव्यम्, ( इयदामननादिति सूत्रमिति ) इयतः द्वा सुपर्णाविति प्रतिपाद्यस्य द्वित्वसंख्यापेक्षितस्याभेदेनामनना-

* श्रुतप्रकाशिका *

न्तरमाहुः, उभयोर्भोक्तृत्वमेकत्र, एकस्य भोक्तृत्वमन्यस्य चाभोक्तृत्वम् अन्यत्र इति विद्याभेदमुक्त्वा छत्रिन्यायेनाविरोधात् जीवोपादानस्य तादात्म्यप्रतिपादनार्थत्वाच्च रूपाभेदाद्विद्यैक्यमित्युक्तम्, तदयुक्तं- छत्रिन्यायादिभिरभोक्तृत्वस्य 'गुहां प्रविष्टावात्मानौ'वित्यत्र सिद्धत्वात्, सूत्राक्षराणां तदसाधारणत्वाभावाच्च, इयच्छब्दोऽपि देशकालस्वरूपगतेयत्तासाधारणः । किञ्च - यदा

* भावप्रकाशिका *

दिति सूत्रार्थः (छत्रिन्यायेनाऽविरोधादिति) 'ऋतं पिबन्तौ' वित्यत्र पिबच्छब्दः पातृत्वशून्ये परमात्मनि छत्रिन्यायेन प्रयुक्त इत्यर्थः, वस्तुतस्तु अनयोर्मन्त्रयोः पौर्वापर्यपर्यालोचनायां केवलपरमात्मपरत्वमेव प्रतीयते, नतु जीवेन सद्वितीयत्वमपि, कथं तर्हि जीवोपादानमिति चेन्न, तादात्म्यविवक्षया परमात्मना अभेदं जीवस्य दर्शयितुं जीवोऽनूद्यते, परमात्मविद्यायाश्च निर्भेदविषयत्वात् भेदाभेदविचारस्यापि न प्रसक्तिरिति यदुक्तं तदनुभाषते (जीवोपादानस्येति) (इयच्छब्दो हीति) इदं परिमाणमस्येत्यर्थे परिमाणे वतुप् 'किमिदम्भ्याम्वो घः' इति वतुप् वस्य च घः, अत्र च परिमाणशब्दः प्रस्थादिवचनः, 'ऊर्ध्वमानं किलोन्मानं परिमाणन्तु सर्वतः । आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः' इति श्लोकवार्तिककारेण उन्मानपरिमाणप्रमाणसंख्यानां परस्परभेदः प्रतिपादितः, तुलादावारोप्य येन द्रव्यान्तरपरिच्छिन्नगुरुत्वेन पलादिशब्दवाच्येन पाषाणादिना सुवर्णादेः गुरुत्वमुन्मीयते तद्गुरुत्वमानमुन्मानम्, आयाममानं प्रमाणम्, आयामो दैर्घ्यम्, स येन मीयते तदित्यर्थः, एतच्च क्वचित्तिर्यगवस्थितस्य वस्तुनो भवति- यथ वस्त्रादेर्हस्तादिः, क्वचिदूर्ध्वाधोदिगवच्छिन्नस्य भवति- यथा हास्तिनमुदकमूरुद्वयसमिति, आरोहपरिणाहमानं परिमाणम्, आरोहः-उच्छ्रायः परिणाहो- विस्तारः ताभ्यामारोहपरिणाहाभ्यां स्वगताभ्यां येन काष्ठादिनिर्मितेन प्रस्थादिशब्दवाच्येन व्रीह्यादि परिमीयते तत्परिमाणमित्यर्थः, परिस्सर्वतोभावे, सङ्ख्या बाह्या तु सर्वतः, पूर्वोक्तादुन्मानादेः सर्वस्माद्बाह्या, तत्रानन्तर्भावादिति श्लोकार्थः, ततश्च द्वित्वसंख्यायाः परिमाणादिभिन्नत्वेन तस्यार्थस्याऽसम्भवात्, तावती रज्जुः तावानध्वेत्यत्र तत्प्रमाणके तावच्छब्दप्रयोगवत् तत्स

* श्रुतप्रकाशिका *

पैङ्गिश्रुत्यनुसारेण सत्त्वद्वितीयप्रत्यगात्मपरत्वं द्वासुपर्णेति वाक्यस्याभिमतम् , तदा द्वयोरपि जीवसद्वितीयपरमात्मपरत्वं व्याहतम् , जीवसद्वितीयपरमात्मपरत्वेऽपि पौनरुक्त्यमुक्तम् । ननु न पौनरुक्त्यम् , तत्प्रपञ्चनार्थो ह्ययमारम्भ इति चेत्— न, अधिकरणान्तरनिरूप्यार्थानामिहाप्रपञ्चनात् , अस्य तेभ्यो वैषम्याभावाच्च । किञ्च इयदिति सौत्रं पदं च न द्वित्वसङ्ख्यया व्यवच्छेदमेकान्ततोऽवगमयति, ततश्च 'विश्वमेवेदं पुरुषः' 'महान् प्रभुर्वै पुरुषः' इत्यादिषु जगदाकारव्यवच्छेदेन विधेक्यपरं सूत्रं किं न स्यात्, यदि संख्याव्यवच्छेदकत्वमेवाभिमतं तर्हि 'त्रिविधं ब्रह्म मे तत्' 'चतुष्पात् ब्रह्म' इत्यादिसङ्ख्यान्तरावच्छिन्नब्रह्मपरवाक्यविषयं किं न स्यात्, सर्वत्र भेदाभेदहेतवश्च उत्प्रेक्षितुं शक्याः, अतो यथा कथंचिन्निर्वहणात् अपेक्षितार्थपरत्वं साधिष्ठम् । सूत्राक्षरानैकान्त्यपुनरुक्तिभ्यामेवापरेषां पक्षेऽप्यधिकरणभेदो व्युदस्तः । अन्ये तु 'सम्भूतिं च विनाशं च यस्तद्वेदोभयं सह । विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते' इति सप्रपञ्चब्रह्मोपासनं प्रपञ्चविनाशावस्थसन्मात्रब्रह्मोपासनं चेति द्विविधयोरपि ब्रह्मोपासनयोः समुच्चयमाहुः । तत्र प्राणाद्युपासनं च सम्भूतिरेव जगदेकदेशसम्बन्धित्वात् 'अस्थूल'मित्यादिभिर्विहितं विनाशोपासनं प्राणादिसंभूतिभिरपि किं समुच्चीयते नेति चिन्तायामविशेषेण 'सम्भूतिं च विनाशं चे'ति श्रुतत्वाद्विनाशधर्मिणो ब्रह्मणः प्राणादिसम्भूतिष्वभावेऽपि तत्र धर्मिणो ब्रह्मणः

❀ भावप्रकाशिका ❀

ङ्ख्याकेऽपि तावच्छब्दप्रयोगः सादृश्यादिनिबन्धन औपचारिकः , ततश्चेदंसङ्ख्याके इयच्छब्दप्रयोगस्य त्वन्मते औपचारिकत्वेन वक्तव्यत्वात् , तादृशस्य प्रयोगस्य देशकालादिसाम्यमादाय प्रयोगस्सम्भवतीति, लोके हि तावानयमित्युक्ते स यावन्तं देशं व्याप्नोति तावन्तमसावपि , स यत्सङ्ख्याकः तत्सङ्ख्याकः स यत्कालव्यापि तत्कालव्यापीत्यपि प्रतीतेरविशेषादित्यर्थः ( पैङ्गिश्रुत्यनुसारेणेति ) 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति सत्वम् 'अनश्नन्नन्यो अभिचाकशीति'इति ज्ञः, तावेतौ सत्वक्षेत्रज्ञाविति अन्तःकरणजीवपरतया व्याख्यातत्वादित्यर्थः ( पौनरुक्त्यमुक्तमिति ) 'गुहां प्रविष्टा' वित्यनेनेति शेषः, (द्वित्वसङ्ख्याव्यवच्छेदमिति) सङ्ख्याव्यवच्छिन्नमित्यर्थः, एवमुत्तरत्रापि द्रष्टव्यम् ( अन्ये त्वित्यादि ) सम्भूतिः--

* श्रुतप्रकाशिका *

समाकृष्योपासनसम्भवात्, सर्वाभिः सम्भूतिभिरपि विनाशः समुच्चीयत इति पूर्वपक्षं कृत्वा गुणिनो गुणानुरोधित्वाभावात् गुणानुरोधेन गुणिनो ब्रह्मणस्समाकर्षायोगात्, गुणानामेव गुण्यनुरोधित्वात् ब्रह्मणोऽसद्भावेपि विनाशस्याप्ययोगात्, ब्रह्मसम्भूतिभिरेव विनाशः समुच्चीयते— इति वर्णयन्ति, तदयुक्तम्—सप्रपञ्चनिष्प्रपञ्चब्रह्मोपासनसमुच्चयस्य प्रमाणविरुद्धत्वात् अक्षरविद्याशाण्डिल्यविद्यादीनां श्रुतिस्वारस्यादन्योन्यनिरपेक्षोपायत्वं हि प्रतीयते, समुच्चयश्रुतिबलात्तासामन्यसापेक्षत्वं कल्प्यत इति चेत्— न, कल्पकस्यार्थान्तरविषयत्वेनान्यथासिद्धत्वात्, अर्थान्तरस्य स्वारसिकतया विद्यान्तरस्वारस्यानुगुणतया चाप्रकम्प्यत्वात्, सम्भूतिशब्दः सम्भवत्यनेनेति सम्भूतिरिति व्युत्पत्त्या मार्गपरः, 'एतमितः प्रेत्याभिसम्भविताऽस्मि' 'ब्रह्मलोकमभिसम्भवानी' ति च प्रयोगात्, अभिसम्भविताऽस्मीति उत्तमपुरुषेण 'इति यस्य स्यादद्धा न विचिकित्सा' इत्यनेन च मार्गचिन्तायाः कार्यत्वस्य सूचितत्वाच्च, विनाशशब्दश्च सुकृतदुष्कृतविनाशविषयः, अतो मार्गस्य कर्मविनाशस्य च चिन्तनं विद्याङ्गत्वेन समुच्चित्य विधीयते, न च सम्भूतिविनाशशब्दयोः सप्रपञ्चनिष्प्रपञ्चब्रह्मणि स्वारस्यम्, नाप्यनन्यथासिद्धप्रयोगः, यतः समुच्चयो न प्रामाणिकः, अत एव संशयाभावादनारम्भणीयता । 'इयदामननात्' इत्यत्र च सूत्राक्षराणामनैकान्त्यं पूर्ववत्, 'ऋतं पिबन्तौ' 'द्वा सुपर्णा' इति वाक्यावगतयोर्भोगानशनयोर्मिथो विरोधान्न सम्भूतिषु समुच्चय इति विचार्य भोगस्य हविर्विषयतया, अनशनस्य कर्मफलविषयतया वा अन्तर्यामिपरमात्मविषयतया वा विरोधाभावात् सम्भूतिषु समुच्चय इति सिद्धान्तवर्णनं च सम्भूतिविनाशसमुच्चयाप्रामाणिकत्वादेवानुपपन्नम्, भोगानशनयोर्विरोधस्तु छत्रिन्यायेन वा प्रयोज्यप्रयोजकभावेन वा ऋतपानस्य विरोधाभावात् पूर्वमेव

* भावप्रकाशिका *

प्रपञ्चात्मना उत्पत्तिः, सम्भूतिविनाशौ— सप्रपञ्चत्वनिष्प्रपञ्चत्वे इत्यर्थः ( ब्रह्मसम्भूतिभिरेव विनाशस्समुच्चीयत इति ) यत्र सप्रपञ्चत्वलक्षणसम्भूतिमत्तया ब्रह्मण उपास्यत्वं तत्रैव निष्प्रपञ्चत्वरूपविनाशवत्तया ब्रह्मण उपास्यत्वम्, न तु प्राणादिसम्भूतावित्यर्थः ( अक्षरविद्याशाण्डिल्यविद्यादीनामिति ) अक्षर-

अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ ३५ ॥

१५अधिकरणम्

बृहदारण्यके उपस्तप्रश्न एवमाम्नायते "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्व" इति । तस्य प्रतिवचनं [1]"यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानिति स त आत्मा" इत्यादि । अतुष्टेन तेन पुनः पृष्ट आह [2]"न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुयाः न मतेर्मन्तारं मन्वीथाः न विज्ञातेर्विज्ञातारं विजानीया एष त आत्मा सर्वान्तरोऽतोऽन्यदार्तम्" इति । तथा तदनन्तरं कहोलप्रश्ने चैवमाम्नायते "यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा

* श्रुतप्रकाशिका *

परिहृतः, अन्यथा तस्यापरिहृतत्वे 'गुहां प्रविष्टा' वित्याद्यधिकरणसिद्धान्तदौस्स्थ्यप्रसङ्गात्, अतोऽधिकरणभेदोऽनुपपन्न इति ॥ ३४ ॥

अक्षरध्यधिकरणं समाप्तम् ॥

अन्तरा भूतग्रा(म)वत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ ३५ ॥ हेयप्रत्यनीकत्वं ब्रह्मणोऽसाधारणं चेत्— अशनायाद्यतीतत्वविशिष्टं ब्रह्म स्यात्, प्राणितृत्वादिविशिष्टस्तु जीवः स्यादिति शङ्कया सङ्गतिः । उपस्तप्रश्नशब्देन तत्प्रकरणं विवक्षितम् , किमुषस्तकहोलप्रश्नप्रतिवचनश्रुत्योर्विद्याभेदः

ॐ भावप्रकाशिका ॐ

विद्या निष्प्रपञ्चविद्या शाण्डिल्यविद्या सप्रपञ्चविद्येति भावः ॥ ॐ ॥

इति अक्षरध्यधिकरणम् ।

उपस्तप्रश्न एव प्रश्नप्रतिवचनयोरनाम्नानादाह (तत्प्रकरणं विवक्षितमिति)

१. बृ० ५-४-१ ॥ | २. बृ० ५-४-२ ॥

सर्वान्तरः तन्मे व्याचक्ष्व" इति । प्रतिवचनं च "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति एवं हैतमात्मानं विदित्वा ब्राह्मणः पुत्रैषणायाश्च वित्तैषणायाश्च" इत्यादि "अतोऽन्यदार्त्तम्" इत्यन्तम् । तत्र संशय्यते—किमनयोर्विद्याभेदोऽस्ति ? नेति । किं युक्तम्, भेद इति, कुतः ? रूपभेदात् । प्रतिवचनभेदाद्रूपं भिद्यते । प्रश्नस्यैकरूप्येऽपि प्रतिवचनप्रकारो हि भेदेनोपलभ्यते । पूर्वत्र प्राणनादीनां कर्त्ता सर्वान्तरात्मत्वेनोच्यते ; परत्राशनायापिपासा-

* श्रुतप्रकाशिका *

उत विद्यैक्यम् ? किं पूर्वत्र जीव उपास्योऽन्यत्र परः ? उतोभयत्र पर एवेति, किमत्र सर्वान्तरत्वप्राणितृत्वे देहादिजाग्रदाद्यवस्थापेक्षे ? उतानवच्छिन्ने, 'न दृष्टेर्द्रष्टार' मिति दृष्टिव्यतिरिक्तत्वनिषेधः ? उत श्रवणादिकर्त्तुर्जीवस्य मन्तव्यत्वनिषेध इति, यदा दृष्टिरूपताव्यतिरेकनिषेधः, तदा तथात्वस्य जीवे सम्भवात् सर्वान्तरत्वप्राणितृत्वयोरप्यापेक्षिकत्वेन पूर्वत्र जीव उपास्य इति विद्या भिद्यते, यदा श्रवणादिकर्त्तुरुपास्यत्वनिषेधः, तदा सर्वान्तरत्वप्राणितृत्वयोरप्यनवच्छिन्नतया पूर्वत्रापि पर एवोपास्य इति विद्यैक्यमिति, रूपभेदादिति कथमुच्यते— प्रश्नो ह्येकरूप इत्यत्राह (प्रतिवचनभेदादिति) प्रतिवचनप्रकारेण हि प्रश्नार्थो ज्ञायत इति भावः । ततः

* भावप्रकाशिका *

प्रश्नप्रतिवचनसन्दर्भो विवक्षित इत्यर्थः (सर्वान्तरत्वप्राणितृत्वे इति) सर्वान्तरत्वं देहाद्यपेक्षं प्राणितृत्वं जाग्रदाद्यवस्थापेक्षमित्यर्थः, अपरोक्षात् ब्रह्म— अपरोक्षं ब्रह्मेत्यर्थः, कहोलप्रश्ने 'यदेव साक्षात् ब्रह्म' इति प्रक्रान्तस्याऽनुवृत्त्यर्थस्यैवकारस्य श्रवणात् कथं पूर्वपक्ष इति न वाच्यम्, यदपरोक्षादेव नतु कदाचिदपि परोक्षमित्येवं योजनासम्भवेन एवकारस्य प्रकृतानुवृत्त्यर्थत्वाभावादिति पूर्वपक्षाभिप्रायात्, सिद्धान्ते तु व्यवहितान्वयदोषप्रसङ्गात् नेयं साध्वी यो-

दिरहितः । अतः पूर्वत्र प्राणिता देहेन्द्रियबुद्धिमनः- प्राणव्यतिरिक्तः प्रत्यगात्मोच्यते ; परत्र तु तदति- रिक्तोऽशनायापिपासादिरहितः परमात्मा । अतो रूपं भिद्यते । भूतग्रामवतश्च प्रत्यगात्मनस्तस्य भूतग्रामस्य सर्वस्यान्तरात्मत्वेन सर्वान्तरत्वमप्युपप- न्नम् । यद्यपि प्रत्यगात्मनः सर्वान्तरत्वं भूतग्रामात्रापेक्षत्वेनापेक्षिकम्, तथाऽपि तदेव ग्राह्यम्, अ- न्यथा मुख्यान्तरात्मपरिग्रहलोभात्परमात्मस्वीकारे प्रतिवचनभेदो नोपपद्यते । प्रतिवचनं हि पूर्वत्र प्रत्यगा- त्मविषयं, परमात्मनः प्राणितृत्वापानितृत्वाद्यसम्भवात्, परं च परमात्मविषयम्, अशनायापिपासाद्यतीत- त्वात् । तादिदमाशङ्कते—अन्तरा भूतग्रामवत्स्वात्मनोऽ- न्यथाभेदानुपपत्तिरिति चेत्—इति, अन्तरा—सर्वान्तरा- त्मत्वेन प्रथमप्रतिवचनं भूतग्रामवत्स्वात्मनः—भूतग्राम-

---

* श्रुतप्रकाशिका *

किमित्यत्राह ( अत इति ) सर्वान्तरत्वं कथमित्यत्राह—( भूतग्रामवतश्चेति ) आत्मशब्दस्य परमात्मवाचित्वव्यावृत्त्यर्थं स्वात्मन इत्युक्तम्, स्वमेवात्मा स्वात्मा, सर्वान्तरत्वमप्यापेक्षिकमस्य सम्भवतीति दर्शयितुं भूतग्रामवच्छब्दः प्रयुक्तः, ( यद्यपीत्यादि ) आपेक्षिकं सम्भवतु नाम, तथाऽप्यस्वरसमिति भावः । परिहरति ( तथाऽपीति ) अनेकपदविरोधेनैकपदस्वारस्यमनुपपन्नमित्यर्थः ।

* भावप्रकाशिका *

जना, अपि तु प्रकृतानुवृत्त्यर्थ एवकार इत्यभिप्राय इति द्रष्टव्यम्, भाष्ये अन्तरा सर्वान्तरात्मत्वेनेति, अन्तरशब्दाद्भावप्रधानात् ' सुपां सुलु ' गिति तृती- येकवचनस्य आकारादेशे रूपमिति सर्वान्तरात्मत्वेनेत्यर्थो लभ्यते, प्रथमं प्रति-

वान्–तदन्तरः स्वात्मा–प्रत्यगात्मा सर्वान्तर इत्युच्यते इत्यर्थः। अन्यथा "यः प्राणेन प्राणिति" "योऽशनायापिपासाद्यतीतः" इति प्रतिवचनभेदानुपपत्तिरिति चेत्—

अत्रोत्तरं नेति। न विद्याभेद इत्यर्थः। उभयत्र परविषयत्वात्प्रश्नप्रतिवचनयोः। तथा हि– "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" इति प्रश्नस्तावत्परमात्मविषय एव, ब्रह्मशब्दस्य परमात्मासाधारणत्वेऽपि प्रत्यगात्मन्यपि कदाचिदुपचरितप्रयोगदर्शनात्तद्व्यावृत्त्या परमात्मप्रतिपत्त्यर्थं "यत्साक्षाद्ब्रह्म" इति विशेषणं क्रियते। अपरोक्षत्वमपि सर्वदेशसर्वकालसम्बन्धित्वम् "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यनन्तत्वेनावगतस्य परमात्मन एवोपपद्यते। सर्वान्तरत्वमपि "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः" इत्यारभ्य "य आत्मनि तिष्ठन्नात्मनोऽन्तरः" इति सर्वान्तर्यामिणः

---

* श्रुतप्रकाशिका *

शङ्काया अनुत्सूत्रत्वमाह (तदिदमिति)। सूत्रखण्डं व्याचष्टे (अन्तरेत्यादिना) सर्वान्तरत्वेन प्रतिवचनं भूतग्रामवत्स्वात्मसम्बन्धीत्यर्थः।

भूतग्रामवत्स्वात्मन इति पूर्वपक्षमुक्त्वा नेत्युक्ते परस्येत्यर्थादुक्तं भवतीत्यभिप्रयन्नार्थं हेतुमाह (उभयत्रेति) कथमित्यपेक्षायां तं विवृणोति (तथा हीति) साक्षाद्ब्रह्मशब्दवाच्यत्वमेको हेतुः। हेत्वन्तरमाह (अपरोक्षत्वमपीति)

* भावप्रकाशिका *

वचनमिति चाध्याह्रियत इत्यर्थः, केचित्तु अन्तराशब्दोऽयं मध्यवचन प्रश्नयोर्मध्ये यत्प्रतिवचनमित्यर्थः, ततश्च प्रथमस्य ग्रहणं भविष्यति, ततश्चा

परमात्मन एव सम्भवति । प्रतिवचनमपि तथैव परमात्मविषयम्, "यः प्राणेन प्राणिति" इति निरुपाधिकं प्राणनस्य कर्तृत्वं परमात्मन एव, प्रत्यगात्मनः सुषुप्तौ प्राणनं प्रति कर्तृत्वाभावात् । एवमजानतोषस्तेन प्राणने कर्तृत्वमात्रमुक्तं मन्वानेन प्रत्यगात्मनोऽपि साधारणत्वं प्रतिवचनस्य मत्वा अतुष्टेन पुनः पृष्टस्तं प्रति प्रत्यगात्मनो व्यावृत्तं निरुपाधिकत्वेन प्राणनस्य कर्त्तारं परमात्मानमाह– "न दृष्टेर्द्रष्टारं पश्येः" इत्यादिना । इन्द्रियाधीनानां दर्शनश्रवणमननविज्ञानानां कर्तारं प्रत्यगात्मानं प्राणनस्य कर्तृत्वेनोक्त इति न मन्वीथाः, तस्य सुषुप्तिमूर्च्छादौ प्राणनादेरकर्तृत्वात् । "को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्" इति सर्वप्राणिप्राणनहेतुत्वं हि परमात्मन एव अन्यत्र श्रुतम् । अतः पूर्वप्रश्नप्रतिवचने परमात्मविषये, एवमुत्तरे अपि, अशनायाद्यतीतत्वस्य परमात्मासाधारण-

* श्रुतप्रकाशिका *

देशकालसन्निकर्षो ह्यपरोक्ष्ये विद्यते, तस्माद्ब्रह्मणोऽपरोक्षत्वं नाम सर्वदेशसर्वकालसन्निहितत्वमित्यर्थः । ( निरुपाधिकं प्राणनस्य कर्तृत्वमिति ) प्राणयितृत्वं विवक्षितम्, निरुपाधिकशब्देन जीवव्यावृत्तिः । स हि कर्मानुगुणदेहेन्द्रियादीनामधिष्ठातृत्त्वेन कदाचित् प्राणयिता, निरुपाधिकप्राणयितृत्वं परमात्मन एवेत्युपपादयति ( प्रत्यगात्मन इति ) पुनः प्रश्नस्यार्थान्तरविषयत्वशङ्कां परिहरति ( एवमिति ) ( इन्द्रियाधीनानामिति ) 'दृष्टेर्द्रष्टार'मिति व्यपदेशः ओदनपाकं पचतीतिवदिति भावः । परमात्मनः सर्वदा सर्वप्राणिप्राणयितृत्वे श्रुतिमाह ( को ह्येवान्यादिति ) ( उत्तरे अपि ) कहोलप्रश्न-

त्वात। उभयत्र "अतोऽन्यदार्त्त"मित्युपसंहारश्चैक-रूपः। प्रश्नप्रतिवचनावृत्तिस्तु कृत्स्नप्राणिप्राणनहेतोः परस्य ब्रह्मणोऽशनायाद्यतीतत्वप्रतिपा[illegible] त्र दृष्टान्तमाह– उपदेशवदिति। यथा सांद्ग्य[illegible]म् "उत तमादेशमप्राक्ष्यः" इति प्रक्रान्ते सदुपदेशे "भगवां-स्त्वेव मे तद्ब्रवीत्विति" "भूय एव मा भगवान् विज्ञापय"त्विति प्रश्नस्य "एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्य"मिति प्रतिवचनस्य च भूयो भूय आवृत्तिः सतो ब्रह्मणः तत्तन्माहात्म्यविशेषप्रतिपादनाय दृश्यते; तद्वत्। अत एकस्यैव सर्वान्तरभूतस्य ब्रह्मणः कृत्स्न-प्राणिप्राणनहेतुत्वाशनायाद्यतीतत्वप्रतिपादनेन रूपै-क्याद्विद्यैक्यम्॥ ३५॥

अथ स्यात्—यद्यप्युभे प्रश्नप्रतिवचने परब्रह्मविषये; तथाऽपि विद्याभेदोऽवर्जनीयः, एकत्र सर्वप्राणिप्रा-णनहेतुत्वेनोपास्यम्, इतरत्राशनायाद्यतीतत्वेनेत्युपा-स्यगुणभेदेन रूपभेदात्, प्रष्टृभेदाच्च। पूर्वत्र ह्युषस्तः प्रष्टा, उत्तरत्र तु कहोलः– इति; तत्राह—

* श्रुतप्रकाशिका *

प्रतिवचने इत्यर्थः॥ ३५॥

(प्रष्टृभेदाच्चेति) अत्र प्रष्टृद्वयसद्भावाद्विद्याभेदः सम्भवतीत्यर्थः।

७ भावप्रकाशिका ७

न्तराशब्दस्याऽऽवृत्त्या अर्थद्वयं लभ्यते, अत एवान्तरत्वेनेत्यनुक्तिः, इतरथा अन्तरत्वेनेति निर्देशप्रसङ्गात्॥ ७॥

व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३६ ॥

नात्र विद्याभेदः, प्रश्नप्रतिवचनाभ्यामेकरूपार्थविषयाभ्यामेकेन च विधिपदेनैकवाक्यत्वप्रतीतेः । प्रश्नद्वयं तावत्सर्वान्तरात्मत्वविशिष्टब्रह्मविषयम् । द्वितीये प्रश्ने "यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" इत्येवकारश्च पूर्वत्रोषस्तेन पृष्टगुणविशिष्टब्रह्मविषयत्वं कहोलप्रश्नस्यावधारयति । प्रतिवचनं चोभयत्र "स त आत्मा सर्वान्तरः" इति सर्वान्तरात्मत्वविशिष्टब्रह्मविषयमेकरूपमेव, विधिप्रत्ययश्चोत्तरत्रैव दृश्यते "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" इति । एवं सर्वान्तरात्मत्वविशिष्टब्रह्मैकविषयत्वे द्वयोरवधृते सत्येकस्मिन्नेव सर्वान्तरात्मत्वविशिष्टे ब्रह्मण्युपास्ये उषस्तकहोलयोरितरेतरबुद्धिर्व्यतिहारः कर्तव्यः । उषस्तस्य या सर्वान्तरात्मनो ब्रह्मणः सर्व-

---

* श्रुतप्रकाशिका *

व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३६ ॥ प्रश्नप्रतिवचनैकरूप्यं विधिपदैक्यं च विवृणोति ( प्रश्नद्वयमित्यादिना ) ( विधिप्रत्ययश्चेति ) अविशेषपुनश्श्रवणं हि भेदहेतुः, अत्र तदभावात् विद्यैक्यमिति भावः । तिष्ठासेत्— ब्रह्मणि तिष्ठासेत्— निष्ठां लभेत उपासीतेत्यर्थः । ( द्वयोरवधृत इति ) द्वयोः- उषस्तप्रश्नप्रतिवचनकहोलप्रश्नप्रतिवचनरूपवाक्ययोः ( कर्तव्य इति ) व्यतिहारस्य कर्तव्यत्वं श्रुत्यभिप्रेतमिति सूत्रकाराभिप्राय इत्यर्थः । व्यतिहारं विवृणोति ( उषस्तस्येति ) व्यतिहारस्य प्रयोजनमाह ( एवमिति ) व्यावृत्तिबुद्धि

* भावप्रकाशिका *

( तिष्ठासेदिति ) ' तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन

प्राणिप्राणनहेतुत्वविषया बुद्धिः; सा कहोलेनापि प्रष्टा कार्या। या च कहोलस्य तस्यैव ब्रह्मणोऽशना-याद्यतीतत्वविषया बुद्धिः, सोपस्तेनापि कार्या। एवं व्यतिहारे कृते उभाभ्यां सर्वान्तरस्य ब्रह्मणो जीवव्या-वृत्तिरवगता भवति। एवं सर्वान्तरात्मानं प्रत्यगा-त्मनो व्यावृत्तमवगमयितुं सर्वप्राणिप्राणनहेतुत्वाशना-याद्यतीतत्वप्रतिपादनेन विंशिषन्ति हि याज्ञवल्क्यस्य प्रतिवचनानि। अतो ब्रह्मणः सर्वान्तरात्मत्वमेवोपा-स्यगुणः। प्राणनहेतुत्वादयस्तु तस्योपपादकाः, नोपास्याः।

ननूपास्यगुणः सर्वान्तरात्मत्वमेव चेत्प्राणनहेतु-

---

* श्रुतप्रकाशिका *

जननार्थं प्रतिवचनमिति वदन् विंशिषन्तीति सौत्रं पदं व्याचष्टे (एवं सर्वा-न्तरात्मानमिति) (अत इत्यादि) सर्वान्तरात्मत्वस्य गुणस्य एकस्योपास्यत्वा-द्रूपभेदः परिहृतः, विद्यैक्येऽपि वैश्वानरविद्यायामौपमन्यवादिवत् प्रष्टृभेदः सम्भवतीति स्पष्टत्वान्न कण्ठोक्तम्।

व्यावृत्तिबुद्धिजननाय परस्परं बुद्धिव्यतिहार उक्तः, तत्र सर्वप्राणिप्राण-नहेतुत्वाशनायाद्यतीतत्वयोरन्यतरेणैव व्यावृत्तिबुद्धिः स्यादित्यन्यतरेण किमि-त्यभिप्रायेण चोदयति (नन्विति) परिहरति (तदुच्यत इति) कहोलस्य पुनः

* भावप्रकाशिका *

तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः मौनञ्चामौनञ्च निर्विद्य ब्राह्मणः' इत्यत्र तिष्ठासेदिति पदानुषङ्गेण ब्राह्मणस्तिष्ठासेदि-त्यर्थो लभ्यते, ब्रह्म वेदेत्यर्थे 'तदधीते तद्वेद' इत्यणि अनिति प्रकृ-तिभावे ब्राह्मण इति रूपम्, 'ब्राह्मो जातौ' इत्येतत्तु छान्दसत्वान्न भवति, ततश्चाऽयमर्थो निष्पन्न इति भावः, अत एव सहकार्यन्तरविधिरित्यधिकृ-

त्वस्याशनायाद्यतीतत्वस्य च प्रश्नोर्व्यतिहृत्यानुसन्धानं किमर्थम्, तदुच्यते—सर्वप्राणिप्राणनहेतुत्वेन सर्वान्तरात्मनि जीवाद्व्यावृत्ते ब्रह्मणि उषस्तेनावधृते सति कहोलेन जीवस्य सर्वात्मनाऽसम्भावितेन स्वभावविशेषेण सर्वान्तरात्मा व्यावृत्तोऽनुसन्धेय इति कृत्वा पुनः प्रश्नः कृतः । याज्ञवल्क्योऽपि तदभिप्रायमभिज्ञाय प्रत्यगात्मनोऽसम्भावितमशनायादिप्रत्यनीकत्वमुक्तवान् । अतश्चोपास्यस्य व्यावृत्तिप्रतीतिसिद्ध्यर्थमुभाभ्यां परस्परबुद्धिव्यतिहारः कर्तव्यः, इतरवत्—यथेतरत्र सद्विद्यायां भूयोभूयः प्रश्नैश्च

---

* श्रुतप्रकाशिका *

प्रश्नः सम्भवति, सर्वप्राणिप्राणनहेतुत्वज्ञानेन व्यावृत्तबुद्ध्यनुदयात्, यथोषस्तस्य सर्वप्राणिप्राणनहेतुत्ववैशद्याय पुनः प्रश्नस्तद्वत्, अन्यतरेण व्यावृत्तबुद्धौ द्वयोर्जातायां परस्परबुद्धिव्यतिहारो द्वयोरपि व्यावर्तकधर्मभूयस्त्वहेतुकव्यावृत्तबुद्ध्यतिशयजननार्थमित्यभिप्रायेणाह ( सर्वप्राणीति ) अतः— कहोलप्रश्नस्य व्यावृत्तिवैशद्यार्थत्वदर्शनात्, व्यावृत्तिप्रतीतिसिद्ध्यर्थं— व्यावर्तकधर्मभूयस्तया व्या-

७ भावप्रकाशिका ७

रणभाष्ये मौनञ्चामौनञ्चेत्यस्य विद्याकाष्ठां तदेकनिष्पाद्यां लभत इत्यर्थो वर्णितः, अतः कहोलप्रश्नस्येत्यत्र अत इति व्याख्येयं पदम्, कहोलप्रश्नस्येत्यादि तद्व्याख्यानम्, ननु व्यावृत्तिप्रतीतिसिद्ध्यर्थम् उभाभ्यां परस्परबुद्धिव्यतिहारः कर्तव्य इति भाष्यमयुक्तम्, सर्वात्मना जीवस्यासम्भावितेनाऽशनायाद्यतीतत्वेन कहोलस्य प्रत्यगर्थव्यावृत्तेः सिद्धत्वेन प्रत्यगात्मसाधारण्यशङ्कास्पदप्राणितृत्वव्यतिहारानपेक्षणात्, अत एवोषस्तस्यापि नाशनायाद्यतीतत्वापेक्षा, 'न दृष्टेर्द्रष्टारं पश्ये' रित्यनेनैव प्रत्यगात्मव्यावृत्तस्वरूपस्य उषस्तेनाप्यवधृतत्वादित्यत आह ( व्यावर्तकधर्मभूयस्तयेति ) अयम्भावः, सत्यञ्जातैव द्वयोर्व्यावृत्तिबुद्धिः, तथाप्यवगतार्थस्य कदाचिदप्यप्रकम्प्यत्वाय द्रढिमा सम्पाद-

प्रतिवचनैश्च तदेव सद्ब्रह्म व्यवच्छिद्यते ; न पुनः पूर्वप्रतिपन्नाद्गुणाद्गुणान्तरविशिष्टतयोपास्यं प्रतिपाद्यते तद्वत् ॥ ३६ ॥

तत्रापि प्रश्नप्रतिवचनभेदे सति कथमैक्यमवगम्यत इति चेत्—तत्राह—

सैव हि सत्यादयः ॥ ३७ ॥

सैव हि— सच्छब्दाभिहिता परमकारणभूता परा
छा॰— 6-3-2 देवतैव "सेयं देवतैक्षत" "तेजः परस्यां देवतायाम्"
6-8-6
6-9-1 इति प्रकृता "यथा सोम्य मधु मधुकृतो निस्ति-

* श्रुतप्रकाशिका *

वृत्तिबुद्ध्यतिशयार्थमित्यर्थः । एवं धर्मभेदेन च रूपभेदाशङ्काकृतो विद्याभेदो निरस्तः ॥ ३६ ॥

अथ दृष्टान्ते विद्यैक्यं स्थापयिष्यन् सूत्रमवतारयितुं शङ्कामाह (तत्रापीति)। सैव हि सत्यादयः ॥ ३७ ॥ (सैव हीति) सेति निर्देशः 'सेयं

छ भावप्रकाशिका छ

नीय इति श्रुतेरभिप्राय इति, (रूपाभेदशङ्काकृतो विद्याभेद इति) ननु सर्वान्तरत्वादिगुणप्रत्यभिज्ञया विद्यैक्येऽवधृते साद्विद्यान्यायेन प्रश्नप्रतिवचनरूपाभ्यासात्मके भेदकप्रमाणेऽप्यापादिते सति वैश्वानरादिविद्यायामौपमन्यवादिप्रष्टृबहुत्ववत् प्रष्टृभेदात्मके भेदकप्रमाणे चापादिते सति सर्वप्राणिप्राणयितृत्वाशनायाद्यतीतत्वयोः 'उपसंहारोऽर्थाभेदा'दिति न्यायेन उपसंहार एवोचितः, नतु तस्योपास्यबहिर्भावाभ्युपगम इति चेत्सत्यम्, यथा 'यश्शुक्लवासाः स देवदत्तपदवाच्यः' इत्युक्ते वाससि यथा देवदत्तपदवाच्यत्वानन्वयः, तथा यदशनायाद्यतीतं सर्वप्राणयितृ च तत्सर्वान्तरं साक्षाद्ब्रह्मोपास्यमित्युक्ते उपास्यत्वस्य अशनायाद्यतीतत्वादावनन्वयादित्यभिप्रेत्य तेषामुपास्यबहिर्भावकथनोपपत्तेरिति वदन्ति ॥ छ ॥

छन्ति" इत्यादिषु पर्यायेषु सर्वेषूपपाद्यते । यतः "ऐत-दात्म्यमिदं सर्वं तत्सत्यं स आत्मा" इति प्रथमपर्यायोदिताः सत्यादयः सर्वेषु पर्यायेषूपपाद्योपसंह्रियन्ते ॥

केचित्तु "व्यतिहारो विशिंषन्ति हीतरवत्" "सैव हि सत्यादयः" इति सूत्रद्वयमधिकरणद्वयं वर्णयन्ति । तत्र पूर्वेण "त्वं वा ऽहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते तद्योऽहं सोऽसौ योऽसौ सोऽहम्" इति वाक्ये जीवपरयोर्व्यतिहारानुसन्धानं प्रतिपाद्यत इत्युच्यते— इत्याहुः । तत्, "सर्वं खल्विदं ब्रह्म" "ऐतदात्म्यमिदं सर्वम्" "तत्त्वमसि" इत्यवगतसर्वात्मभावविषयत्वादस्य वाक्यस्य नात्र प्रतिपादनीयमपूर्वमस्तीत्यनादरणीयम् । तत्तु वक्ष्यते "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति । न च सर्वात्मत्वानुसन्धानातिरेकेण परस्मिन् ब्रह्मणि जीवत्वानुसन्धा-

* श्रुतप्रकाशिका *

देवतैक्षत' इति सद्विद्यावाक्यानुरोधादिति भावः । (उपपाद्यते) प्रश्नप्रतिवचनमुखेन प्रतिपाद्यत इत्यर्थः । तत्रापि कारणभूतायाः परस्या देवताया एवोपास्यत्वमुपपादयति (यत इति) परमकारणत्वविशिष्टदेवतैवोपास्या, कारणत्वोपयोगिगुणानां सत्यत्वात्मत्वजीवविशेषान्तर्यामित्वादिगुणानां प्रतिपर्यायमावृत्तत्वेन तत्र तात्पर्यादित्यर्थः ।

परोक्तप्रकारमनूद्य दूषयति (केचित्त्विति) तस्य कथमर्थं वर्णयन्तीत्यत्राह (तत्रेति) सोऽपि वक्तव्य एवेत्यत्राह (तत्तु वक्ष्यत इति) ननु 'सर्वत्र प्रसिद्धोपदेशा'दिति जगत्ताद्रात्म्यपरवाक्यविषयम्, 'आत्मेती'त्यादिकं तु जीवताद्रात्म्यपरम्, नात्र सर्वात्मभाव उच्यते ; अपि तु जीवब्रह्मणोरन्योन्यभावारोपण-

नम्, जीवे च परब्रह्मत्वानुसन्धानं तथ्यं सम्भवति। उत्तरेण च सूत्रेण "स यो ह वै तन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म" इत्यादिवाक्यप्रतिपादितस्य सत्योपासनस्य "तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्ष"न्नित्यादिवाक्यप्रतिपादितोपासनस्य चैक्यं प्रतिपाद्यत इति; तदप्ययुक्तम्, उत्तरवाक्ये अक्ष्यादित्यस्थानभेदेन विद्याभेदस्य पूर्वमेव "न वा विशेषा" दित्यनेन प्रतिपादितत्वात् । न च द्वयोरनयोर्व्याहृत्यादिशरीरकत्वेन रूपवतोः "हन्ति पाप्मानं जहाति च य एवं वेद" इति च पृथक्संयोगचोदनावतोर्द्वयोरुपासनयोः "स यो ह वै तन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमांल्लोकान्" इति संयोगरूपादिमत्तया निरपे-

* श्रुतप्रकाशिका *

मिति चेत् तत्राह (न चेति) (तथ्यं न सम्भवतीति) गरुडादिध्यानवदसदारोपणं चेत्– न तदपवर्गोपायः, तत्त्वज्ञानं ह्यपवर्गोपाय इति भावः। 'त्वं वा अहमस्मि' इत्यादेरयमर्थः– त्वं वाऽहमस्मि, त्वंशब्दबुद्धिविषयः परमात्मैवाहंशब्दबुद्धिविषयः, अहं वै त्वमसि– अहंशब्दबुद्धिविषय एव त्वंशब्दबुद्धिविषयः, अस्मि–अस्तीति निर्देशावहंत्वंशब्दप्रयुक्तौ, अहं–त्वं–शब्दौ प्रवृत्तिनिमित्तभेदात् ब्रह्मपर्यन्तौ, तद्योऽहमित्यादेरप्ययमर्थः। अनन्तरसूत्रस्य परोक्तार्थमनुवदति (उत्तरेण चेति) दूषयति (तदपीति) ततः किमित्यत्राह (न चेति) 'जहाति च' शरीरमित्यध्याहारः, प्रथमं द्वयोरिति पदं वाक्यपरम्, द्वितीयं तूपासनपरम्, द्वयोर्मध्ये उत्त-

* भावप्रकाशिका *

(प्रवृत्तिनिमित्तभेदात् ब्रह्मपर्यन्ताविति) अभिमुखपुरुषत्ववक्तृपुरुषत्वरूपप्रवृत्ति-

त्वेण पूर्वेणैकेनोपासनेनाभेदः सम्भवति । न च 'हन्ति पाप्मानं जहाति' इति च गुणफलाधिकारत्वम्, प्रमाणाभावात् । पूर्वेणैकविद्यात्वं प्रमाणमिति चेत्– न, इतरेतराश्रयत्वात् । एकविद्यात्वे निश्चिते सति पूर्वफलस्यैव प्रधानफलत्वेनोत्तरयोः फलयोर्गुणफलत्वम्, तयोर्गुणफलत्वे निश्चिते सति संयोगभेदाभावात् पूर्वेण विद्यैक्यमितीतरेतराश्रयत्वमित्येवमादिभिर्यथोक्तप्रकारमेव सूत्रद्वयम् ॥ ३७ ॥

अन्तरत्वाधिकरणं समाप्तम् ।



* श्रुतप्रकाशिका *

रवाक्यप्रतिपाद्योपासनयोर्विद्याभेदस्य साधितत्वात् परस्परभिन्नविद्याद्वयेन पूर्ववाक्योक्तस्योपासनस्यैक्यं न सम्भवति, एकविद्यात्वे साकाङ्क्षतयाऽन्वयः स्यात्, पृथक्पृथक्संयोगादीनामुक्तत्वेन निराकाङ्क्षत्वाच्च नैकविद्यात्वमित्यर्थः (न चेति) गुणफलम्–अङ्गफलम्, प्रमाणाभावात्– हेत्वभावात्, उत्तरयोः फलयोः– पापहननशरीरप्रहाणयो, संयोगभेदाभावात्– प्रधानफलसंयोगभेदाभावात् (इत्येवमादिभिरिति) आदिशब्देन स्वोक्तार्थोपपत्तयोऽभिप्रेताः ।

एवं व्यतिहार इत्यादिसूत्रद्वयस्य योजनान्तरं निरस्तम्, आद्यसूत्रस्य योजनान्तरं परैः कृतम्, ते हि अन्तराभूतग्रामवत्स्वात्मन' इति सूत्रं भङ्क्त्वा सिद्धान्तविषयं वर्णयन्ति, अत्र द्विराम्नानाविशेषादविशेषपुनश्श्रवणन्यायेन विद्यानानात्वं पूर्वपक्षीकृत्य

* भावप्रकाशिका *

निमित्तभेदादित्यर्थः, हन्ति पाप्मानं जहातीति च गुणफलाधिकारत्वमिति, अहर्नामोपासनरूपाङ्गप्रशंसार्थः, फलविधिसरूपार्थवाद इत्यर्थः, शाङ्करभाष्ये भागत्यादिग्रन्थेषु च अर्थवादस्योक्तत्वेन गुणफलाधिकारत्वानुक्तेः गुणफलमङ्गफलमिति टीकाग्रन्थस्याऽप्यत्रैव तात्पर्यम्, केचित्तु तैरनुक्तमपि सम्भावितमिति

* श्रुतप्रकाशिका *

स्वात्मनो विद्यैक्यं स्यात्, न हि द्वौ सर्वान्तरौ सम्भवतः, तदा एकस्य सर्वान्तरत्वमापेक्षिकं स्यात्, यथा भूतग्रामे पृथिव्यादावबादीनामापेक्षिकमन्तरत्वमिति, वैशद्यार्थं शङ्काविशेषनिरासार्थं च द्विराम्नानसम्भव इति सिद्धान्तयन्ति, अत्र व्यवहितान्वयोऽध्याहारबाहुल्यं च, अस्मन्मते हि प्रतिवचनशब्दमात्रमध्याहार्यम्, 'अन्यथा भेदानुपपत्ति'रिति चेदित्यपि न घटते, अन्यथाशब्दो हि प्रकृतादन्यथात्वं ब्रूते, सिद्धान्तस्य प्रकृतत्वे सत्यन्यथाशब्दः पूर्वपक्षविषयो भवितुमर्हति, ततश्चानभ्युपगम्यमाने विद्याभेदे द्विराम्नानानुपपत्तिरिति व्याख्यानमस्वरसम्, विद्यैक्यानभ्युपगम इति हि स्वरसार्थः, तदा चाम्नानभेदानुपपत्तेरिति हेतुर्न घटते, तस्मात् 'इति चे'दित्यन्तस्य पूर्वपक्षविषयत्वं तत एवाखण्डितत्वं च युक्तम्, भूतग्रामवदितिपदस्य 'एको देवः' इति श्रुत्यन्तरोक्तसर्वभूतान्तरात्मत्वनिदर्शनपरत्वेन योजनान्तरमप्यनुपपन्नम्, सिद्धान्तसूत्रत्वानुपपत्तेरेव, व्यतिहार इत्यादिसूत्रयोरधिकरणान्तरद्वयविषयत्वनिरासः कण्ठोक्तः।— अपरे तूभयत्र प्रतिपाद्यभेदसमर्थनपरमधिकरणमिच्छन्तो जीवप्रतिपादनस्य ब्रह्मोपासनार्थतया तत्र पर्यवसानात् विद्यैक्यं फलमिति वदन्ति, तदयुक्तम्— पूर्वत्राप्युक्तहेतुभिः परमात्मपरत्वसिद्धेर्जीवस्य प्रतिपाद्यत्वायोगात् स्वात्मनोऽन्तरा नान्यः सम्भवति, तदा भूतग्रामवदापेक्षिकत्वं स्यात्, अत उपदेश्यभेदानुपपत्तिरिति चेन्न, उपदेशभेदवदुपदेश्यभेदेन भवितव्यम्, उपदेशद्वयानर्थक्यादिति योजनाऽपि क्लिष्टा, अश्रुतनञोऽध्याहारात्।— अन्ये तु सम्भूत्युपासनेपूभयेषां प्राणितृत्वादीनामशनायाद्यतीतत्वादीनां च समुच्चयार्थं ब्रह्मैकत्वविषयत्वेन विद्यैक्यसमर्थनपरत्वमाहुः,

* भावप्रकाशिका *

तदाशङ्क्य निराक्रियत इति वदन्ति, ( नहि द्वौ सर्वान्तरावित्यादि ) ननु उभयत्र वेद्यैकत्वेन विद्यैक्यसमर्थनमनुपपन्नम्, प्रत्युत वेद्यैक्ये सति अविशेषपुनश्श्रवणसत्त्वेन पूर्वपक्षस्यैवोपपादकत्वादिति चेत्—सत्यम्, अस्तीयमनुपपत्तिः, सा तु न दोषः, अस्य ग्रन्थस्य शङ्करभाष्यग्रन्थानुवादरूपत्वात् वेद्यभेदाद्विद्याभेदोऽस्तीति पूर्वपक्ष्येकदेशिनिराकरणपरतया भामत्यां नीतत्वाच्च न दोषः ( व्यवहितान्वयोऽध्याहारबाहुल्यं चेति ) अन्तरा आम्नानाविशेषात् स्वात्मनो विद्यैक्यं स्यात्, उभयत्रापि वेद्यस्यैक्यात्, वेद्यभेदे तु भूतग्रामवदा-

# कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३८ ॥

१६ अधिकरणम्

छान्दोग्ये श्रूयते [1]"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इत्यादि; वाजसनेयके च [2]"स वा एष महानज आत्मा योऽयं

* श्रुतप्रकाशिका *

तत्र समुच्चयसिद्ध्यर्थत्वमयुक्तम्– सम्भूतिविनाशसमुच्चयस्याप्रामाणिकत्वात्, व्यतिहार इत्यादिसूत्रद्वयस्य तत्कृतयोजना च भाष्येणैव निरस्ता । 'तद्योऽहं सोऽसौ योऽसौ सोऽह'मिति सामानाधिकरण्यं च घटशरावशब्दयोरिवाशक्यवाचित्वादयुक्तम्, अत एव ब्रह्मणो जीवत्वेऽहङ्कारहृद्देशदिक्कालादीनां ब्रह्मणि प्रतिपत्तिः, जीवस्य ब्रह्मत्वे तु जीवस्य ज्ञानानन्दैश्वर्यादीनां प्रतिपत्तिः प्रयोजनमिति चायुक्तम्– घटशरावयोरिव परस्परासाधारणगुणानामन्यत्रानुपपत्तेः साधारणगुणानां च द्रव्यत्वादीनामिव यत्तद्युष्मदस्मत्पदसामानाधिकरण्यप्रतिपाद्यत्वाभावाच्च ॥ ३७ ॥

अन्तरत्वाधिकरणं समाप्तम् ।

कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३८ ॥ प्राणितृत्वादीनामशनायाद्यतीतत्वादीनां च धर्मिभेदाभावाद्विद्यैक्यं समर्थितम्, अत्र तु गुणाष्टकस्य वशित्वादिगुणस्य च धर्मिभेदशङ्कया सङ्गतिः, किमत्र विद्याभेदः ? उताभेदः ?

* भावप्रकाशिका *

पेक्षिकं सर्वान्तरत्वं स्यात् इत्यन्वयाङ्गीकारात् अध्याहारबाहुल्यव्यवहितान्वयौ स्पष्टौ ( अहङ्कारहृद्देशदिक्कालादीनां ब्रह्मणि प्रतिपत्तिरिति ) 'तद्योऽहं सोऽसौ' 'त्वं वा अहमस्मी'त्यादिवाक्यैर्जीवसम्बन्धितया प्रतिपन्नानाम् अहंत्वहृद्देशस्थत्वाभिमुखदिग्वर्तित्ववर्तमानकालसम्बन्धित्वादीनां ब्रह्मगततया प्रतिपत्त्यर्थमित्यर्थः ॥ ७ ॥

इति अन्तरत्वाधिकरणम् ।

---

१. छा० ८-१-१ ॥ | २ बृ० ६-४-२२ ॥

विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः" इत्यादि । तत्र संशयः—किमनयोर्विद्याभेदः ? उत नेति । किं युक्तम् ? भेद इति । कुतः रूपभेदात् । अपहतपाप्मत्वादिगुणाष्टकविशिष्ट आकाशः छान्दोग्ये उपास्यः प्रतीयते ; वाजसनेयके त्वाकाशे शयानो वशित्वादिगुणविशिष्ट उपास्यः प्रतीयते, अतो रूपभेदाद्विद्याभेदः ।

* श्रुतप्रकाशिका *

इति, छान्दोग्ये अपहतपाप्मत्वादिविशिष्टविषयमुपासनम्, वाजसनेयके वशित्वादिविशिष्टविषयम् , उतोभयत्रापहतपाप्मत्वादिविशिष्टविषयमिति, किं वाजसनेयके सत्यसङ्कल्पत्वसहचारादपहतपाप्मत्वादीनां प्रतिपत्तिरस्ति, नेति, यदा नास्ति प्रतिपत्तिः, तदा रूपभेदाद्विद्याभेदः, यदा त्वस्ति प्रतिपत्तिः, तदा रूपाभेदाद्विद्यैक्यम्, अस्मिन्नधिकरणे व्योमातीतनिरासः फलितो भविष्यति, आकाशान्तर्वर्तिनो गुणत्वेनाकाशस्य परमात्मत्वं दहराधिकरणे दर्शितम् , आकाशान्तर्वर्तिनः स्वतन्त्रवस्तुत्वे सति आकाशस्य प्रसिद्धाकाशत्वमत्रोच्यत— इति भिदा, ( वशित्वादीति ) आदिशब्देन 'स वा एष महानजः' इत्युक्तदहरत्वविरोधिमहत्त्वं च विवक्षितम्, गुणाष्टकविशिष्टः, वशित्वादिगुणविशिष्ट इति धर्मभेद उक्तः, आकाशः—आकाशे शयान इति धर्मिभेद उक्तः, एवं

* भावप्रकाशिका *

( व्योमातीतनिरासः फलितो भविष्यतीति ) वाजसनेयके आकाशे शयानत्वेन प्रतिपादितस्यैव छान्दोग्यप्रतिपादितदहराकाशशब्दितब्रह्मत्वप्रतिपादनादिति भावः । ननु छान्दोग्यवाजसनेयगताकाशशब्दयोरेकार्थत्वमस्त्वित्याशङ्कय छान्दोग्ये श्रुतस्याऽऽकाशस्याऽपहतपाप्मत्वादिगुणाष्टकप्रतिपादनात् तस्य ब्रह्मत्वम् , वाजसनेयकोक्ताकाशस्य तु वशित्वादिगुणविशिष्टात्माश्रयत्वप्रतिपादनात् भूताकाशत्वं वक्तव्यमित्याह ( आकाशान्तर्वर्तिन इत्यादिना ) ( गुणत्वेनेति ) गुणत्वेन— अपहतपाप्मत्वादिगुणरूपत्वेनेत्यर्थः, भाष्ये मोक्षार्थैषूपा-

इति प्राप्ते प्रचक्ष्महे— न भेद इति । कुतः? रूपाभेदात्— इतरत्र तत्र च कामाद्येव हि रूपम् । वाजसनेयके छान्दोग्ये च सत्यकामादिविशिष्टमेव ब्रह्मोपास्यमित्यर्थः । कुतः एतदवगम्यते, आयतनादिभ्यः— हृदयायतनत्वसेतुत्वविधरणत्वादिभिस्तावदुभयत्र सैव विद्येति प्रत्यभिज्ञायते । वशित्वादयश्च वाजसनेयके श्रुताः छान्दोग्ये श्रुतस्य गुणाष्टकान्यतमभूतस्य सत्यसङ्कल्पत्वस्य विशेषा एवेति सत्यसङ्कल्पत्वसहचारिणां सत्यकामत्वादीनामपहतपाप्मत्वपर्यन्तानां सद्भावमवगमयन्ति । अतो रूपं न भिद्यते । संयोगोऽपि "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" "अभयं वै ब्रह्म भवति" इति ब्रह्मप्राप्तिरूपो न भिद्यते । आकाशशब्दः छान्दोग्ये परमात्मविषय इति "दहर उत्तरेभ्यः" इत्यत्र निर्णीतम् । वाजसनेयके त्वाकाशे शयानस्य वशित्वादिश्रवणात्तस्य शया-

* श्रुतप्रकाशिका *

धर्मतो धर्मितश्च रूपभेदाद्विद्याभेद इत्यर्थः ।

( इति प्राप्त इति ) इतरत्रेति पदव्याख्यानार्थं धर्ममात्रस्योपास्यत्वव्यावृत्त्यर्थं चाह ( वाजसनेयक इति ) ( आकाशशब्द इत्यादि ) आकाशशब्दस्य भूताकाशे प्रसिद्धिप्राचुर्यात् तदेव सर्वत्र स्वतः प्राप्तम्, तत्र परमात्मासाधारणगुणश्रवणं प्रसिद्धिप्राचुर्यस्यापवादकम्, तच्छान्दोग्येऽस्तीति तत्राका-

* भावप्रकाशिका *

सनेषु लोप इति, वाजसनेयकश्रुताया दहरविद्याया मोक्षसाधननिर्गुणविद्यात्वेन छान्दोग्यश्रुतक्षुद्रफलसाधनसगुणदहरविद्याप्रकरणोपदिष्टा गुणा न निर्गुण-

नस्य परमात्मत्वे सति तदाधाराभिधायिन आकाशशब्दस्य "तस्यान्ते सुषिरं सूक्ष्म" मिति हृदयान्तर्गतस्य सुषिरशब्दवाच्यस्याकाशस्याभिधायकत्वमवगम्यते । अतो विद्यैक्यम् ॥ ३८ ॥

अथ स्यात्- यदुक्तं वाजसनेयके वशित्वादिभिः सह सत्यकामत्वादिसद्भावोऽवगम्यते- इति; तन्नोपपद्यते, वशित्वादीनामेव तत्र परमार्थतः सद्भावाभावात्, तदभावश्च " मनसैवानुद्रष्टव्यम् नेह नानास्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम्" इति प्रकृतेन वाक्येन " स एष नेति नेत्यात्मा" इति वक्ष्यमाणेनोत्तरेण चोपास्यस्य ब्रह्मणो निर्विशेषत्वप्रतीतेरवगम्यते। अतो वशित्वादयोऽपि स्थूलत्वादिवन्निषेध्या इति प्रतीयन्ते । अत एव छान्दोग्येऽपि सत्यकामत्वादयो न ब्रह्मणः पारमार्थिका गुणा उच्यन्ते । अतोऽपारमार्थिकत्वादेवंजातीयकानां गुणानां मोक्षार्थेषूपासनेषु लोप इति ; तत्राह—

---

* श्रुतप्रकाशिका *

शशब्दस्य परमात्मपरत्वमुक्तम्, वाजसनेयके तु तदभावात् प्रसिद्धिप्राचुर्यमेवानुविधीयत इत्यर्थः ॥ ३८ ॥

अनन्तरसूत्रशङ्कामाह ( अथ स्यादिति ) छान्दोग्ये दहरविद्या सगुणविषया , फलविशेषार्थगुणप्रतिपादनपरत्वात्, इयं तु निर्गुणविद्या, अतो न विद्यैक्यमित्यर्थः ।

* भावप्रकाशिका *

विद्यायामुपसंहर्तव्याः, तयोर्भिन्नत्वादिति भावः ॥ * ॥

आदरादलोपः ॥ ३९ ॥

ब्रह्मगुणत्वेन प्रमाणान्तराप्राप्तानां गुणानामेषां सत्यकामत्वादीनाम् 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" "सर्वस्य वशी सर्वस्येशानः" "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" इत्यादिभिरनयोः श्रुत्योरन्यासु च मोक्षार्थोपासनोपास्यब्रह्मगुणत्वेन सादरमुपदेशादेषामलोपः, अपि तूपसंहार एव कार्यः । छान्दोग्ये तावत् "तद्य इह आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान् तेषां सर्वेषु लोकेषु कामचारो भवति" इति सत्यकामत्वादिगुणविशिष्टस्य ब्रह्मणो वेदनमभिधाय "अथ य इह आत्मानमननुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवति" इति अवेदननिन्दा क्रियमाणा गुणविशिष्टवेदन-

---

* श्रुतप्रकाशिका *

आदरादलोपः ॥ ३९ ॥ आदरं दर्शयति (छान्दोग्य इत्यादिना) प्रमाणान्तराप्राप्तानामित्यनेन निषेधार्थमनुवादत्वं निरस्तम् । अपूर्वत्वरूपतात्पर्यलिङ्गं चोक्तम्, यथा अपूर्वता ताद्रूप्यतो विपर्ययतश्चापरिच्छित्तिरूपा, तथा फलमपि स्वीकारास्वीकारयोरनुकूलप्रतिकूलरूपम्, तदुभयमपि कामचाराकामचाराभ्यामुक्तम्, भूयो भूय इत्यभ्यासो दर्शितः, (अवेदननिन्दा क्रियमाणा) गुणवि-

* भावप्रकाशिका *

(स्वीकारास्वीकारयोरिति) उपासनानुपासनयोरित्यर्थः, भाष्ये – य इहात्मा-

स्यादरं दर्शयति । तथा वाजसनेयके "सर्वस्य वशी सर्वस्येशानः" "एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः" इति भूयो भूय ऐश्वर्योपदेशात् गुणेष्वादरः प्रतीयते । एवमन्यत्रापि । न च मातापितृसहस्रेभ्योऽपि वत्सलतरं शास्त्रं प्रतारकवदपारमार्थिकान्निरसनीयान् गुणान् प्रमाणान्तराप्रतिपन्नानादरेणोपदिश्य संसारचक्रपरिवर्त्तनेन पूर्वमेव बम्भ्रम्यमाणान् मुमुक्षून् भूयोऽपि भ्रम-

* श्रुतप्रकाशिका *

शिष्टवेदनमुक्त्वा तद्विषयावेदननिन्दा क्रियमाणेत्यर्थः, एवं सत्यकामत्वादीनामपूर्वत्वम्, वेदने फलश्रवणम्—वेदनफलकथनावेदननिन्दार्थम्, आवृत्तिः 'एष सर्वेश्वरः' इत्याद्यावृत्तिश्च, 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' 'तस्मिन् कामाः समाहिताः' इत्युपक्रमोपसंहारौ, अर्थवादः— अपूर्वत्वेन विहितस्य निषेधायोगरूपोपपत्तिरित्यादिभिरादरो दृश्यत इत्यर्थः । वाजसनेयकेऽप्येवमादिकमादरलिङ्गं द्रष्टव्यमित्यभिप्रायेणाह (तथेति) (न च मातापितृसहस्रेभ्य इति) गुणानां प्रमाणान्तराप्रतिपन्नत्वान्निषेधार्थमनुवाद इति वक्तुमशक्यमित्युक्तम्, गुणकथनं विप्रलिप्सया चेत्— गुणनिषेधोऽपि तथा स्यात्, हितोपदेशप्रवृत्तशास्त्रस्य विप्रलम्भकत्वमयुक्तं चेत्— तद्गुणेष्वपि तुल्यम्, फलविशेषार्थमविद्यमानगुणारोपणमिति चेत्— गुणनिषेधोऽपि फलाय स्यादिति गुणान्वयो वास्तवः स्यात्, निर्गुणवेदनस्यापवर्गोपायरूपत्वान्नारोपणमिति चेत्— सगुणवेदनस्याप्यपवर्गोपायरूपत्वान्न तदारोपणमिति, सगुणवेदनस्यापवर्गोपायत्वकथनं विप्रलिप्सामूलमिति चेत्, नैर्गुण्यकथनमपि तथा स्यात्, हितोपदेशप्रवृत्तस्य शास्त्रस्य विप्रलम्भकत्वमयुक्तमिति चेत्—तद्गुणप्रतिपादनेऽपि तुल्यमित्यभिप्रायेणापारमार्थिकानित्यादिविशेषणमुक्तम्, नेह नानाऽस्तीत्यादेः कोऽर्थ इत्यपेक्षायां प्रतिबन्दीत्वेन पूर्वग्रन्थाभिप्रेतस्य गुणनिषेधस्य पराभिमतनिर्विशेषपरत्वव्युदसनार्थं सामान्यनिषेधस्य विहितविशेषव्यतिरिक्तविषयत्वात् 'नेह नानाऽस्ती'त्यादेरब्रह्मात्मकनानात्वनिषेधक-

यितुमलम् । "नेह नानाऽस्ति किञ्चन" "एकधै-वानुद्रष्टव्य"मिति तु सर्वस्य ब्रह्मकार्यत्वेन तदात्मक-त्वादेकधाऽनुदर्शनं विधाय अब्रह्मात्मकत्वेन पूर्वसि-द्धनानात्वदर्शनं निषेधतीत्ययमर्थः प्रागेव प्रपञ्चितः। 'स एष नेति नेत्यात्मा' इत्यत्र चेतिशब्देन प्रमाणान्तर-प्रतिपन्नं प्रपञ्चाकारं परामृश्य न तथाविधं ब्रह्मेति सर्वात्मभूतस्य ब्रह्मणः प्रपञ्चविलक्षणत्वं प्रतिपाद्यते, तदेव चानन्तरमुपपादयति "अग्राह्यो न हि गृह्यते अशीर्यो न हि शीर्यते असङ्गो न हि सज्यते अव्य-थितो न व्यथते न रिष्यति" इति। प्रमाणान्तरग्राह्यवि-सजातीयत्वात् प्रमाणान्तरेण न गृह्यते, विशरणीय-विसजातीयत्वात् न विशीर्यते, एवमुत्तरत्रानुसन्धे-यम् । छान्दोग्येऽपि "नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समा-हिता" इति सर्वविसजातीयत्वं ब्रह्मणः प्रतिपाद्य तस्मिन्सत्यकामत्वादयो विधीयन्ते ॥ ३६ ॥

---

* श्रुतप्रकाशिका *

रत्वमाह ( नेहेत्यादिना ) 'एकधैवानुद्रष्टव्यम्' केषांचित् कदाचित् स्वनिष्ठत्व-मन्यपरतन्त्रत्वं वा न मन्तव्यम् । अपि तु परमात्मपरतन्त्रतयैकरूप्यमेव द्रष्ट-व्यमित्यर्थः । 'स एष नेति नेती' त्यस्य वाक्यस्य प्रकरणानुगुण्यात् प्रप-ञ्चसाजात्यनिषेधपरत्वमुक्तम् । 'अथात आदेशो नेति नेती' त्यस्य वाक्य-स्येयत्तानिषेधपरत्वमपि तत्प्रकरणानुगुण्यादुक्तम् , इहोक्तार्थस्य प्रकरणानुगुण्यं दर्शयन् 'अग्राह्यः' इत्यादिकं व्याचष्ट ( प्रमाणान्तरेति ) । ( छान्दोग्येऽपीति ) अस्य जरया न ब्रह्म जीर्यतीत्यर्थः ।

ननु एवमपि "तद्य इह आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति स यदि पितृलोककामो भवति" इत्यादिना सत्यकामादिगुणविशिष्टवेदनस्य सांसारिकफलसम्बन्धश्रवणान्मुमुक्षोर्ब्रह्मप्रेप्सोर्न सगुणं ब्रह्म उपास्यम्। परविद्याफलं च "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इतीदमेव। अतः सत्यकामत्वादयो ब्रह्मप्रेप्सोर्नोपसंहार्या इति, अत उत्तरं पठति—

उपस्थितेऽतस्तद्वचनात् ॥ ४० ॥

उपस्थितिः– उपस्थानम्, ब्रह्मोपसम्पत्तिः, उपस्थिते ब्रह्मोपसम्पन्ने सर्वबन्धविनिर्मुक्ते स्वेन रूपेणाभिनिष्पन्ने प्रत्यगात्मन्यत एवोपसम्पत्तेरेव हेतोः सर्वेषु लोकेषु कामचार उच्यते "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" 'स उत्तमः पुरुषः' 'स तत्र पर्य्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम्' "स स्वराड् भवति" "तस्य सर्वेषु लोकेषु कामचारो

* श्रुतप्रकाशिका *

अनन्तरसूत्रशङ्कामाह (नन्विति) सर्वलोककामचारादिकं सांसारिकफलम्, 'स्वेन रूपेणाभिनिष्पद्यते' इति साक्षान्मुक्तिफलं स्यात्, तद्विलक्षणत्वस्य श्रवणादित्यर्थः ॥ ३९ ॥

उपस्थितेऽतस्तद्वचनात् ॥ ४० ॥ (अत एवोपसम्पत्तेरेव हेतोरिति) उपसम्पत्त्यनन्तरं सर्वलोककामचारकथनाद्धेतुत्वमभिप्रेतमित्यर्थः। ब्रह्मानुभवतो

भवति" इति । तदेतच्चतुर्थे निपुणतरमुपपादयिष्यते । अतः सर्वेषु लोकेषु कामचारस्य मुक्तोपभोग्यफलत्वान्मुमुक्षोः सत्यकामत्वादयो गुणा उपसंहार्याः ॥ ४० ॥ कामाद्यधिकरणं समाप्तम् ॥

---

* श्रुतप्रकाशिका *

जीवस्य सर्वलोककामचाराद्यपेक्षा कथं स्यादित्यत्राह ( तदेतच्चतुर्थ इति ) । निगमयति ( अत इति ) ।

परे तु छान्दोग्यस्थसत्यकामत्वादिगुणजातं वाजसनेयके 'स वा एष महा'नित्यत्र सम्बध्यते, तत्र श्रुतं वशित्वादिकं छान्दोग्ये सम्बध्यते, आयतनत्वसेतुत्वादिसामान्यात्, छान्दोग्ये सगुणविद्या विवक्षिता, वाजसनेयके निर्गुणविद्या, 'असङ्गो ह्ययं पुरुषः' 'नेति नेति' इत्यादिश्रवणात्, अतः छान्दोग्ये वशित्वादिसम्बन्ध उपासनार्थः । अन्यत्र सत्यकामत्वादिसम्बन्धः स्तुतिपौष्कल्यार्थः, उभयाविधाकाङ्क्षासम्भवात्, ब्रह्मणस्तत्तद्गुणसम्बन्धयोग्यत्वादायतनत्वादिसाम्यबाहुल्याच्चेति, तदयुक्तम्, निषेधस्य विहितगुणविषयत्वाभावेन सगुणनिर्गुणविभागाभावात्, 'नेति नेती' त्यत्रापि 'अशीर्यो न हि शीर्यते असङ्गो न हि सज्यते अव्यथितो न व्यथते न रिष्यति' इत्यादिनिषेधाना 'विशोको विजरो विमृत्यु' रित्यादीनां च तुल्यार्थत्वाच्च, आयतनत्वादिसाम्येन स्तुत्याकाङ्क्षया सम्बन्धश्चानुपपन्नः, तथा सति शाण्डिल्यविद्याम्नातानां भारूपत्वसर्वकामत्वादीनामपि सम्बन्धप्रसङ्गात्, तत्रापि हि 'एष

६ भावप्रकाशिका ६

नमनुविद्येति, 'य इहात्मानमनुविद्य' इतिश्रुतेरिति भावः ॥ ६ ॥

( परे त्वित्यादि ) ( छान्दोग्ये वशित्वादिसम्बन्ध उपासनार्थ इति ) यद्यपि भामत्यां निर्गुणाया विद्यायां ब्रह्मस्तुत्यर्थमेव सगुणविद्यासम्बन्धिगुणोपसंहारस्सम्भवी, सगुणायां तु न ध्यानाय वशित्वादिगुणोपसंहारसम्भवः, नहि निर्गुणायामाध्यातव्यत्वेन एते चोदिताः, येन सगुणविद्यायां वशित्वादय आध्यातव्यत्वेन सम्बध्येरन्, अपि तु सत्यकामादिगुणनान्तरीयकत्वेनैव तेषां प्राप्तिरित्युपसंहार उच्यत इत्युक्तम्, कल्पतरौ च

* श्रुतप्रकाशिका *

म आत्माऽन्तर्हृदये ज्यायान् पृथिव्याः' 'अवाक्यनादर' इति हृदयायतनत्वं महत्त्वं निषेधवत्त्वं च समानम्। अस्तु सम्बन्ध इति चेत्, परस्परभिन्नसर्वविद्योपात्तगुणानां सर्वत्र स्तुत्यर्थतया सम्बन्धप्रसङ्ग, कारणत्वसत्यज्ञानात्मकत्वविभुत्वनित्यत्वपतित्वादिषु केनचिद्रूपेण साम्यस्य सर्वासु विद्यासु सद्भावात्। आकाङ्क्षायाश्च निवारकाभावात्, न ह्येतावता गुणेन स्तुतिरलमिति व्यवस्थापकमस्ति, स्वप्रकरणस्थगुणेन नैराकाङ्क्ष्यं चेत्-वाजसनेयकेऽपि तुल्यम्,

अपरे तु—विद्यैक्यं सिद्धान्तयन्त उपक्रमभेदमपि विद्याभेदयुक्तिमाहुः। परमात्मलिङ्गवत् प्रकरणेषूपास्यविशेषणतया वा व्यावर्त्यतया वा मोक्षप्रदत्वलाभ्यैश्वर्यौपाधिकतया वा जीवप्रतिपादनस्य सङ्गतेर्मुहुः सूत्रितत्वात् भाष्ये तदनुपन्यासः। अन्ये तु— दहरविद्येति संज्ञातदभावौ च भेदहेतुमाहुः, विरोधिसंज्ञान्तराभावात् अव्यपदेशमात्रं न विद्याभेदायालमित्यनादरः । आख्याभेदो हि विद्याभेदसाधकः, त्रयोऽप्येते आदरादित्याद्यनन्तरसूत्रद्वयमधिकरणान्तरं प्राणाग्निहोत्रविषयं वर्णयन्ति, 'तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयं स यामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहे'त्यारभ्य 'य एतदेवं विद्वानग्निहोत्रं जुहोती'ति प्रतिपादितं प्रथमोपनतभक्तद्रव्यकं प्राणाग्निहोत्रभोजनलोपेऽपि न लुप्येत, किन्त्वबादिना प्रतिनिधिनापि निर्वर्त्यते, अतिथिभोजनेन भक्तात्यये प्राणाग्निहोत्रलोपमाशङ्क्य तत्परिहाराय हि प्राथम्यविधिः, जाबालश्रुतौ 'पूर्वोऽतिथिभ्योऽश्नीयाद् यथा वै स्वयमहुत्वाऽग्निहोत्रं परस्य जुहुयादेवं तदि'त्यति-

* भावप्रकाशिका *

यत्र वशित्वादयः श्रूयन्ते न तत्राप्येषां ध्येयत्वमिति अन्यत्र गतानामपि न ध्येयत्वम्, अतो वशित्वादेः सत्यकामत्वाद्यन्तर्भाव एव उपसंहार इत्यर्थ इत्युक्तम्, तथापि निर्गुणविद्याप्रकरणाम्नातवशित्वादीनाम् आनर्थक्यपरिहाराय उपासनसाकाङ्क्षाणां सगुणविद्यायामुपास्यत्वेनाऽन्वय इति सोपपत्तिकं विवरणकारादिभिर्व्याख्यान्तरकारैरुक्तत्वात् तथानूदितमिति न दोष इति द्रष्टव्यम्, (अतिथिभोजनेन भक्तात्यय इति) इदन्तु यादवमिश्रोक्तम्, वक्ष्यति चोत्तरत्राऽन्येत्वित्यादि, ततश्च परानुक्तत्वादनुक्तानुवादशङ्का पराकृता। प्राथम्यविधिर्जाबालश्रुतौ 'पूर्वमतिथिभ्योऽश्नीयात्' इत्यस्याऽनन्तरम् इतिरध्याहर्तव्यः,

* श्रुतप्रकाशिका *

थिभोजनप्राथम्यनिन्दनेनादरदर्शनाच्च, न हि प्राथम्यलोपासहा श्रुतिः प्राथम्यवतोऽग्निहोत्रस्य लोपं सहेत, न च भुजिप्रयुक्तभक्तसंयोगात् भोजनलोपे लोपः, तच्च कौण्डपायिनामग्निहोत्र इवाग्निहोत्रशब्दस्य नैयमिकाग्निहोत्रगतपय:प्रभृत्यतिदेशार्थत्वात् पयःप्रभृतिषु प्राप्तेषु द्रव्यनियमार्थत्वात् 'तद्यद्भक्त'मिति वाक्यस्य । अतो भोजनाभावात् गुणभूतद्रव्यलोपेऽपि नाग्निहोत्रलोपः 'आदरा'दिति पूर्वपक्षं कृत्वा भोजन उपस्थिते होमस्य तदर्थभक्तसाध्यताप्रतीतेर्वाजिनस्यामिक्षाद्ध्यानयनप्रयोजकत्वाभाववत् परार्थद्रव्यसाध्यानां कर्मणां प्रयोजकत्वाभावात्, कौण्डपायिनामग्निहोत्र इव प्राणाग्निहोत्रेऽग्न्युद्धरणादिधर्मायोगात्, अग्निहोत्रशब्दस्य विध्युद्देशगतत्वाभावात्, 'आस्यमाहवनीय'मिति

* भावप्रकाशिका *

भोजनलोपे लोपः तच्च कौण्डपायिनामग्निहोत्र इति क्वचित्पाठो दृश्यते, तत्र तच्चेत्येतत् सम्पातायातमिव भाति, (गुणभूतद्रव्यलोपेऽपीति) भोजनद्रव्यस्य प्राणाग्निहोत्रे गुणभूतस्याभावेऽपीत्यर्थः, यथा पवमानेष्टिषु 'अग्निहोत्रहवण्या हवींषि निर्वपति' इति निर्वापसाधनत्वेन श्रुतायाः चोदकप्राप्तायाः अग्निहोत्रहवण्या अभावेऽपि हविर्निर्वापस्य प्रधानस्य न लोपः, गुणलोपमात्रेण प्रधानलोपस्याऽयुक्तत्वात्, पवमानेष्टिषु अग्निहोत्रहवण्यभावश्च पवमानहविर्भ्यः पूर्वमग्नेरसिद्धतया अग्निहोत्रस्याऽहुतत्वादिति भावः (आमिक्षाद्ध्यानयनप्रयोजकत्वाभाववदिति) वाजिनयागस्यामिक्षाप्रयुक्तदध्यानयनप्रयोजकत्वाभाववदित्यर्थः, (परार्थद्रव्यसाध्यानां कर्मणां प्रयोजकत्वाभावादिति) 'पुरोडाशकपालेन तुषानुपवपति' इति पुरोडाशप्रयुक्तकपालोपजीविनस्तुषोपवापस्य कपालाननुष्ठापकत्वदर्शनादिति भावः, (अग्न्युद्धरणादिधर्मायोगादिति) अग्निहोत्रधर्मातिदेशपक्षे अग्न्युद्धरणादयोपि धर्माः स्युः, नचेष्टापत्तिः, अग्न्युद्धरणस्य होमार्थत्वात् प्राणाग्निहोत्रस्य च आस्याधिकरणकत्वेनाहवनीयाधिकरणकत्वाभावात्, नच प्रयोजनाभावात् कृष्णलचराववघातवदुद्धरणादीनां बाधेपि इतरेषां द्रव्यादीनां नाम्नातिदेशोऽस्त्विति वाच्यम्, अतिदेशत्वमभ्युपगम्य बाधकल्पनापेक्षया 'अग्निहोत्रं जुहोति' इत्यस्यार्थवादतया स्तावकत्वस्यैव युक्तत्वादिति भावः, (साम्यादिकत्वदर्शनाच्चेति) 'उर एव वेदिर्लोमानि बर्हिः

* श्रुतप्रकाशिका *

साम्पादिकत्वदर्शनाच्चाग्निहोत्रशब्दस्य नैयमिकाग्निहोत्रधर्मातिदेशार्थत्वाभावेन 'तद्यद्भक्त'मिति वाक्यस्य द्रव्यविशेषविधानार्थत्वाभावादादरवचनस्यापि भोजनपक्षे प्राथम्यरूपाङ्गविधानार्थतया होमलोपपरिहारार्थत्वाभावाच्च भोजनलोपे लोप इति सिद्धान्तयन्ति । अन्ये तु— द्रव्यदेवतासम्बन्धेनापूर्वकर्मत्वावगमात् परार्थद्रव्यनियममात्रविधिः, प्राथम्यविधानं चातिथिभोजनेन भक्तव्यये प्राणाग्निहोत्रलोपपरिहारार्थमिति पूर्वपक्षमाहुः, अन्यत्तुल्यम् । तदिदमनुपपन्नम्, प्राणाहुतिमात्रविषयत्वे विचारस्य विद्यातदुपयोगिविषयत्वाभावेन पादसङ्गत्यभावात्, प्राणाहुतिष्वग्निहोत्रदृष्टिविषयत्वेऽनन्तराधिकरणन्यायेन उद्गीथाद्युपासनानामिवानियमस्य सिद्धतया कृतकरत्वाच्च, आमिक्षायागे नियतमपि वाजिनं दध्यानयनादेरप्रयोजकमित्यनियतस्याग्निहोत्रदृष्टिचिन्तनस्य प्रयोजकत्वं हि दूरोत्सारितम्, पूर्वपक्षहेत्वभावाच्च नारम्भणीयता, न चादरवचनं हेतुः, तस्य साधकत्वाप्रतीतेः । पूर्वपक्षहेतवोऽपि हि यावद्दौर्बल्यनिश्चयं साध्यसाधकतया प्रतीयन्ते, किमतिथिभोजनप्राथम्यनिन्दनं हेतुरुत प्राणाग्निहोत्रप्राथम्यम् , न प्रथमः, निन्दनस्य निन्दितविपरीतार्थविधेयतावगमकत्वात्, अवगोरणनिन्दा हि तन्निवृत्तेर्विधेयतां गमयति, अतोऽतिथिभोजनप्राथम्यनिन्दनं स्वामिभोजनप्राथम्यं गम-

* भावप्रकाशिका *

हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' इति उरःप्रभृतिकं वेद्यादित्वेन सम्पाद्यते, यदि ह्यग्निहोत्रादिधर्मातिदेशः स्यात्, तर्हि वेद्यादीनां सत्त्वादेव सम्पादनमसङ्गतं स्यात्, कामिन्यां किल कुचनयनादि असता चक्रवाकनलिनादिरूपेण सम्पाद्यते, नतु नद्या चक्रवाकादय एव चक्रवाकादिभिस्सम्पाद्यन्ते , अतोऽप्यवगच्छामो नात्र चोदकप्राप्तिरिति ( आदरवचनस्यापीति ) पूर्वमतिथिभ्योऽश्नीयादिति अतिथिप्राग्भोजनविधायकवचनस्येत्यर्थः, ( विद्यातदुपयोगिविषयत्वाभावेनेति ) प्राणाहुतीनां पुरुषार्थतया वैश्वानरविद्याङ्गत्वाभावात्, वैश्वानरविद्याप्रकरणे 'उर एव वेदिर्लोमानि बर्हिः' इत्यादिसन्दर्भेण प्राणाहुतावग्निहोत्रदृष्टेरेव वैश्वानरविद्याङ्गतया विधानोपपत्तेरिति भावः, ( यावद्दौर्बल्यनिश्चयमिति ) अत्र साधकत्वस्य सर्वात्मना अप्रतीतेरिति भावः, तदेवोपपादयति ( किमतिथिभोजनप्राथम्यनिन्दनमित्यादि )

# तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रति· बन्धः फलम् ॥ ४१ ॥

१७अधिकरणम्

" ओमित्येतदक्षरमुद्गीथमुपासीत "

इत्यादीनि कर्माङ्गाश्रयाण्युपासनानि कर्माङ्गभूतोद्गी·

* श्रुतप्रकाशिका *

येत्, न तु भक्तालाभेऽपि निष्पाद्यताम्, न द्वितीयः, प्राथम्यविधानस्यानुष्ठानदशायामप्राथम्यमात्रनिवर्त्तकत्वात्, परार्थद्रव्यसाध्यस्याप्रयोजकत्वं च वाजिनसप्तमपदपांसुग्रहणादिषु 'पूर्वकाण्डसिद्धम्—पदकर्माप्रयोजकं नयनस्य परार्थत्वा'दिति, अतोऽनारम्भणीयता ॥ ४० ॥

कामाद्यधिकरणं समाप्तम् ।

तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४१ ॥ सत्यकामत्वादीनामुपसंहार्यत्वमुक्तम्, एवमुद्गीथाद्युपासनानामपि नियमेनोपसंहार्यत्वमिति प्रसङ्गात्सङ्गतिः, उद्गीथोपासनादीनि किं सर्वक्रतुषु प्रोक्षणावघातादिवन्नियमेनोपादेयानि ? उत गोदोहनादिवदनियमेनोपसंहार्याणीति विचारः, किमेतानि क्रत्वर्थानि ? उत गोदोहनादिवत् पुरुषार्थभूतानि ? 'यश्चैनदेवं वेद यश्च न वेद' इत्यनियमदर्शनं किं पुरुषार्थतामवगमयति ? नेति, वीर्यवत्तरत्वश्रुतिः किमपापश्लोकश्रवणवदर्थवादः ? उत फलविधिरिति, अर्थवादश्चेत् 'यश्चैतदेव' मित्यादिवाक्यस्य पुरुषार्थतावगमकत्वाभावेन क्रत्वर्थत्वान्नियमेनोपादेयता, फलविधिश्चेदनियमवाक्यस्य पुरुषार्थत्वगमकतया गोदोहनतुल्यत्वादुपादाना·

* भावप्रकाशिका *

( वाजिनेति ) वाजिनयागेत्यर्थः, अत्र पूर्वकाण्डसिद्धमित्यस्यानन्तरम् 'एकनिष्पत्तेस्सर्वं समं स्यात्, पदकर्माप्रयोजकं नयनस्य परार्थत्वात्' इति पाठस्समीचीनः ॥ ७ ॥ इति कामाद्यधिकरणम् ।

( फलविधिश्चेदनियमवाक्यस्य पुरुषार्थत्वगमकतयेति ) फलविधिश्चेत्तस्यैव पुरुषार्थावगमकतया गोदोहनतुल्यत्वादनियमवाक्यस्याऽप्यनुग्रहाय उपादानानियम इत्यर्थः, ततश्चान्यस्य फलविधित्वे ऽन्यस्य पुरुषार्थत्वगमकत्वोक्तिरयुक्तेति चोद्यं

थादिमुखेन जुह्वादिमुखेन पर्णतादिवत् कर्माङ्गत्वेन निरूढानुष्ठानानीत्युद्गीथाद्युपासनसम्बन्धिनः "यदेव

* श्रुतप्रकाशिका *

नियमः, उपासनस्य निर्द्धारणशब्दवाच्यत्वे हेतुरयम्, छान्दोग्ये कतमत् कतमत् साम कतम उद्गीथ' इति विमृश्य 'वागेवर्क् प्राणस्सामोमित्युद्गीथ' इति निर्द्धारणम्, (ओमित्येतदित्यादि) क्रतुप्रकरणाधीने 'जुहा जुहोती'ति वाक्ये जुहूः होमसाधनत्वेन विहिता, प्रकरणान्तराधीतमपि 'यस्य पर्णमयी जुहूर्भवती'ति वाक्यं जुहूमनूद्य तस्याः पर्णमयत्वं विदधाति, तत्र जुहूद्वारा पर्णमयत्वमङ्गम्, तद्वत् प्रकरणान्तरविहितमप्युपासनमुद्गीथद्वारा क्रत्वङ्गमित्यर्थः। उद्गीथादिविषयस्योपासनस्य प्रकरणान्तराधीतस्यापि क्रत्वङ्गत्वं हि निरूप्यते, तत्र प्रकरणान्तराधीतं क्रत्वङ्गद्वारा तदङ्गभूतं किंचिद्दृष्टान्तीकर्त्तव्यमित्यभिप्रायेण, प्रोक्षणादिषु सत्स्वपि पर्णता दृष्टान्तिता, फलसाधनमेव ह्यनुष्ठेयम्, उपासनस्य च पृथक्फलसाधनत्वे सत्यङ्गत्वमनुपपन्नमित्यत्राह (कर्माङ्गत्वेन निरूढानुष्ठानानीति) अफलस्याप्यङ्गत्वेनानुष्ठानं निरूढमित्यर्थः। पृथक्फलसाधनत्वं श्रुतमिति शङ्कायां 'न स पापं श्लोकं शृणोती'ति पर्णत्वार्थवादवदिदमप्यर्थवाद इत्याह (उद्गीथाद्युपासनसम्बन्धिन इत्यादिना) (वर्त-

* भावप्रकाशिका *

निरस्तम् (हेतुरयमिति) यद्यपि 'कतमा कतमर्क्कतमत्कतमत्साम कतमः कतम उद्गीथ इति' 'का ऋक् किं साम क उद्गीथ' इति ऋक्सामोद्गीथानां विमर्शपूर्वकम् 'वागेव ऋक् प्राणस्साम ओमित्येदक्षरमुद्गीथः' इति निर्धारणपूर्वकमाप्त्यादिगुणकोपासनं विहितमिति तस्य निर्धारणपूर्वकत्वसत्त्वेऽपि न सर्वेषामीदृग्रूपत्वम्, तथाप्युपासनस्य उपास्यनिर्धारणसापेक्षत्वात् सर्वमपि निर्धारणशब्देन लक्ष्यत इति भावः, निश्चयेन मनसोऽवस्थापनमिति भाष्यस्यापि निश्चयपूर्वकोपासनमित्यत्र तात्पर्यात्, (प्रकरणान्तराधीतमपीति) अनारभ्याऽधीतमपीत्यर्थः, एवमुत्तरत्रापि द्रष्टव्यम्, वर्तमाननिर्देशस्य···· फलत्वकल्पनायोगादिति भाष्यमयुक्तम्, फलत्वकल्पकत्वयोगादिति हि वक्तव्यम्, किञ्च अपापश्लोकश्रवणवदित्यप्यसङ्गतम्, अपापश्लोकश्रवण—

विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम्भवति" इति वर्तमाननिर्देशस्य पर्णतादिसम्बन्धपापश्लोकश्रवणवत् पृथक्फलत्वकल्पनायोगात् क्रतुषु नियमेनोपसंहार्याणीति ।

एवं प्राप्ते प्रचक्ष्महे—तन्निर्धारणानियमः—इति । निर्धारणं निश्चयेन मनसोऽवस्थापनम्, ध्यानमित्यर्थः । तन्निर्धारणानियमः— कर्मसूद्गीथाद्युपासनानामनियमः ; कुतः ? तद्दृष्टेः, उपलभ्यते ह्युपासनानुष्ठाना-

---

* श्रुतप्रकाशिका *

मानानिर्देशस्येति ) वर्तमानवन्निर्देशो यस्येति बहुव्रीहिः, वीर्यवत्तरत्वस्येत्यध्याहार्यम् । ‘ गोदोहनेन पशुकामस्य प्रणये ’ इत्यत्र हि विधिप्रत्ययोऽस्तीति तद्व्यावृत्तिः, पशुकामस्य प्रणयनसाधनत्वं हि गोदोहनस्य विधेयम्, नान्यस्य, अतः फलेऽपि विधिकटाक्षोऽस्ति, स तु नात्र विद्यत इत्यर्थः, फलस्य वाक्यान्तरस्थत्वाद्विप्रकर्षोऽप्यभिप्रेतः ।

( एवं प्राप्त इति ) अर्थवादोक्तमपि फलं विध्यपेक्षितं स्वीकार्यमित्यभ्युपगमयितुं

* भावप्रकाशिका *

शब्दस्यैव दृष्टान्तीकर्तुमुचितत्वादित्यत आह ( वर्तमानवन्निर्देशो यस्येति बहुव्रीहिरिति ) वर्तमानः वर्तमानत्वप्रतिपादक इत्यर्थः, गोदोहनवाक्ये गोदोहनस्य प्रणयनसम्बन्धपशुफलसम्बन्धबोधनात् वाक्यभेद इत्यत आह ( पशुकामस्य प्रणयनसाधनत्वं हीति ) अयमत्रान्वयः, गोदोहनस्य प्रणयनसाधनत्वं हि पशुकामस्य विधेयम्, प्रणयनगोदोहनयोः लोकसिद्धः क्रियाकारकलक्षणसम्बन्धः पशुकामस्य विधेय इत्यर्थः, इन्द्रियकामाधिकरणे होमे कारकीभूतं दधि फलकामस्य विधीयत इत्युपगमादिति भावः, ( नान्यस्येति ) विधेयतेत्यध्याहारः, लोकसिद्धत्वात्क्रियाकारकसम्बन्धस्य न विधेयत्वमित्यर्थः, ( फलेऽपीति ) अत्र अपिशब्दः फलस्य रागप्राप्तत्वेपीत्यर्थसूचनार्थः, यद्यपि

नियमः "तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद" इत्यविदुषोऽप्यनुष्ठानवचनात् । न चाङ्गत्वे सत्युपासनस्यानुष्ठानानियम उपपद्यते । एवमुपासनस्यानङ्गत्वे निश्चिते सत्युपासनविधेः फलाकाङ्क्षायां रात्रिसत्रन्यायेन वीर्यवत्तरत्वं कर्मफलपृथग्भूतं फलमित्यवगम्यते । किमिदं वीर्यवत्तरत्वम्? कर्मफलस्यैवाप्रतिबन्धः । प्रतिबध्यते हि कर्मफलं प्रबलकर्मान्तरफलेन तावन्तं कालम्; तदभावोऽप्रतिबन्धः । कर्मफलात्स्वर्गादिलक्षणात् पृथग्भूतमेव फलम् । तदिदमुच्यते—पृथग्घ्यप्रतिबन्धः फलमिति । अतः कर्माङ्गाश्रयाणामपि पृथक्फलत्वात् गोदोहनादिवत्कर्मस्वूद्गीथाद्युपासनानामनियमेनोपसंहारः ॥ ४१ ॥

तन्निर्धारणानियमाधिकरणं समाप्तम् ॥



* श्रुतप्रकाशिका *

रात्रिसत्रन्यायेनेत्युक्तम् ( गोदोहनादिवदिति ) नियमेनोपादेयं ह्यङ्गम्, पशुकामनाऽ-

छ भावप्रकाशिका छ

फलस्य लिप्सासूत्रोक्तन्यायेन न विधेयत्वम्, अथापि फलसम्बन्धितया कर्मविधानस्य प्राप्ताप्राप्तविवेकेन फलविधौ पर्यवसानसम्भवादिति भावः, ( नियमेनोपादेयं ह्यङ्गमित्यादि ) अत्र चोदयन्ति, नियमेनोपादेयं ह्यङ्गमित्युक्तिर्न सम्भवति, अनियमानामपि षोडशिग्रहादीनामङ्गत्वदर्शनात्, पशुकामनाऽस्ति चेद्गोदोहनोपसंहार इत्यप्ययुक्तम्, गोदोहनस्य क्रत्वर्थत्ववादिनं पूर्वपक्षिणं प्रति गोदोहनस्य अनियतत्वोपन्यासासम्प्रतिपत्तेः, अङ्गत्वाभावाद्गोदोहनस्य न क्रत्वर्थत्वमित्यप्ययुक्तम्, साध्याविशेषात्, अपि तु पुरुषार्थत्वमेवेति निर्णीतं

## प्रदानवदेव तदुक्तम् ॥ ४२ ॥

१८ अधिकरणम्

दहरविद्यायाम्– [1]"तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्" इति दहराकाशस्य परमात्मन उपासनमुक्त्वा "एतांश्च सत्यान्कामा"निति गुणानामपि पृथगुपासनं विहितम् ।

* श्रुतप्रकाशिका *

ऽस्ति चेत् गोदोहनोपसंहारः, न त्वन्यदा, अतोऽङ्गत्वाभावात् गोदोहनस्य न क्रत्वर्थत्वम्, अपि तु पुरुषार्थत्वमेवेति निर्णीतं कर्मकाण्डे।– अन्येतु 'यदेव विद्यया करोति' इति कर्मणि विद्याया नियमितत्वात् क्रत्वर्थमिति पूर्वपक्षयुक्तिमाहुः, तदयुक्तम्, तस्या फलातिशयप्रतीतेः, विद्यावतः कर्मणो वीर्यवत्तरत्वाद्विद्याहीनस्य कर्मणो वीर्यवत्वं ह्यनुज्ञायते, अतो वीर्यवत्तरत्वफलसत्तामुपगम्य तच्छ्रवणस्यार्थवादत्वं पूर्वपक्षिणा वाच्यम्, अर्थवादत्वं च हेत्वन्तरेणाङ्गत्वे सिद्धे वक्तव्यम्, अतोऽव्यभिचरितक्रतुसम्बन्धिपदार्थसम्बन्ध एव पूर्वपक्षहेतुः ॥ ४१ ॥ ॥ तन्निर्धारणानियमाधिकरणं समाप्तम् ॥

प्रदानवदेव तदुक्तम् ॥ ४२ ॥ पूर्वाधिकरणं प्रसङ्गान्निरूपितम् । अथ

* भावप्रकाशिका *

कर्मकाण्डे– इत्यप्ययुक्तम्, अनया प्रणाड्या निर्णयस्य क्वाप्यनुपलम्भादिति, तदेतत् वाक्यार्थानभिज्ञानविजृम्भणम्, एवं ह्यस्यार्थः, अङ्गं हि नियमेनोपादेयम्, अङ्गस्यैव सतो नियमेनोपादेयत्वम् । अतो अङ्गत्वाभावात् पशुकामना अस्ति चेद्गोदोहनोपसंहारः, नत्वन्यदेत्यन्वयः । ननु कथं गोदोहनस्याङ्गत्वाभावः इत्याशङ्कयाह ( गोदोहनस्य न क्रत्वर्थत्वम् अपि तु पुरुषार्थत्वमेवेति निर्णीतमिति ) चतुर्थे लिप्सासूत्र इति भावः । अङ्गत्वनिराकरणप्रकारः 'अङ्गेषु यथाश्रयभावः' इत्यत्र प्रपञ्चयिष्यते ।

इति तन्निर्धारणानियमाधिकरणम् ।

1. छा० ८-१-६ ॥

तत्र संशयः– गुणचिन्तनेऽपि तत्तद्गुणविशिष्टतया दहरस्यात्मनश्चिन्तनमावर्तनीयम्, उत नेति। दहराकाशस्यैवापहतपाप्मत्वादीनां गुणित्वात् तस्य च सकृदेवानुसन्धातुं शक्यत्वात्, गुणार्थं तच्चिन्तनं नावर्तनीयम्।

इति प्राप्त उच्यते–प्रदानवदेव–इति। प्रदानवदावर्तनीयमेवेत्यर्थः। यद्यपि दहराकाश एक एवापहतपाप्मत्वादिगुणानां गुणी; स च प्रथमं चिन्तितः; तथाऽपि स्वरूपमात्रात् गुणविशिष्टाकारस्य भिन्नत्वात् 'अपहतपाप्मा विजरः' इत्यादिना गुणविशिष्टतया चोपास्यत्वेन विहितत्वात्पूर्वं स्वरूपेणा-

---

* श्रुतप्रकाशिका *

तत्पूर्वदहरविद्याविषयं निरूपणं क्रियत इति सङ्गतिः। दहरविद्यायां तत्तद्गुणचिन्तने तत्तद्गुणविशिष्टतया दहरचिन्तनमावर्तनीयम्, नेति, किं दहरमात्रचिन्तने गुणवद्दहरचिन्तनमपि कृतम्, नेति, कृतं चेदनावर्तनीयम्, न चेदावर्तनीयम्, (दहरेत्यादि) केवलगुणिचिन्तनं नाम–आनन्दत्वादिविशिष्टस्वरूपचिन्तनम्, गुणाष्टकचिन्तनं गुणचिन्तनम्, (तस्य च सकृदेवानुसन्धातुं शक्यत्वादिति) सकृदेव–तन्त्रेणेत्यर्थः, स्वरूपचिन्तनार्थं गुणचिन्तनार्थं च तन्त्रेणानुसन्धातुं शक्यत्वादित्यर्थः।

(गुणविशिष्टाकारस्य भिन्नत्वात्) गुणविशिष्टाकारः गुणसम्बन्धिरूपसमुदाय इत्यर्थः। तस्य स्वरूपमात्राद् भिन्नत्वात्, न हि स्वरूपमात्रं गुणानां गुणिनश्च समुदायो भवतीत्यर्थः। (अपहतपाप्मा विजर इत्यादिना गुणविशिष्टतया चोपास्यत्वेन विहितत्वादिति) 'अपहतपाप्मा विजरः'

* भावप्रकाशिका *

(गुणचिन्तनार्थञ्चेति) ब्रह्मण इमे गुणा अपहतपाप्मत्वादय इत्यनु-

नुसंहितस्यापहतपाप्मत्वादिविशिष्टतयाऽनुसन्धानार्थ-मावृत्तिः कर्तव्या । "यथेन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेत्" "इन्द्रायाधिराजाय" इन्द्राय स्वराज्ञे" इतीन्द्रस्यैव राजत्वादिगुणविशिष्टत्वेऽपि तत्तद्गुणसम्बन्धाकारस्य भिन्नत्वात्प्रदानावृत्तिः क्रियते, तदुक्तं साङ्कर्षणे "नाना वा देवतापृथक्त्वात्" इति ॥ ४२ ॥

प्रदानाधिकरणं समाप्तम् ।

* श्रुतप्रकाशिका *

इत्यादिशब्दानां गुणिपर्यन्ताभिधायित्वात् 'एतांश्च सत्यान् कामान्' इत्यत्रापि गुणिपर्यन्तानामेव गुणानामुपासनं विहितमित्यर्थः ।

* भावप्रकाशिका *

सन्धानार्थमित्यर्थः ( गुणिपर्यन्तानामेव गुणानाम् उपासनं विहितमिति ) 'तस्मिन्यदन्तस्तदन्वेष्टव्य'मिति वाक्ये यो दहराकाशः यच्च तदन्तर्वर्ति तदुभयमन्वेष्टव्यमिति द्वयोरपि साम्येनान्वेष्टव्यत्वप्रतीतेः, 'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' इति फलवाक्येपि द्वयोरपि साम्यप्रतीतेः, द्वावपि पृथगेव चिन्तनीयाविति पूर्वपक्ष्यभिप्रायः, 'अस्मिन्कामाः समाहिताः' इति ब्रह्मणि कामसमाधानाधारत्वमुक्त्वा के ते कामा इत्याकाङ्क्षायां निष्कृष्याऽपहतपाप्मत्वं विजरत्वमित्यनुक्त्वा 'अपहतपाप्मा विजरो विमृत्यु'रिति तद्विशिष्टविशेष्यपर्यन्ततया निर्देशात् अनेनैव प्रकारेण उपासनं कर्तव्यमिति श्रुत्याशय उन्नीयत इति वैशिष्ट्यमनुसन्धेयम् । वैशिष्ट्ये च विशेष्यविशेषणतत्सम्बन्धानामन्तर्गतत्वात् सम्बन्धिचिन्तने विशेष्यावृत्तिस्सिद्धेति सिद्धान्त्याशयः, भाष्ये— विशिष्टतयानुसन्धानार्थमावृत्तिः कर्तव्येति, वैशिष्ट्यस्यापि विशिष्टान्तःपातित्वात् तस्य च विशेष्यविशेषणोभयनिरूप्यस्य प्रतीतौ उभयोरपि प्रतीत्यारोहमन्तरेणाऽसम्भवादेकप्रतीत्युपारूढत्वं त्रयाणां वक्तव्यमिति विशेष्यस्वरूपाचिन्तनावृत्तिरिसिद्धेत्यर्थः, ( नाना वा देवतापृथ-

* श्रुतप्रकाशिका *

परे चापरे च— छान्दोग्ये वाजसनेयके च अध्यात्मं वागादीनां प्राणः श्रेष्ठोऽवधारितः, अधिदैवमग्न्यादीनां वायुरिति तदेतदुदाहृत्य वायुप्राणयोस्तत्त्वैक्यात् अपृथक्चिन्तनमिति विमृश्य पृथक्कीर्त्तनं सिद्धान्तयन्ति । अन्ये तु वाजसनेयके 'तद्यत् सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्' इत्येतदुदाहृत्य पूर्ववत् पूर्वपक्षसिद्धान्तौ वदन्ति, तदयुक्तम्— 'सम्बन्धादेवमन्यत्रापी'त्यत्र स्थानभेदे विद्याभेदस्य समर्थितत्वात्, तस्य विद्याभेदहेतुत्वं वेद्यान्तर्भावाद्वेद्यबहिर्भावे वित्तिभेदापादकत्वानुपपत्तेः, अतोऽगावाख्यायां दधि-

* भावप्रकाशिका *

क्त्वादिति ) तन्नानाप्रदानाधिकरणमित्थम्— अस्ति त्रैधातवीयेष्टिः 'इन्द्राय राज्ञे' इत्यादिवचनविहिता, सा त्रिपुरोडाशा, तेषां पुरोडाशानाम् उपर्युपरि अधिश्रयणं सर्वेषां युगपदवदानञ्च विहितम्, तेषां पूर्वार्धादवदानं प्रकृतिवत् कर्तुं शक्यम् । तथापि मध्यादवदानं कर्तुमशक्यम्, पुरोडाशानां मध्ये नलकप्रवेशाद्युपायेन मध्यादपि युगपदवदानं ग्राह्यम्, एवं स्थिते प्रदानमपि युगपत्कर्तव्यम्, क्रमेण वेति संशये 'तेषामपृथक्प्रदानमवदानैकत्वात्' इति सूत्रेण अवदानवत् प्रदानमपि युगपदेव कार्यमिति पूर्वः पक्षः । तत्रेदं सिद्धान्तसूत्रम् 'नाना वा देवतापृथक्त्वा'दिति, त्रयाणां यागद्रव्याणां भेदात् विशिष्टरूपाणां देवतानाञ्च भेदात् त्रिभिर्द्रव्यदेवतासम्बन्धैः कल्प्यानाञ्च यागानां तत्तद्देवतोद्देशेन क्रमिकाणि प्रदानानि कर्तव्यानीति सूत्रार्थः । ( परे चापरे चेत्यादि ) ( वायुप्राणयोस्तत्त्वैक्यादिति ) 'यः प्राणस्स वायुः' इति विस्पष्टमेकत्वविज्ञानात् विद्यैक्याच्च उभयविषयमेकमेव चिन्तनम्, 'ऐन्द्रयोर्दधिपयसोः प्रदानवत्' इति पूर्वपक्षं कृत्वा विद्याया एकत्वेऽपि पृथगेव प्रवृत्तिः, यथा अग्निहोत्रहोमस्यैकत्वेपि युगपदनुपसंहरणीयसायम्प्रातःकालरूपगुणभेदात् प्रवृत्तिभेदः, एवमिहापि युगपदनुपसंहरणीयस्थानद्वयवशेन प्रयोगभेदोस्ति, प्रदानवत्, यथा 'इन्द्राय राज्ञे' इति त्रिपुरोडाशायां त्रैधातवीयायामिष्टौ देवतापृथक्त्वात् प्रदानपृथक्त्वम्, इयांस्तु विशेषः— दृष्टान्ते यागभेदोस्ति, प्रकृते तु न विद्याभेदोस्तीति प्रवृत्तिभेदांशे दृष्टान्त इति परे वर्णयन्तीत्यर्थः ( विद्याभेदस्य समर्थितत्वादिति ) असद्भाष्यकृतेति शेषः ( वित्ति-

# लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४३ ॥

* श्रुतप्रकाशिका *

पयसोः प्रदानवत् तन्त्रेणेति पूर्वपक्षशङ्काऽनुपपन्ना, तत्र हीन्द्र एवोद्देश्य इति नोद्देश्यभेदः, अत्र तूपास्यरूपभेदात्तन्त्रेण चिन्तनं शङ्कनीयम्, स्थानद्वयविशिष्टमेकमिति चिन्ता युज्यत इति चेत्— न, विद्याद्वयोत्तीर्णत्वेन द्वयोस्तन्त्रानुष्ठानासिद्धेः, तस्माद्विद्यैकत्वे स्थिते पृथगपृथक्चिन्तनविचारो यथोपपद्यते, तथा विषयः प्रदर्शनीयः, अतो दहरविद्यायामेवैषा चिन्ता युक्ता ॥ ४२ ॥

॥ प्रदानाधिकरणं समाप्तम् ॥

लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४३ ॥ पूर्वप्रकृतविद्यैकवाक्यत्वेन

ॐ भावप्रकाशिका ॐ

भेदापादकत्वेति ) यद्यपि परमते नात्र विद्याभेदः, तथापि स्वमतदार्ढ्येन इदमुक्तमिति द्रष्टव्यम्, परपक्षे प्रदानवदेवेति सूत्रमयुक्तम् 'इन्द्राय राज्ञे' इत्यादौ प्रदानभेदस्य सिद्धतया तद्दृष्टान्तीकरणेन दार्ष्टान्तिकेपि विद्याभेदस्यैव प्रतीतेर्विद्यैक्यवादिपरमते सूत्रमस्वरसमिति द्रष्टव्यम् ( विद्याद्वयोत्तीर्णत्वेनेति ) विद्याद्वयाकारभ्रष्टत्वादिति भावः ॥ ७ ॥

इति प्रदानाधिकरणम् ।

नन्वस्मिन्नधिकरणे नारायणानुवाकस्य सकलविद्योपास्यनिर्धारकत्वम् , उत प्रकृतदहरविद्योपास्यनिर्धारकत्वमिति विचारो व्यर्थः, दहरविद्योपास्यनिर्णायकत्वेऽपि दहरविद्याया मोक्षसाधनतया तद्विद्योपास्यस्यैव सर्वविद्योपास्यत्वं सिद्धमेव, एकस्यैव मोक्षसाधनज्ञानविषयत्वात् 'नान्यः पन्था' इति इतरविषयज्ञानस्य मोक्षासाधनत्वश्रुतेरिति चेत्—सत्यम्, एकस्यैव मोक्षसाधनज्ञानविषयत्वमित्यर्थोपजीवनमन्तरेणापि नारायणस्यैव सर्वविद्याविषयत्वं विधिबलात्सिध्यतीति प्रतिपाद्यत इति न कश्चिद्दोषः, अस्मिन्नधिकरणे 'पद्मकोशप्रतीकाशम्' इति प्रकृतप्रत्यभिज्ञानात् प्रकृतं दह्रमनूद्य विश्वोपजीव्यत्वपरब्रह्मत्वनारायणत्वपरमधामत्वब्रह्मत्वशिवत्वादिकं विधीयते, 'नारायणपरं ब्रह्म' इत्यादीनाम् 'स ब्रह्मा स शिवस्सेन्द्रः सोऽक्षरः परमः स्वराट्' इति वाक्यसारूप्यात्, ननु 'नारायणपरं ब्रह्म' इत्यादिवाक्यनिर्दिष्टानां मध्ये अन्यतमानुवादेन अन्यतमस्य विधानं प्रमाणाभावादिति पूर्वपक्ष्यभिप्रायः,

१९ अधिकरणम्

तैत्तिरीयके दहरविद्यानन्तरमधीयते [1]"सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् । विश्वं नारायणं देवमक्षरं परमं प्रभुम्" इत्यारभ्य "सोऽक्षरः परमः स्वराट्"इत्यन्तम् । तत्र संशयः— किं पूर्वप्रकृतविद्यैकविद्यात्वेन तदुपास्यविशेषनिर्द्धारण-मनेन क्रियते ? उत सर्ववेदान्तोदितपरविद्योपास्य-विशेषनिर्धारणम्–इति । किं युक्तम् ? दहरविद्यो-पास्यविशेषनिर्धारणमिति । कुतः ? प्रकरणात् । पूर्वस्मिन्ननुवाके दहरविद्या हि प्रकृता "दहं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दहं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्" इति । अस्मिंश्चानुवाके "पद्मकोशप्रतीकाशं हृदयं

* श्रुतप्रकाशिका *

सङ्गतिः, ( किं पूर्वप्रकृतेति ) परविद्येति दृष्टिविधिव्यावृत्तिः, किं सर्वासु परविद्यासु नारायण एवोपास्यः ? उत दहरविद्यामात्रे ? किं नारायणानुवाके सर्वविद्यानामुपास्यविशेषो निर्धार्यते ? उत दहरविद्याया एव, किमत्र दहरोद्देशेन नारायणत्वं विधीयते ? उत सर्वविद्योपास्योद्देशेनेति, किं हृदयायतनत्वश्रवणमनुरोद्धव्यम् ? उत लिङ्गभूयस्त्वम् , हृदयायतनत्वश्रवणानुरोधे दहरोद्देशेन नारायणत्वविधानान्नारायणानुवाकस्य दहरविद्यामात्रोपास्यविषयत्वात् तस्यामेव नारायण उपास्यस्स्यात्, लिङ्गभूयस्त्वानुरोधे सर्वोपास्योद्देशेन नारायणत्वविधानान्नारायणानुवाकस्य सर्वविद्योपास्यविशेषनिर्द्धारकतया स-

* भावप्रकाशिका *

भाष्ये– दहरविद्यानन्तरमिति, विद्याशब्दोऽत्र तत्प्रतिपादकवाक्यपरः

1. तै० ना–१ अनु० ॥

चाप्यधोमुखम्" इत्यादिना हृदयपुण्डरीकाभिधानमस्य नारायणानुवाकस्य दहरविद्योपास्यनिर्धारणार्थत्वमुपोद्बलयतीति ।

एवं प्राप्ते प्रचक्ष्महे—लिङ्गभूयस्त्वादिति । अस्य निखिलपरविद्योपास्यविशेषनिर्धारणार्थत्वे भूयांसि लिङ्गानि दृश्यन्ते, तथा हि परविद्यास्वक्षरशिवशम्भुपरब्रह्मपरज्योतिःपरतत्त्वपरमात्मादिशब्दनिर्दिष्टमुपास्यं वस्त्विह तैरेव शब्दैरनूद्य तस्य नारायणत्वं विधीयते; भूयसीषु विद्यासु श्रुतानन्नूद्य नारायणत्वविधानभूयस्त्वं नारायण एव सर्वविद्यासूपास्यमस्थूलत्वादिविशेषितानन्दादिगुणकं परं ब्रह्मेति विशेषनिर्णये भूयो—बहुतरं लिङ्गं भवति । अत्र लिङ्गशब्दश्चिन्हपर्यायः, चिन्हभूतं वाक्यं बहुतरमस्तीत्यर्थः । तद्धि प्रकरणाद्बलीयः, तदप्युक्तम्– प्रथमे काण्डे "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात" इति । यत्तूक्तम्— "पद्मकोशप्रतीकाश"मित्यादिवचनं दहरशेषत्वम-

* श्रुतप्रकाशिका *

वीसु परविद्यासु नारायण एवोपास्य इति 'आत्मा गुहायां निहितोऽस्य जन्तो' रिति पूर्वानुवाके आत्मशब्दः श्रुतः, अत्रापि 'आत्मा नारायणः परः' इत्यात्मशब्दश्रवणाद्दहरविद्यामात्रान्वयीत्यर्थसिद्धम् ।

( एवं प्राप्त इति ) ( चिन्हपर्याय इति ) न तु श्रुतिलिङ्गादिषु लिङ्गमित्यर्थः, ( पद्मकोशेत्यादि ) यथा 'ऐतदात्म्यमिदं सर्व' मिति सामान्येनोक्तं ब्रह्मात्म-

स्योपोद्बलयतीति ; तन्न, बलीयसा प्रमाणेन सर्वविद्योपास्यनिर्धारणार्थत्वेऽवधृते सति दहरविद्याया-मपि तस्यैव नारायणस्योपास्यत्वेन तद्वचनोपपत्तेः । न च "सहस्रशीर्षम्" इत्यादिद्वितीयानिर्देशेन पूर्वानुवाकोदितोपासिना सम्बन्धः शङ्कनीयः, "तस्मिन् यदन्तस्तदुपासितव्यम्" इत्युपासिगतेन कृत्प्रत्ययेनोपास्यस्य कर्मणोऽभिहितत्वात्तदुपास्ये द्वितीयानुपपत्तेः, "विश्वमेवेदं पुरुषः" "तत्त्वं नारायणः परः" इत्यादिप्रथमानिर्देशाच्च प्रथमार्थे द्वितीया वेदितव्या । "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" "तस्याः शिखाया मध्ये पर-

* श्रुतप्रकाशिका *

कत्वं 'तत्त्वमसी' ति जीवविशेषे निगमितम्, तथा नारायण एव सर्वविद्योपास्यः, तस्मादस्मिन्नपि विद्याविशेषे स एवोपास्य इति विशेषे तत्पदर्शन-मित्यर्थः । ( न च सहस्रशीर्षमित्यादीति ) 'येनावृतं खं च दिवं महीं चे'तिवद्द्रष्टव्यमिति भावः । 'विश्वमेवेद' मित्यादिना प्रथमार्थत्वमेव सन्निकृष्टवाक्यैरुपपादितम्, द्वितीयाविभक्त्यन्तवाक्यानुगुणं प्रथमान्तानि वाक्यानि किं न नेयानीति शङ्कायामुपरितनवाक्यैश्च प्रथमार्थत्वमुपपादयति ( अन्तर्बहिश्चेति ) उपासीतेति विधिपदाध्याहारश्च स्यादित्यर्थसिद्धम्, विद्यादुपासीतेत्या-दिविधायकपदरहितानां भगवत्परत्वपराणामनेकवाक्यानां पर्यालोचनया सर्वविद्यासूपास्यविशेषनिर्धारणपरत्वमस्यानुवाकस्य प्रतीयते, पूर्वानुवाकोक्तदहरविद्याशेषत्वे पूर्वापरवाक्यानामर्थस्वभावविरोधः, विधिपदाध्याहारः, प्रथमान्तपदा-नामस्वारस्यं च, सर्वविद्योपास्यविशेषनिर्द्धारणपरत्वे 'येनावृतं खं च दिवं महीं च' इत्यादिवद्द्वितीयान्तपदमात्रास्वारस्यम्, न तु विधिपदाध्याहारः, नापि पूर्वापरवाक्यावगतार्थस्वभावविरोधः । ननु प्रथमार्थत्वे सति पूर्वानुवाकस्थेन

मात्मा व्यवस्थितः । स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्" इति निर्देशैः सर्वस्मात्परो नारायण एव सर्वत्रोपास्य इति निर्णीयमानत्वाच्च प्रथमार्थे द्वितीयेति निश्चीयते ॥ ४३ ॥

लिङ्गभूयस्त्वाधिकरणं समाप्तम् ॥

* श्रुतप्रकाशिका *

उपासितव्यमिति पदेनान्वयो घटते, नैवम्-- स्वारसिकेन सर्वस्मात्परत्वप्रतिपादनेन वाक्यस्य निराकाङ्क्षत्वे सत्यपि पूर्वानुवाकस्थपदाकर्षणेनान्वयकल्पनाऽयोगात्, ( सर्वस्मात्परो नारायण एवेति ) अस्यायमभिप्रायः—केचित् 'नारायणपरं ब्रह्म' इतिवाक्ये नारायणात्परमिति अन्तर्गतसमासं वदन्ति, तदयुक्तम्, प्रातिपदिकेन विभक्त्यर्थलक्षणा हि समासः, मुख्यार्थे सम्भवति लक्षणानुपपत्तेः, समासेऽपि निषादस्थपतिन्यायेन नारायण एव परमिति प्रथमाविभक्तिस्वीकारोपपत्तेः, महोपनिषदि 'नारायणः परं ब्रह्म' इति व्यासेन समासार्थावगमात्, अन्यथा पूर्वापरवाक्यविरोधात्, 'तत्त्वं नारायणः परः' इति विरोधात्, श्रुत्यन्तरविरोधात्, 'सुपां सुलु' गित्यादिसूत्रेण विभक्तिलोपेनासमासेऽपि नारायणशब्दस्य प्रथमान्तत्वसाधुत्वाच्चेति, आत्मशब्दश्च 'आत्मा वा अरे द्रष्टव्यः' 'आत्मा वा इदमेक एव' 'आत्मनस्तु कामाय' 'आत्मानमेव लोकम्' 'तमेवैकं ध्यायथात्मान' मित्यात्मशब्दस्य बहूपनिषत्सूद्घोषात्तेष्वपि नारायणस्यैवोपास्यत्वसाधकः ।

इतरे त्रयोऽपि 'लिङ्गभूयस्त्वा' दिति सूत्रमुत्तराधिकरणशेषं सिद्धान्तोपक्रमं व्याचक्षते, 'तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते'

* भावप्रकाशिका *

( इतरे त्रयोपीत्यादि ) 'सर्वाणि भूतानि विचिन्वन्त्यपि स्वपते' इतिचयनप्रयोगप्रातत्यदर्शनं लिङ्गम्, एषां क्रियाननुप्रवेशेन स्वातन्त्र्ये यदि हि क्रियानुप्रवेशस्स्यात्, क्रियाप्रयोगस्याल्पकालत्वात् प्रातत्येनैषां प्रयोगोऽनर्थकः, ततश्च प्रातत्यलिङ्गेन विद्याविधिरेव स्वतन्त्रोऽभ्युपगन्तव्यः, न क्रियाशेष इत्यर्थः

* श्रुतप्रकाशिका *

इत्यादीनि भूयांसि लिङ्गानि, लिङ्गं च प्रकरणात् बलीय इति । 'पूर्वविकल्पः' इत्यादिपूर्वपक्षसूत्रद्वयम्, तदयुक्तम्, लिङ्गे उपन्यस्ते दुर्बलप्रकरणेन पूर्वपक्षोत्थानायोगात् । ननु सत्यामन्यस्यां प्राप्तौ गुणवादेनाप्युपपद्यमानं तल्लिङ्गं न प्रकरणं बाधितुमुत्सहत इति चेत्—तर्हि श्रुत्यादिबलीयस्त्वादिति सिद्धान्तदशायां आदिशब्दोपात्तत्वं दुर्बलस्य लिङ्गस्यानुपपन्नम् । ननु तत्र प्राबल्यहेतुर्विवक्षित इति चेन्न—अशब्दत्वात्, अभिप्रेत इति चेत्—कथमभिप्रायः, श्रुतविध्युद्देशानामन्यार्थदर्शनानां तदेकवाक्यत्वादर्थान्तराप्रापकत्वम्, अत्र तु विस्पष्टविध्यन्तरानुपलब्धेर्नार्थवादत्वम्, किन्तु 'वचनानि त्वपूर्वत्वा'दित्यादिना विधिः कल्पनीय इति चेत्—तर्हि 'लिङ्गभूयस्त्वा'दिति सूत्रवैयर्थ्यम्, अत्रोक्तस्य सिद्धान्तहेतोस्तत्प्राबल्यस्य च सूत्रान्तरसिद्धत्वात्, पृथगधिकरणत्वे तु सप्रयोजनत्वम्, 'दर्शनाच्चे'त्येतत् पूर्वोक्तलिङ्गदर्शनादिति परे चापरेचाहुः, तदयुक्तम्, लिङ्गभूयस्त्वादित्यनेन श्रुत्यादीत्यादिशब्देन च पुनरुक्तेः, 'दृष्टश्च तद्वत'मित्यस्य क्रियाप्रकरणादुत्कर्षेण स्वातन्त्र्याङ्गीकारो मनश्चितादीनां न्याय्यः, राजसूयप-

* भावप्रकाशिका *

'यत्किञ्चेमानि मनसा सङ्कल्पयन्ति तेषामेव सा कृति'रिति सङ्कल्पस्य—मनस्सङ्कल्पस्याग्निकृतित्वश्रवणमित्येवमादिकमादिपदग्राह्यम्, ( ननु सत्यामन्यस्यां प्राप्ताविति ) अयम्भावः— सत्यं लिङ्गानि मनश्चितादीनामक्रियाशेषत्वेन स्वातन्त्र्यप्रतिपादकानि प्रमाणप्रापितं तु स्वातन्त्र्यमुपोद्बलयन्ति, नचास्ति स्वातन्त्र्यप्रतिपादकमन्यत्प्रमाणम्, नचेदं सामर्थ्यलक्षणं लिङ्गम्, येनेदं स्वातन्त्र्येण प्रतिपादकं प्रमाणं भवेत्, तद्धितसामर्थ्यं शब्दगतं अर्थगतं वा स्यात्, यथा पूषाद्यनुमन्त्रणमन्त्रस्य पूषाद्यनुमन्त्रणे, यथा वा 'पशुना यजेते'त्यत्र एकत्वसंख्यार्थस्य संख्येयावच्छेदसामर्थ्यम्, नचेहान्यार्थदर्शनलक्षणं लिङ्गं तथा भवितुमर्हति, स्तुत्यर्थत्वेनाप्युपपत्तेः, ततश्च सामर्थ्यलक्षणलिङ्गस्य विरोधिनोऽभावात् निष्प्रत्यूहेन प्रकरणेन मनश्चितादीनां क्रियाशेषतैवाऽध्यवसीयत इति ( विधिः कल्पनीय इति चेदिति ) ततश्चैतेभ्यो यादृशोऽर्थः प्रतीयते तदनुरूप एव कल्पनीयः, प्रतीयते चैतेभ्यो मनश्चितादीनां प्रातर्थ्यं कर्मपारतन्त्र्यविरोधि, अतो मनोव्यापारेषु अग्निदृष्टिविधयः स्वतन्त्रा नान्यवि-

* श्रुतप्रकाशिका *

करणादवेष्टेरुत्कर्षो दृष्ट इति, तदुक्तं भेदलक्षणे 'अवेष्टौ यज्ञसंयोगा'दितीति त्रयोऽप्याहुः, ततोऽपि विधिकल्पनपरत्वमुचितम्, स्वातन्त्र्यस्यापि विधिकल्पनमूलकत्वात्, न ह्यविहितस्य कस्यचित् स्वातन्त्र्यं शक्यमुपगन्तुम् ।—अन्ये तु प्रज्ञान्तरशब्दमेवमाहुः, 'योऽश्वमेधेन यजते य उ चैनमेवं वेद ' इत्यश्वमेधाद्युपासनमश्वमेधादिभ्यः पृथगिति, ततोऽपि शाण्डिल्यविद्यादिपरत्वं युक्तम्, प्रतीतिशैघ्र्यात्, मानसग्रहस्तुत्यादिसामान्येन क्रियाशेषत्वम्—पुरुषार्थत्वोपलब्धेरित्येतदर्थपरं 'न सामान्या'दिति सूत्रं परे चापरे चाहुः । विद्यामयस्य क्रियानुप्रवेशसम्भवमात्रे दृष्टान्तत्वान्मानसग्रहस्य तत्र परिहरणीयाभावादतिदेशहेतोः परिहरणीयत्वाच्च तदयुक्तम्, 'न हि लोकापत्ति' रित्यस्यैवमर्थमाहुः, 'असौ वै लोकोऽग्नि'रित्यत्र न ह्यग्नेर्लोकस्वरूपतापत्तिरिति, ततोऽपि पूर्वदृष्टान्तस्योपपादकत्वं युक्तम् हिशब्दस्वारस्यात्, परेणेत्यत्र ताद्विध्यं विद्याविधित्वमिति व्याख्यातम्, तस्या- प्रकृतत्वेन तच्छब्दोपस्थाप्यत्वायोगात् तदयुक्तम् ॥ ४३ ॥

लिङ्गभूयस्त्वाधिकरणं समाप्तम् ॥

❀ भावप्रकाशिका ❀

विशेषभूता इति विधिः कल्प्यत इत्यर्थः ( विधिकल्पनामूलकत्वादिति ) ननु यथा पुरुषार्थत्वलक्षणं स्वातन्त्र्यं विधिकल्पनामूलकम्, एवं क्रत्वर्थत्वलक्षणं पारतन्त्र्यमपि, नचाविहितमङ्गमिति न्यायादिति कथं तस्य स्वातन्त्र्यासाधकत्वम्, किञ्च भाष्यरीत्या विद्यामयशेषी क्रतुविधिः कल्प्यत इत्यभ्युपगमः प्रत्युत स्वातन्त्र्यविरुद्ध एव विद्यामयशेषिपरतन्त्रत्वादिति, परमते मनश्चितादीनां विद्यारूपाणां विद्यामयक्रतुशेषत्वानभ्युपगमेन स्वातन्त्र्याभ्युपगमादिति चेन्न, फलसाधनत्वविधिकल्पनस्य फलसाधनत्वलक्षणस्वातन्त्र्योपजीव्यत्वमस्तीत्यत्र तात्पर्यात्, मानसग्रहसामान्येन न क्रियाशेषत्वमिति पाठः, ( तस्याप्रकृतत्वेनेति ) सूत्रे परस्य ब्राह्मणस्य प्रकृतत्वात् तच्छब्देन ब्राह्मणं परामृश्यते, तस्य विधेव विधा यस्य सः तद्विधः, तस्य भावस्ताद्विध्यमित्यर्थः उचितः, ननु तच्छब्देन विद्यां परामृश्य तस्या विधिस्तद्विधिः तस्य भावस्ताद्विध्यमित्यर्थ इति, अस्मिन्सूत्रे ब्राह्मणस्य प्रकृतत्वात् विद्याया अप्रकृतत्वादित्यर्थः, शेषमतिरोहितार्थम्, ' अवेष्टौ यज्ञसंयोगा ' दित्यधिकरणमि-

❀ भावप्रकाशिका ❀

त्थम्—अस्ति राजसूयः 'राजा राजसूयेन स्वाराज्यकामो यजेत' इति, तं प्रकृत्यामनन्ति अवेष्टिनामेष्टिम् 'आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा' इत्यादि, ताम्प्रकृत्याधीयते 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारयेत् यदि राजन्य ऐन्द्रम्, यदि वैश्यो वैश्वदेवम्' इति, तत्र संदिह्यते—किं ब्राह्मणादीनामवेष्टौ प्राप्तानां निमित्तार्थानि श्रवणानि, उत ब्राह्मणादीनामयं यागो विधीयत इति, यदि प्रजापरिपालनकण्टकोद्धरणादि कर्म रूढ्या राज्यम्, तस्य कर्ता राजेति राजशब्दस्यार्थः, ततो 'राजा राजसूयेन यजेते'ति राज्यस्य कर्तृ राजसूयाधिकारः, तस्मात् सम्भवन्त्यविशेषेण ब्राह्मणक्षत्रियवैश्या राज्यस्य कर्त्तार इति सिद्धं सर्व एवैते ब्राह्मणादयो राजसूये प्राप्ता इति निमित्तार्थानि श्रवणानीति; अथ—राज्ञः कर्म राज्यमिति योगाद्राज्यशब्दस्य प्रजापालने वृत्तिः, तदा को राजेत्यपेक्षायाम् आर्येषु तत्प्रसिद्धेरभावात् पिकनेमसततामरसादिशब्दार्थावधारणाय म्लेच्छप्रसिद्धिरिवान्ध्रादीनां म्लेच्छादीनां क्षत्रियजातौ तत्प्रसिद्धिरिति तद्बलात् क्षत्रिय एव राजेति न ब्राह्मणवैश्ययोः प्राप्तिरस्तीति राजसूयप्रकरणं भित्वा ब्राह्मणादिकर्तृकावेष्टिः प्राप्यते, न निमित्तार्थानि श्रवणानीति सिध्यति, किन्तावत्प्राप्तं नैमित्तिकानीति, राज्यस्य कर्ता राजेति आन्ध्राणाम् आर्याणाञ्चाविवादम्, तथाहि ब्राह्मणादिषु प्रजापरिपालनादिकर्तृषु कनकदण्डातपत्रश्वेतच्छत्रचामरादिलाञ्छनेषु राजपदमार्याश्चान्ध्राश्चाविवादं प्रयुञ्जाना दृश्यन्ते, ततो विप्रतिपत्तिः, विप्रतिपत्तावप्यार्यान्ध्रप्रयोगयोर्यववराहवदार्यप्रसिद्धेरान्ध्रप्रसिद्धितो बलवत्त्वात् बलवदार्यप्रसिद्धिविरोधे तन्मूलायाः पाणिनीयस्मृतिप्रसिद्धेः 'विरोधे त्वनपेक्षं स्या'दिति न्यायेन बाधात् तदनुगुणतया वा कथञ्चित् नखनकुलयेन्द्रियादिशब्दवदन्वाख्यानमात्रपरतया नेतव्यत्वात्, राज्यस्य कर्ता राजेति सिद्धेः निमित्तार्थानि श्रवणानीति, तथाच यदिशब्दोऽपि समञ्जस इति प्राप्ते उच्यते 'रूपतो न विशेषोऽस्ति ह्यार्यम्लेच्छप्रयोगयोः । वैदिकाद्वाक्यशेषात्तु विशेषस्तत्र दर्शितः' तदिह राजशब्दस्य प्रजापालनकर्मयोगाद्वा कर्तरि प्रयोगः, कर्तृयोगाद्वा कर्मणीतिविशये वैदिकवाक्यशेषतया अभियुक्ततरपाणिनिस्मृतेर्विशेषो निर्णीयते, प्रसिद्धिरान्ध्राणामनादिः, आदि-

❀ भावप्रकाशिका ❀

मती चार्याणां प्रसिद्धिः, गाव्यादिशब्दवत्, नच सम्भावितादिमद्भावा प्रसिद्धिः पाणिनिस्मृतिमपोद्य अनादिप्रसिद्धिमादिमतीं कर्तुमुत्सहते, गाव्यादि-शब्दप्रसिद्धेरादिमत्त्वेन गवादिपदप्रसिद्धेरप्यादिमत्त्वापातात्, तस्मात् पाणिनीय-स्मृत्यनुगतान्ध्रप्रसिद्धिबलीयस्त्वेन क्षत्रियत्वजातौ राजशब्दे मुख्ये तत्क-र्तर्यतज्जातौ राजशब्दो गौण इत्यवसीयते, ततश्च क्षत्रियस्यैव राजसूयेऽधि-कारात् तत्प्रकरणमपोद्य अवेष्टेरुत्कर्षः, यदिशब्दश्च प्राप्त्यनुरोधी, नत्वपूर्व-विधौ सति तमन्यथयितुमर्हति, अत एव आहुर्भट्टपादाः, 'यदिशब्दपरि-त्यागो रूढ्यर्थकल्पना । यदि रोचेत फलं मे स्यात्' इति, तर्हि ब्राह्मणो यजेतेति रूढ्यध्याहारकल्पनान्न विधित्वक्षतिरित्यर्थ इति ।

'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इत्यस्यायमर्थो मीमांसकैर्वर्णितः, 'श्रुतिशब्दोऽनपेक्षस्सा विध्युक्तविनियोग-कृत् । विनियोक्त्री त्रिधा भिन्ना तुल्यशब्दादिरूपतः । सर्वभावगता शक्ति-र्लिङ्गमित्यभिधीयते । वाक्यन्तु पदसङ्घातमात्रं विद्वद्भिरुच्यते । इतिकर्तव्यताकाङ्क्षा प्रक्रिया द्विविधा च सा । समाख्या यौगिकी संज्ञा लौकिकी वैदिकी च सा' तत्र लिङादिश्रुतिर्विधात्री, इन्द्रादिश्रुतिरभिधात्री, विनियोक्त्री तु एकप्रत्यय-रूपा एकपदरूपा विभक्तिरूपा चेति त्रिविधा । तत्राद्या 'पशुना यजेते'ति तृतीया, तया हि स्वोक्तकरणकारकं प्रति स्वोक्तैकत्वसङ्ख्यायाः शेषत्वं बोध्यते । द्वितीया तु 'यजेते' ति पदम् । तेन प्रत्ययोक्तभावनां प्रति प्रकृत्यु-पात्तयागस्य शेषता बोध्यते । तृतीया तु शेषित्वबोधिका शेषत्वबोधिका च; यथा 'व्रीहीन्प्रोक्षती'त्यत्र द्वितीयाश्रुतिः शेषित्वबोधिका, 'अरुणया क्रीणा-ति' इत्यादौ तृतीयाश्रुतिः शेषत्वबोधिका, 'बर्हिर्देव सदनं दामी'ति मन्त्रस्य लव-नशेषता लवनप्रकाशनसामर्थ्यरूपाल्लिङ्गात्, नह्यस्य विनियोजिका श्रुतिरस्ति 'यजेत स्वर्गकामः' इतिपदसमभिव्याहाररूपवाक्यात् यागस्य स्वर्गशेषता, न ह्यत्र यागेनेति तृतीया वा स्वर्गकाममिति द्वितीया वास्ति, किन्तु समभिव्याहा-रादेव साध्यसाधनताऽऽर्थी । महाप्रकरणावान्तरप्रकरणभेदेन प्रकरणं द्विविधम्, तत्र महाप्रकरणेन प्रयाजादीनां दर्शपूर्णमासादिशेषता, अवान्तरप्रकरणेन अभि-क्रमणादेः प्रयाजादिशेषत्वम् । स्थानं द्विविधम्, पाठसादेश्यम्, अनुष्ठा-

ॐ भावप्रकाशिका ॐ

नसादेश्यञ्चेति, पाठसादेश्यमपि यथासङ्ख्याम्नानं सन्निधिश्च, तत्र यथासङ्ख्याम्नानेन 'दब्धिरस्यदब्धो भूयासम्' इति मन्त्रस्य उपांशुयागशेषत्वम्, सन्निधिवशेन शुन्धध्वमिति मन्त्रस्य सान्नाय्यपात्रप्रोक्षणाङ्गत्वम्, अनुष्ठानसादेश्यात् पशुधर्माणामग्नीषोमीयार्थत्वम्, होतृचमसादिवैदिकसमाख्यया होतुश्चमसभक्षणशेषता—आध्वर्यवमिति लौकिकसमाख्यया अध्वर्योराध्वर्यवादिकं प्रति शेषता, इति स्थितिः। तत्र च श्रुतेरनपेक्षत्वात् साक्षादेव प्रामाण्यम्, लिङ्गस्य श्रुतिमात्रापेक्षत्वात् एकान्तरितं प्रामाण्यम्, वाक्यस्य तु लिङ्गश्रुतिकल्पनापेक्षत्वात् द्व्यन्तरितम्, प्रकरणस्य तु वाक्यलिङ्गश्रुतिकल्पनासापेक्षत्वात् त्र्यन्तरितम्, स्थानस्य तु प्रकरणवाक्यलिङ्गश्रुतिकल्पनापेक्षत्वात् चतुरन्तरितम्, समाख्यायास्तु स्थानप्रकरणवाक्यलिङ्गश्रुतिकल्पनापेक्षत्वात् पञ्चान्तरितमिति विप्रकर्षात् पारदौर्बल्यम्, तदुक्तम् 'एकद्वित्रिचतुःपञ्चश्रुत्यन्तरयकारितम्। श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनामपीष्यते' इति, एवञ्च 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्र गार्हपत्यमिति द्वितीयाश्रुत्या 'कदाचन स्तरीरसि नेन्द्रसश्चसि दाशुषे' इति मन्त्रस्य इन्द्रप्रकाशनसामर्थ्यरूपलिङ्गबाधेन गार्हपत्ये विनियोगः, तथा 'स्योनन्ते सदनङ्करोमि घृतस्य धारया सुशेवं कल्पयामि। तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इति स्योनन्त इति मन्त्रे पूर्वोत्तरभागयोः प्रत्येकमनुष्ठेयसदनकरणप्रतिष्ठापनप्रकाशनसामर्थ्यरूपाल्लिङ्गात् समभिव्याहाररूपवाक्यबाधात् विभज्य विनियोगः, तथा 'इन्द्राग्नी इदं हविरजुषेताम्' इत्यत्र इदं हविरित्यादेः इन्द्राग्निपदसमभिव्याहाररूपवाक्येन पौर्णमासप्रकरणबाधात् 'अग्नीषोमाविदं हविरजुषेताम्' इति श्रुतपौर्णमासीयपदान्वयः, तथा राजसूयप्रकरणस्थस्य विदेवनादेरभिषेचनीयसन्निहितस्य प्रकरणेन सन्निधिरूपस्थानबाधेन राजसूयाङ्गत्वम्, तथा शोधनमन्त्रस्य सान्नाय्यपात्रसन्निधिरूपस्थानेन पौरोडाशिकमिति समाख्याप्राप्तपुरोडाशपात्रान्वयबाधात् सान्नाय्यपात्रान्वय इत्येवं पारदौर्बल्यं द्रष्टव्यम्, ननु लिङ्गस्य श्रुतिव्याप्तत्ववत् श्रुत्यर्थीभूतविनियोगव्याप्तत्वस्यापि सत्त्वेन विनियोगापेक्षात्वमेवास्तु, किं मध्ये श्रुतिकल्पनेन, नहि स्मृतेरिव लिङ्गस्य प्रामाण्याय मूलत्वेन श्रुतिकल्पनम्, स्मरणस्य पौरुषेयतया मूल-

छ भावप्रकाशिका छ

प्रमाणसापेक्षत्वेपि वैदिकलिङ्गस्य विनियोजकश्रुताविव विनियोगेप्यन्यानपेक्षस्य प्रमापकत्वादिति चेत् , अत्राहुः– सत्यं लिङ्गादिगम्यत्वम्, अथापि विध्यन्वयाय श्रुत्यपेक्षा अस्त्येव, उक्तं हि राणके 'शेषो लिङ्गादिगम्योपि न विधिग्रहणादृते । अनुष्ठेयो नचाशब्दो विधिनान्वयमर्हति । विध्यन्वयाय तेनास्य कल्प्या लिङ्गादिभिश्श्रुतिः । प्रयोगवचनस्यैकदेशस्सोपि भविष्यति । अतः प्रयोगवाक्यस्य पूरणायेह कल्प्यते । लिङ्गादिभिः श्रुतिस्सा च विरोधे नावकल्पते' इति, ततश्च श्रुत्यादीनां लिङ्गाद्यपेक्षया बलवत्त्वमिति । गुरुमतानुसारिणस्तु बलाबलमेवं वर्णयन्ति, व्रीहीनित्यादौ द्वितीयाश्रुतिः शब्दरूपतया अन्यानपेक्षैव व्रीहीणां शेषित्वं बोधयितुं प्रवृत्ता शेषिणः कार्यार्थतां लक्षणामन्तरेण बोधयितुमशक्ता लक्षणार्थं ग्राहकान्वयमात्रमपेक्षत इति ग्राहकान्वयमात्रपूर्विका द्वारैदमर्थ्ये प्रमाणम् । लिङ्गन्तु अशब्दात्मकत्वात् न स्वयमेवाह शेषत्वम् , किन्तु ग्राहकगृहीतमन्त्रस्य ग्राहकैदमर्थ्यनिर्वाहाय करणैदमर्थ्ये कल्पिते तत्रापि देवतोद्देशेन द्रव्यत्यागात्मकयागरूपं करणं प्रति मन्त्रस्य साक्षादनिर्वर्तकतया करणीयं द्रव्यमनेनोपकर्तव्यमिति निश्चिते सति किन्तदिति विशेषाकाङ्क्षायाम् यच्छक्यं तदित्येव द्वारशेषता मन्त्रस्य लिङ्गेन कल्प्या , तस्मात् द्वारैदमर्थ्यश्रुतितो विलम्बितत्वात् लिङ्गं दुर्बलम् , तथा मन्त्राणां न पाठमात्रात् सम्भूय बोधकतया एकवाक्यता, विनियोगाधीनत्वात् मन्त्रभेदाभेदयोः, 'स्योनन्ते ' इति मन्त्रस्य विनियोगश्च लैङ्गिक इति लिङ्गपूर्वकं वाक्यं स्वापेक्षणीयाल्लिङ्गात् विलम्बितमिति दुर्बलम् । अयमेव वाक्यस्य लिङ्गेन बाधो नाम– यल्लिङ्गानुसारेण भेदकल्पनम् , तथा इतिकर्तव्यताकाङ्क्षालक्षणप्रकरणस्य सर्वापेक्षणीयत्वेन प्राधान्येपि तेन करणान्वयस्यैव सिद्धेः, करणीयद्वारान्वयस्य कल्पनीयत्वात्, क्लृप्ते च वाक्यादाभिधानिके द्वारशेषान्वये सति द्वारान्तरकल्पनाऽयोगे क्लृप्तद्वारान्वयाद्वाक्यात् कल्प्यद्वारान्वयं प्रकरणं दुर्बलमिति, 'इन्द्राग्नी इद'मित्यादिकं समभिव्याहृतेन्द्राग्न्यादिपदेनैवान्वेति, नान्येन, तथा राजसूयप्रकरणे अभिषेचनीयसन्निहितानां विदेवनादीनां वाक्यार्थत्वात् 'अरुणया क्रीणाती'त्यादौ पदार्थानां क्रियाकारकान्वये आम्नायसन्निधेः तन्त्रत्वेपि वाक्यार्थान्वयेपि तस्याऽतन्त्रत्वात् नियोगाकाङ्क्षामुखसन्निधानस्यैव तन्त्रत्वात्, तस्य च नियोगीयसर्वकारणसा-

## पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ॥ ४४ ॥

२० अधिकरणम्

वाजसनेयकेऽग्निरहस्ये मनश्चिदादयोऽग्नयः श्रूयन्ते "मनश्चितो वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचितः" इति। तत्र संशयः—किमेते मनश्चिदादयः साम्पादिक-

---

* श्रुतप्रकाशिका *

पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ॥ ४४ ॥ प्रकरणात् बलीयसा वाक्येन नारायणानुवाकस्य सर्वविद्यासाधारण्यमुक्तम्, इह तु प्रकरणस्य बाधकाभावान्मनश्चिदादयः क्रियामयक्रत्वनुप्रवेशिन इति शङ्कया सङ्गतिः। सौत्रनिर्देशानुरोधेन क्रियारूपा विद्यारूपा इति निर्दिष्टम्, तद्विवरणं क्रियामयक्रत्वनुप्रवेशेन विद्यामयक्रत्वनुप्रवेशेनेति च, मनश्चिदादीनां स्वरूपस्य विद्यारूपत्वे हि न विप्रतिपत्तिः, अङ्गद्वारा विद्यारूपत्वे तु विप्रति-

* भावप्रकाशिका *

धारण्यात्तदीयसर्वकरणान्वयः, नतु सन्निधानादभिषेचनीयमात्रान्वयः, तत्सन्निधानन्तु आम्नानार्थम्, तथा पौरुषेययौगिकसंज्ञारूपसमाख्या न वैदिकीति, अन्वयहेतुः वैदिकसन्निधानकल्पनयैवान्वयहेतुर्न साक्षादिति शुन्धनमन्त्रस्य पुरोडाशपात्रान्वयबाधेन सान्नाय्यपात्रशुन्धनाङ्गत्वमिति ॥ * ॥

इति लिङ्गभूयस्त्वाधिकरणम्।

अग्निरहस्ये 'नैव वा इदमग्र आसीत्' इत्यस्मिन्ब्राह्मणे 'तद्धेदं मन एवासीत्' इति प्रथमोत्पन्नं मनः प्रकृत्य 'षट्त्रिंशतं सहस्राण्यपश्यत् आत्मनोऽग्नीनर्कान् मनोमयान् मनश्चितः' इति, तथा 'वाक्चितः प्राणचितः चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचितः' इत्यादिना मनश्चिदादयोऽग्नयस्समाम्नाताः, षट्त्रिंशत्सहस्रदिनात्मकपुरुषायुषान्तर्गतैकैकदिनप्रभवमानसवृत्तिसङ्घाता अग्नित्वदृष्ट्या उपास्यमाना मनश्चितः, एवमेव वाक्चिदादयोपि प्रत्येकं षट्त्रिंशत्-

त्वेन विद्यारूपा अग्नयः क्रियामयक्रत्वनुप्रवेशेन क्रियारूपाः? आहोस्विद्विद्यामयक्रत्वनुप्रवेशेन विद्यारूपा एवेति विशये क्रियारूपत्वं तावदाह—पूर्वविकल्पः— इत्यादिना । चित्याग्नित्वेन सम्पादिताना-

---

* श्रुतप्रकाशिका *

पत्तिः, अतः सूत्रे क्रियाशब्दो लाक्षणिकः, क्रियामयक्रत्वङ्गतया क्रियास्तत्सम्बन्धिन्य इत्यर्थः । किं मनश्चिदादयः क्रियामयक्रत्वन्वयिनः? उत विद्यामयक्रत्वन्वयिनः, किमिष्टकचिताग्निद्वारा सन्निहितक्रियामयक्रतावेषां विनियोगोऽस्ति नेति, किं श्रुतिलिङ्गवाक्यैर्विद्यामयक्रतौ विनियोगोऽवगम्यते? उत नेति, किमनुबन्धादिभिरतिदिष्टफलान्वयाच्च विद्याविधिः कल्प्यः? उत नेति, अकल्प्यत्वे तत्र श्रुत्यादिभिर्विनियोगायोगात् प्रकरणविनियोगेन क्रियामयक्रत्वन्वयिनः स्युः, विधेः कल्प्यत्वे तत्र श्रुत्यादिभिर्विनियोगात् प्रकरणस्य दुर्बलत्वाच्च विद्यामयक्रत्वन्वयिनः स्युः, होमस्थानत्वादग्निशब्देन निर्देशः,

* भावप्रकाशिका *

सङ्कल्पाकाः कर्मचितः वागिन्द्रियातिरिक्तकर्मेन्द्रियव्यापाराः देहव्यापारा वा, अग्निचितो जाठराग्निव्यापारास्तन्मन एवात्मनस्सम्बन्धिनः, अर्कानर्चनीयान् अपश्यदित्यर्थः, भाष्ये— किमेते मनश्चिदादयस्साम्पादिकत्वेनेति, 'कर्मण्यग्न्याख्यायां'मिति मनश्चीयत इत्यर्थे क्विप्, श्येनचिदादिशब्दवदसौ क्विबन्तो निष्पन्नः, तेन तदनभिज्ञैः कैश्चित् केषुचित्कोशेषु मनश्चितादय इति इष्टकचितादिशब्दवत् अकारान्तत्वभ्रमात् लिखितं तदनादरणीयम्, ततश्च मनश्चिदादय इत्येव पाठः, साम्पादिकम्— सम्पादितमित्यर्थः, तदर्हतीति ठक्, सम्पादमर्हतीति साम्पादिकमिति, ज्वलनवाचिनोऽग्निशब्दस्य कथं स्थण्डिलाग्निवाचित्वमित्याशङ्क्याग्न्याधारतया अग्निशब्देन निर्देश इत्याह ( होमस्थानत्वादिति ) होमशब्दो लक्षणया अर्शआद्यजन्ततया हूयते अस्मिन्निति व्युत्पत्त्या वाऽग्निपरः, तस्य स्थानत्वादग्निरित्युच्यत इत्यर्थः, अथवा अग्निशब्देन गौण्या स्थण्डिलाग्निरुच्यत इत्यर्थः, सादृश्यञ्च होमस्थानत्वम्, अस्ति च स्थण्डिलस्यापि परम्परया होमस्थानत्वम्, तत्र स्थापितस्याग्नेः होमाधारत्वादिति द्रष्टव्यम्,

## पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ॥ ४४ ॥

२० अधिकरणम्

वाजसनेयकेऽग्निरहस्ये मनश्चिदादयोऽग्नयः श्रूयन्ते "मनश्चितो वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचितः" इति। तत्र संशयः—किमेते मनश्चिदादयः साम्पादिक-

* श्रुतप्रकाशिका *

पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ॥ ४४ ॥ प्रकरणात् बलीयसा वाक्येन नारायणानुवाकस्य सर्वविद्यासाधारण्यमुक्तम्, इह तु प्रकरणस्य बाधकाभावान्मनश्चिदादयः क्रियामयक्रत्वनुप्रवेशिन इति शङ्कया सङ्गतिः। सौत्रनिर्देशानुरोधेन क्रियारूपा विद्यारूपा इति निर्दिष्टम्, तद्विवरणं क्रियामयक्रत्वनुप्रवेशेन विद्यामयक्रत्वनुप्रवेशेनेति च, मनश्चिदादीनां स्वरूपस्य विद्यारूपत्वे हि न विप्रतिपत्तिः, अङ्गिद्वारा विद्यारूपत्वे तु विप्रति-

* भावप्रकाशिका *

धारणयात्तदीयसर्वकरणान्वयः, नतु सन्निधानादभिषेचनीयमात्रान्वयः, तत्सन्निधानन्तु आम्नानार्थम्, तथा पौरुषेययौगिकसंज्ञारूपसमाख्या न वैदिकीति, अन्वयहेतुः वैदिकसन्निधानकल्पनयैवान्वयहेतुर्न साक्षादिति शुन्धनमन्त्रस्य पुरोडाशपात्रान्वयबाधेन सान्नाय्यपात्रशुन्धनाङ्गत्वमिति ॥ ७ ॥

इति लिङ्गभूयस्त्वाधिकरणम्।

अग्निरहस्ये 'नैव वा इदमग्र आसीत्' इत्यस्मिन्ब्राह्मणे 'तद्धेदं मन एवासीत्' इति प्रथमोत्पन्नं मनः प्रकृत्य 'षट्त्रिंशतं सहस्राण्यपश्यत् आत्मनोऽग्नीनर्कान् मनोमयान् मनश्चितः' इति, तथा 'वाक्चितः प्राणचितः चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचितः' इत्यादिना मनश्चिदादयोऽग्नयस्समाम्नाताः, षट्त्रिंशत्सहस्रदिनात्मकपुरुषायुषान्तर्गतैकैकदिनप्रभवमानसवृत्तिसङ्घाता अग्नित्वदृष्ट्या उपास्यमाना मनश्चितः, एवमेव वाक्चिदादयोपि प्रत्येकं षट्त्रिंशत्-

त्वेन विद्यारूपा अग्नयः क्रियामयक्रत्वनुप्रवेशेन क्रियारूपाः? आहोस्विद्विद्यामयक्रत्वनुप्रवेशेन विद्या· रूपा एवेति विशये क्रियारूपत्वं तावदाह—पूर्व· विकल्पः— इत्यादिना । चित्याग्नित्वेन सम्पादिताना·

* श्रुतप्रकाशिका *

पत्तिः, अतः सूत्रे क्रियाशब्दो लाक्षणिकः, क्रियामयक्रत्वङ्गतया क्रियास्त- त्सम्बन्धिन्य इत्यर्थः । किं मनश्चिदादयः क्रियामयक्रत्वन्वयिनः? उत विद्या- मयक्रत्वन्वयिनः, किंमिष्टकचिताग्निद्वारा सन्निहितक्रियामयक्रतावेषां विनि- योगोऽस्ति नेति, किं श्रुतिलिङ्गवाक्यैर्विद्यामयक्रतौ विनियोगोऽवगम्यते? उत नेति, किमनुबन्धादिभिरतिदिष्टफलान्वयाच्च विद्याविधिः कल्प्यः? उत नेति, अकल्प्यत्वे तत्र श्रुत्यादिभिर्विनियोगायोगात् प्रकरणविनियोगेन क्रियामय- क्रत्वन्वयिनः स्युः, विधेः कल्प्यत्वे तत्र श्रुत्यादिभिर्विनियोगात् प्रकरणस्य दुर्बलत्वाच्च विद्यामयक्रत्वन्वयिनः स्युः, होमस्थानत्वादग्निशब्देन निर्देशः,

* भावप्रकाशिका *

सङ्ख्याकाः कर्मचितः वागिन्द्रियातिरिक्तकर्मेन्द्रियव्यापाराः देहव्यापारा वा, अग्निचितो जाठराग्निव्यापारास्तन्मन एवात्मनस्सम्बन्धिनः, अर्कानर्चनीयान् अ- पश्यदित्यर्थः, भाष्ये— किमेते मनश्चिदादयस्साम्पादिकत्वेनेति, 'कर्मण्यग्न्य- ख्यायां'मिति मनश्चीयत इत्यर्थे क्विप्, श्येनचिदादिशब्दवदसौ क्विन्तो निष्पन्नः, तेन तदनभिज्ञैः कैश्चित् केषुचित्कोशेषु मनश्चितादय इति इष्टकचितादिशब्द- वत् अकारान्तत्वभ्रमात् लिखितं तदनादरणीयम्, ततश्च मनश्चिदादय इत्येव पाठः, साम्पादिकम्— सम्पादितमित्यर्थः, तदर्हतीति ठक्, सम्पादमर्हतीति साम्पादिकमिति, ज्वलनवाचिनोऽग्निशब्दस्य कथं स्थण्डिलाग्निवाचित्वमित्याश- ङ्कयाग्न्याधारतया अग्निशब्देन निर्देश इत्याह (होमस्थानत्वादिति) होमशब्दो लक्षणया अर्शआद्यजन्ततया हूयते अस्मिन्निति व्युत्पत्त्या वाऽग्निपरः, तस्य स्थानत्वादग्निरित्युच्यत इत्यर्थः, अथवा अग्निशब्देन गौण्या स्थण्डिलाग्निरु- च्यत इत्यर्थः, सादृश्यञ्च होमस्थानत्वम्, अस्ति च स्थण्डिलस्यापि पर- म्परया होमस्थानत्वम्, तत्र स्थापितस्याग्नेः होमाधारत्वादिति द्रष्टव्यम्,

मेषां मनश्चिदादीनां क्रत्वनुप्रवेशसाकाङ्क्षाणां स्वदेशे क्रतुविध्यभावात् पूर्वत्र "असद्वा इदमग्र आसीत्" इत्यादिनेष्टकचितस्याग्नेः प्रकृतत्वात् तस्य च क्रियामयक्रत्वव्यभिचारित्वेन तत्र क्रतुसन्निधानात् तत्प्रकरणगृहीता मनश्चिदादयः तेनेष्टकचितेनाग्निना विकल्प्यमानाः क्रियारूपा एव स्युः।

---

* श्रुतप्रकाशिका *

न हि होमस्थानमात्रस्य क्रत्वनुप्रवेश इति तद्व्यावृत्त्यर्थं चित्याग्नित्वेनेत्युक्तम्, इष्टकचिताग्निः प्रकृतः स्यात्ततः किं क्रियामयक्रत्वनुप्रवेशस्येत्यत्राह (तस्य चेति) क्रतुसन्निधानं बुद्धिस्थत्वम्, (सम्पादितानाम्) तथात्वेनानुसंहितानामित्यर्थः, इष्टकचिताग्न्यङ्गकत्वेन मनश्चिदादिनिरपेक्षत्वात् नैषां क्रियामयक्रत्वनुप्रवेश इत्यत्राह (विकल्प्यमाना इति) विद्यारूपाणां क्रियामयक्रत्वनुप्रवेशः कथ-

* भावप्रकाशिका *

चित्यपदप्रयोजनमाह (नहि होमस्थानमात्रस्येति) ज्वलनमात्रस्येत्यर्थः। भाष्ये–क्रत्वनुप्रवेशसांकाङ्क्षाणामिति, फलवत्त्वसिध्यर्थमिति शेषः, भाष्ये– इष्टकचितेनाग्निना विकल्प्यमाना इति, 'इष्टकेषीकामालानां चितत्तूलभारिषु' इति इष्टकाशब्दस्य ह्रस्वः, ननु तुल्यार्थयोरेव विकल्पः, यथा व्रीहियवयोः, नच साम्पादिकस्य मनश्चिदाद्यग्नेरिष्टकचिताग्नितुल्यकार्यतास्ति, अग्निधारणासमर्थत्वात् साम्पादिकाग्नेः, अत एव 'तेषामेकैक एव तावान् यावानसौ पूर्वः' इत्यतिदेशोपि न सम्भवति, नह्यशकनीयमर्थं शास्त्रसहस्रमपि सम्भूय विधातुं शक्नोति, नच 'हिरण्यगर्भस्समवर्तताग्रे' इति मन्त्रस्य वृत्त्यन्तराश्रयणेनैन्द्राघारप्रकाशन इव, 'उत्करे वाजिनमासादयति' इति वचनबलेन उत्करस्य पृथ्वग्रताश्रयणेन वाजिनपात्रधारण इव, 'परिधौ पशुं नियुञ्जीत' इति वचनबलात् परिधेः पृथुत्वाश्रयणेन पशुनियोजन इव, 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति' इति वचनबलेन रथघोषस्य सूचकत्वकल्पनेन उद्गातृप्रेरण इव च साम्पादिकानां केनाप्युपायेनाग्निधारणसामर्थ्यं

विद्यारूपाणामपि क्रियामयक्रत्वनुप्रवेशेन क्रियारूपत्वं मानसग्रहवदुपपद्यते; यथा द्वादशाहे अवि- ? वाक्ये दशमेऽहनि मानसग्रहस्य मनोनिष्पाद्यग्रहणासादनस्तोत्रशस्त्रप्रत्याहरणभक्षणत्वेन विद्यारूपस्यापि

* श्रुतप्रकाशिका *

मित्यत्राह ( विद्यारूपाणामपीति ) ग्रहः—पात्रविशेषः , तस्य विद्यारूपत्वमुपपादयति ( यथेति ) विवाक्ये—विगतवाक्ये , यद्वा अविवाक्ये—विवि-

❀ भावप्रकाशिका ❀

सम्पादयितुं शक्यम् , येनायमतिदेशो विकल्पो वा स्यादिति चेत्—उच्यते, इष्टकचितोऽग्निरुत्तरवेदिवदाहवनीयधारणार्थतया न क्रत्वङ्गम्, अपि तु गोदोहनादिवत् क्रत्वङ्गाश्रितः पुरुषार्थः, 'पशुकामश्चिन्वीते'ति श्रवणात् 'अभागिप्रतिषेधा'दिति सूत्रे वार्तिके तथोक्तत्वात्, ततश्च पूर्वाग्निकार्यस्य पशुफलस्यातिदेशसम्भवान्न कश्चिद्विरोधः , एवञ्च विद्यामयाग्निभिः सिद्धस्वफलस्य इष्टकचिताग्नेर्निवृत्तौ अन्यतमस्यकर्तव्योपकारलाभमपश्यन्ती उत्तरवेदिः प्राप्नोतीति तयाग्निधारणसिद्धिः, ( ग्रहः पात्रविशेष इति ) 'अनया त्वा पृथिव्या पात्रेण समुद्रं रसया प्राजापत्यं मनोग्रहं गृह्णामि' इति मन्त्रवशात् पृथिव्यादिकं पात्रादित्वेन ध्यातव्यम् , ततश्च तादृशपात्रविशेषयुक्तग्रहणरूपसंस्कार इत्यर्थः, अर्शआद्यजन्तो विशेषशब्दः, अथवा पात्रशब्दः साम्पादिकपात्रपरः, तेन विशिष्यत इति विशेषः, तद्विशिष्ट इत्यर्थः, ( विवाक्ये विगतवाक्य इति ) यद्यपि दशमस्याह्न अविवाक्यमित्येव नाम, अथापि विविधवाक्यरहिततया अविवाक्यमिति संज्ञितस्यैव विगतवाक्यत्वमादाय विवाक्यमित्यपि वक्तुं सुशकत्वमभिप्रेत्य विवाक्य इति छेदो दर्शितः, ननु विवाक्य इति संज्ञाप्यास्तीत्यभिप्रेत्येति द्रष्टव्यम्, मनोनिष्पाद्येत्यत्र बहुव्रीहिः, मानसैः ग्रहस्तोत्राद्यङ्गैर्युक्तस्य मानसग्रहयागस्येत्यर्थः, ग्रहणं— सोमरसस्य पात्रे ग्रहणम्, आसादनं— स्थापनम्, प्रत्याहरणं—होमानन्तरं हुतशेषस्याहरणम् । ननु सर्वत्र द्रव्यत्यागात्मकयागस्य मानसत्वात् कथमस्य विशिष्य मानसत्वमित्याशङ्क्य यज्ञान्तरे ग्रहणादीना स्वरूपेण सत्त्वेपि मानसयागाभ्यासाङ्गभूतग्रहणा-

क्रियामयक्रत्वङ्गतया क्रियारूपत्वम्, तथेहापि ॥ ४४ ॥

अतिदेशाच्च ॥ ४५ ॥

इतश्चेष्टकचितेनाग्निना मनश्चिदादीनां विकल्पः क्रियारूपत्वं चावगम्यते, "तेषामेकैक एव तावान् यावानसौ पूर्वः" इति पूर्वस्येष्टकचितस्याग्नेर्वीर्यं मनश्चिदादिष्वतिदिश्यते; तेन तुल्यकार्यत्वाद्विकल्पः, ततश्चेष्टकचितवत्तत्क्रतुनिर्वर्तनेन तदङ्गभूता मनश्चिदादयः क्रियामयक्रत्वनुप्रवेशेन क्रियारूपा एवेति ॥ ४५ ॥

एवं प्राप्ते प्रचक्ष्महे—

विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ ४६ ॥

---

* श्रुतप्रकाशिका *

धवाक्यरहिते, मनोनिष्पाद्योपयोगित्वेन ग्रहस्य मानसत्वं न हि स्वरूपेण विद्यते ॥ ४४ ॥

अतिदेशाच्च ॥ ४५ ॥ वीर्यं कार्यकरत्वसामर्थ्यम्, कमुपकारं कुर्वन्तो मनश्चिदादयोऽङ्गानीत्यत्राह ( ततश्चेति ) । ( एवं प्राप्त इति )

विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ ४६ ॥ ( विद्यारूपक्रत्वन्वयिन इति )

७ भावप्रकाशिका ७

सादनतद्द्रव्यादीनां मनोनिष्पाद्यतया उपयोगित्वेन मानसत्वम्, तद्योगाच्च मानसग्रहयागस्य विशिष्य मानसत्वं सिध्यतीत्याह ( मनोनिष्पाद्योपयोगित्वेनेति ) मनोनिष्पाद्यैस्सोमरसतद्ग्रहणासादनादिभिरुपयोगो मनोनिष्पाद्योपयोगः सोऽस्यास्तीति मनोनिष्पाद्योपयोगी तत्त्वेनेत्यर्थः, केचित्तु 'उपांशुपात्रे मानसं गृह्णाति' इति मानसग्रहणस्याधारतया उपांशुपात्रस्य विहितत्वात् स हि स्वरूपेण विद्यते इति अत्र स इत्युपांशुपात्रात्मकग्रहविशेषः परामृश्यते, सहि स्वरूपेणाऽस्तीति वदन्ति ॥ ७ ॥

तुशब्दः पक्षं व्यावर्त्तयति; यदुक्तं मनश्चिदादयः क्रियामयक्रत्वनुप्रवेशेन क्रियामया एवेति; नैतदस्ति, विद्यारूपा एवैते विद्यारूपक्रत्वन्वयिन इत्यर्थः। कुतः निर्धारणाद्दर्शनाच्च, निर्धारणं तावत् "ते हैते विद्याचित एव विद्यया हैवैत एवंविदश्चिता भवन्ति" इति वाङ्मनश्चक्षुरादिव्यापाराणाम् इष्टकादिवच्चयनानुपपत्तेर्मनसा सम्पादिताग्नित्वेन विद्यारूपत्वे सिद्धेऽपि "विद्याचित एव" "विद्यया हैवैते" इति चावधारणं विद्यामयक्रत्वन्वयेन विद्यारूपत्वज्ञापनार्थमिति निश्चीयते। दृश्यते चात्रैवैषां शेषी विद्यारूपः क्रतुः "ते मनसैवाधीयन्त मनसैवाचीयन्त मनसैषु ग्रहा अगृह्यन्त मनसाऽस्तुवन्त मनसाऽशंसन् यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञीयं कर्म मनसैव तेषु मनोमयेषु मनश्चित्सु मनोमयमक्रियत" इति। इष्टकचितेष्वग्निषु यत्क्रियामयं यज्ञीयं कर्म क्रियते, तन्मनोनिर्वर्त्त्येषु मनश्चिदाद्यग्निषु मनोमयमेवाक्रियतेति वचनात् क्रतुरपि विद्यामयोऽत्र प्रतीयते ॥ ४६ ॥

---

* श्रुतप्रकाशिका *

सूत्रे विद्याशब्दो लाक्षणिक इत्यर्थः । विद्याचित एवेत्येतच्छ्रुतिरेवोपपादयति ( विद्यया हैवैत इति ) दर्शनाच्चेति सूत्रखण्डं व्याचष्टे ( दृश्यते चेत्यादिना ) ( मनसैष्विति ) एषु–मनश्चिदादिषु, यत् किञ्च यज्ञे कर्म क्रियते– प्रधानभूतं कर्म क्रियते, यत् किञ्च यज्ञीयं कर्म– अङ्गभूतं कर्मेत्यर्थः ।

❀ भावप्रकाशिका ❀

( प्रधानभूतं कर्म क्रियत इति ) 'यत्किञ्च यज्ञे' इत्यत्र यज्ञशब्दः

नन्वत्र विधिपदाश्रवणात् फलसम्बन्धाप्रतीतेश्चेष्टकचितारग्न्युपस्थापितक्रियामयक्रतुप्रकरणाद्विद्यामयक्रत्वन्वयेन विद्यारूपतैषां बाध्येत, नेत्याह—

श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४७ ॥

श्रुतिलिङ्गवाक्यानां प्रकरणाद्बलीयस्त्वेन श्रुत्याद्यवगतः क्रतुरेषां तदन्वयश्च दुर्बलेन प्रकरणेन बाधितुं न शक्यते, श्रुतिस्तावत् "ते हैते विद्याचित एव" इति, तां विवृणोति "विद्यया हैवैत एवंविदश्चिता भवन्ति" इति। विद्यया—विद्यामयेन क्रतुना सम्बद्धा मनश्चिदादयश्चिता भवन्ती

* श्रुतप्रकाशिका *

अनन्तरसूत्रशङ्कामाह ( नन्विति ) विधिपदाश्रवणेऽपि फलसम्बन्धे सति विधिः कल्प्यते, सोऽपि नास्तीत्याह ( फलसम्बन्धाप्रतीतेश्चेति )

श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४७ ॥ ( विद्ययेति ) प्रयोजनतया हेतुः,

छ भावप्रकाशिका छ

प्रयोगवचनः 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इतिवत्, ततश्च यज्ञकर्मेत्यनेन प्रधानस्य परामर्शो भविष्यति, अतो यज्ञकर्मेति भेदनिर्देशे नानुपपत्तिरिति द्रष्टव्यम् ॥ छ ॥

भाष्ये— श्रुतिस्तावदिति, विद्याशब्दश्रुतिरेवेत्यर्थः, यद्यपीयमभिधात्री श्रुतिर्न विनियोजिका, एकपत्यैयकविभक्तिश्रुतीनामन्यतमत्वाभावात्, [1]तदुपपादकं वाक्यमिदम्, 'विद्यया हैवैत एवंविद' इति, विद्यामात्रसम्पादितत्वात् विद्यारूपा एव मनश्चिदादय इत्युपपत्तौ किमिति साधनत्ववाचिन्यास्तृतीयायाः प्रयोजनत्वेन हेतुत्वरूपक्लिष्टार्थाश्रयणम्, अत एव तस्याः श्रुतेर्विद्यारूपक्रत्वन्वये प्रमाणीकरणमप्यसङ्गतम्, किञ्च, 'षड्विंशतिरित्येव ब्रूयात्' इत्यत्रैवैवकारोपहतविधिशक्तिकस्य विद्यारूपशेषिसम्बन्धविधायकत्वमप्ययुक्तम्, तथा 'एवंविदे चिन्वन्ती'ति वाक्यवशेन न विद्यामयक्रत्वन्वयो बोध्यते, एवंविच्छब्द[2]स्य विद्यारूप-

१. अत्र कियानपि ग्रन्थो गलित इति प्रति भाति. | २. तृतीयान्तत्वं स्य.

त्यर्थः । "तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि (वि)चिन्वन्त्यपि स्वपते" इति लिङ्गम् । वाक्यं च "एवंविदे चिन्वन्ति" इति । समभिव्याहारो वाक्यम् । एवंविदे—विद्यामयक्रतुमते सर्वदा सर्वाणि भूतानि (वि)चिन्वन्तीत्यर्थः । सर्वभूतकर्तृकं सर्वकालव्यापि चयनं मनसा सम्पादितं परिमितकर्तृकालक्रियामयेष्टकचितकार्यद्वारेण क्रत्वनुप्रवेशसम्भवमलभमानं विद्यामयक्रत्वनुप्रवेशे लिङ्गं भवति ॥ ४७ ॥

* श्रुतप्रकाशिका *

विद्यामयक्रतुसम्बन्धेन तन्निर्वर्तनार्थमित्यर्थः । वाक्यत्वमुपपादयति ( समभिव्याहार इति ) यथोक्तविद्यामयक्रतुमत्पुरुषस्य कृते हि एतानग्नीन् सर्वभूतानि चिन्वन्ति इत्यर्थः । लिङ्गत्वमुपपादयति । ( सर्वभूतेति ) सर्वभूतकर्तृकत्वेन सर्वकालव्यापित्वेन च मनसाऽनुसंहितस्य चयनस्य परिमितकालकर्तृक्रियामयेष्टकचिततुल्यकार्यतया क्रत्वनुप्रवेशासम्भवो विद्यामयक्रत्वनुप्रवेशे

॥ भावप्रकाशिका ॥

क्रतुविशिष्टस्य परामर्शादित्यप्ययुक्तम् , तस्यैवासिद्धेः, विद्याविशिष्टपरामर्शित्वसम्भवे च चतुर्थीश्रुत्यैव शेषित्वप्रतीतेः वाक्यगम्यविनियोग इत्ययुक्तेरिति चेन्न, स्वत एव विद्यारूपाणामेषां विद्याचित एवेत्यवधारणस्य मानसग्रहादिवत् क्रियान्वयव्यावर्तकत्वेन क्रियान्वये व्यावृत्ते 'अनुबन्धादिभ्य' इति सूत्रोक्तन्यायेन ग्रहणादिभिश्च 'सोमाभावे पूतीकानभिषुणुयात् स यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिषेत् न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्' इत्यादौ यागार्थद्रव्यसंस्कारात्मकाभिषवभक्षादिवशेन यागकल्पनवत् विद्यारूपक्रतुकल्पनाया आवश्यकत्वे सिद्धे विद्याचित एवेत्यादिवाक्यमपि तत्परं भविष्यतीत्यभिप्रायात् , 'एवंविद' इत्यत्र चतुर्थ्या विद्याविशिष्टपुरुषस्य शेषित्वप्रतीत्या विद्यायाः शेषित्वाप्रतीत्या विद्याशेषित्वस्य वाक्यगम्यत्वोक्तिरप्युपपद्यते, ( सर्वभूतकर्तृकत्वेनेति ) ननु विद्यारूपस्य इष्टक-

यच्चेदमुक्तं- विधिप्रत्ययाश्रवणात् फलसम्बन्धाप्रतीतेश्च क्रियामयात्क्रतोरन्योऽत्र विद्यामयः क्रतुर्न सम्भवति-इति, तत्राह—

**अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम्।४८।**

---

* श्रुतप्रकाशिका *

लिङ्गमित्यर्थः । विद्यामयः क्रतुः सर्वकालवर्तित्वेन सर्वभूतकर्तृकत्वेन चानुसन्धीयते, अतस्तादृशं चयनं तादृशक्रत्वन्वयीति भावः ॥ ४७ ॥

अनन्तरसूत्रमवतारयितुं पूर्वमुक्तं पूर्वपक्षहेतुमनुवदति ( यच्चेदमिति ) । अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ४८ ॥ ( दृष्टश्चानु-

❀ भावप्रकाशिका ❀

चितकार्याहवनीयधारणासमर्थत्वादित्येव वक्तुं शक्यम्, सर्वभूतकर्तृकत्वाद्युपन्यासो व्यर्थः, किञ्च सर्वभूतकर्तृकत्वाद्यनुसन्धानस्य कादाचित्कस्य समुद्रध्यानादिवत् क्रियायामङ्गत्वं सम्भवत्येवेति चेन्न, किं सर्वभूतसम्बन्धिमनोव्यापारस्य प्रतेतस्याग्न्यध्यासाधिष्ठानस्य स्थण्डिलाग्निकार्यनिर्वर्तकत्वेन क्रियामयक्रत्वनुप्रवेश उच्यते, उताऽध्यस्ताग्नेः, न प्रथमः, सार्वत्रिकस्य सर्वभूतकर्तृकस्य मनोव्यापारस्य क्रतूपकारकत्वासम्भवात्, न द्वितीयः, अध्यस्ताग्नेरपि अग्निधारणाक्षमत्वात्, न क्रियान्वय इत्यर्थकत्वात् अस्य वाक्यस्य, अत्र सर्वकालव्यापित्वेनेत्यस्य क्रत्वनुप्रवेशासम्भव इत्यनेन चान्वयः, मनसाऽनुसंहितस्येत्यनेन च, ततश्चाध्यासाधिष्ठानक्रियाया अध्यस्ताग्नेश्च न क्रियाङ्गत्वमिति प्रतिपादनाय सर्वकालकर्तृकत्वाद्युपादानमिति मन्तव्यम् , ( विद्यामयः क्रतुरिति ) नच क्रियामये परिमितकालभगवदाराधने शुद्धसत्त्वमयनित्यद्रव्यत्वादिना अनुसंहितमङ्गत्वं दृष्टमिति वाच्यम् , 'यक्षानुरूपो बलि' रिति न्यायेन सर्वकालव्यापिसाम्पादिकाग्नेः तादृशक्रतावङ्गत्वस्योचितत्वात्, ननु क्रत्वध्यासः केषु व्यापारेषु , न तावत् मनआदिव्यापारेषु, तेषामग्निदृष्टिक्रोडीकृतानां क्रतुत्वदृष्ट्या क्रोडीकरणासम्भवात्, अन्येषाञ्च व्यापाराणां क्रतुत्वाध्यासाधिष्ठानभूतानामनुपात्तत्वादिति चेन्न, मनआदिव्यापारेष्वेव केषुचिदग्निदृष्टिः केषुचिद्यागदृष्टिरित्यभ्युपगमे बाधकाभावात् ॥ ❀ ॥

इष्टकचितान्वयिनः क्रियामयात्क्रतोर्विद्यामयोऽयं क्रतुः पृथक्त्वेनानुबन्धादिभ्यः पृथक्त्वहेतुभ्योऽवगम्यते । अनुबन्धाः यज्ञानुबन्धिनो ग्रहस्तोत्रशस्त्रादयः "मनसैषु ग्रहा अगृह्यन्त मनसाऽस्तुवन्त मनसाऽशंसन्" इत्यादिना प्रतिपादिताः । आदिशब्देन श्रुत्यादयः पूर्वोक्ता गृह्यन्ते, श्रुतिलिङ्गादिभिः सानुबन्धैर्विद्यामयः क्रतुः पृथगवगम्यत इत्यर्थः । प्रज्ञान्तरपृथक्त्ववत्— यथा प्रज्ञान्तरं दहरविद्यादि क्रियामयात्क्रतोः पृथग्भूतं श्रुत्यादिभिरवगम्यते ; एवमयमपि । एवं चानुबन्धादिभिः पृथग्भूते विद्यामये यज्ञेऽवगते सति विधिः परिकल्प्यते । दृष्टश्चानुवादसरूपेषु कल्प्यमानो विधिः । तदुक्तं "वचनानि त्वपूर्वत्वात्" इति । फलं च "तेषामेवैकैक एव तावान् यावानसौ पूर्वः" इत्यतिदेशात् स्वक्रतुद्वारेणेष्टकचितस्याग्नेर्यत्फलं तदेव मनश्चिदादीनामपि स्वक्रतुद्वारेण फलमित्यवगम्यते ॥ ४८ ॥

यत्पुनरतिदेशेन तुल्यकार्यत्वावगमात् क्रिया-

* श्रुतप्रकाशिका *

वादसरूपेष्विति ) फलसम्बन्धश्रवणाद्विधिकल्पनं श्रुतहानप्रसङ्गभयाद्धि क्रियते, तदत्रापि तुल्यम्, सानुबन्धैः श्रुत्यादिभिर्विद्यामयक्रतोरवगतत्वात् श्रुतहानप्रसङ्गपरिहारार्थं विधिः कल्प्यत इति भावः । किञ्च अधिकं फलश्रवणमस्तीत्याह ( फलं चेति ) ( इष्टकचितस्याग्नेर्यत्फलमिति ) फलकामनया कृतं चेत्— तत्फलावाप्तिः, अन्यथा चेत्—मुक्तिः फलमिति भावः ॥४८॥

अनन्तरसूत्रशङ्कामाह ( यत्पुनरिति )

मयक्रत्वनुप्रवेशोऽवगम्यत इत्युक्तम्, तत्राह—

न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ४९ ॥

नावश्यमतिदेशादवान्तरव्यापारस्यापि तुल्यतया भवितव्यम्, येन क्रियामयक्रत्वनुप्रवेश एषां स्यात्। यस्मात्कस्माच्चित्सामान्यमात्रादतिदेशोपलब्धेः, उपलभ्यते हि "स एष एव मृत्युर्य एतस्मिन्मण्डले पुरुषः" इत्यादिषु संहर्तृत्वादिसामान्यमात्रादतिदेशः, न हि तत्र मण्डलपुरुषस्य मृत्युवत्तल्लोकापत्तिः—तद्देशप्राप्तिरपि भवति; एवमिहापि मनश्चिदादीनामिष्टकचिताग्निवद्भावातिदेशमात्रेणेष्टकचिताग्निदेशरूपक्रियामयक्रत्वनुप्रवेशेनापि न भवितव्यम्। अत इष्टकचिताग्नेः स्वक्रतुद्वारेण यत्फलं तदेव मनश्चिदादीनामपि विद्यामयक्रतुद्वारेण फलमित्यतिदेशादवगम्यते ॥ ४९ ॥

* श्रुतप्रकाशिका *

न सामान्यादप्युलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ४९ ॥ (अवान्तरव्यापारस्य) क्रियामयक्रत्वनुप्रवेशस्येत्यर्थः:, तल्लोकापत्तिरिति व्याख्येयं पदम्, तच्छन्दः पूरकतयाऽध्याहृतः। तद्व्याचष्टे (तद्देशप्राप्तिरिति) (अग्निवद्भावातिदेशमात्रेण) अग्निवद्भावः—अग्नितुल्यत्वम् (इष्टकचिताग्निदेशरूपेति) देशः आश्रयः, अङ्गस्याश्रयोऽङ्गी, इष्टकचिताग्न्यङ्गिरूपेत्यर्थः ॥ ४९ ॥

* भावप्रकाशिका *

अग्निवद्भावातिदेशः— अग्निवद्भावप्रापकातिदेशः ॥ ७ ॥

पूर्वविकल्पाधिकरणम् ।

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५० ॥

परेण च ब्राह्मणेनास्यापि मनश्चिदाद्यभिधायिनः शब्दस्य ताद्विध्यम्—तद्विधत्वम्, विद्यामयप्रतिपादित्वमवगम्यते । परेण हि ब्राह्मणेन "अयं वाव लोक एषोऽग्निचितस्तस्याप एव परिश्रिताः" इत्यादिना "स यो हैतदेवं वेद लोकं पृणानमेनं भूतमेतत्सर्वमभिसम्पद्यते" इति पृथक्फला विद्यैव विधीयते । तथा वैश्वानरविद्यादौ च विद्यैव विधीयते । अतोऽग्निरहस्यस्य क्रियैकविषयत्वं नास्ति । एवं तर्हि विद्यामया मनश्चिदादयो बृहदारण्यकेऽनुबद्धव्याः किमर्थमिहानुबध्यन्ते ; तत्रोच्यते—भूयस्त्वात्त्वनुबन्धः—इति । मनश्चिदादिषु सम्पादनीयानामग्न्यङ्गानां

---

* श्रुतप्रकाशिका *

एवं प्रकरणादपि प्रबलैः श्रुत्यादिभिर्विद्यामयकत्वङ्गत्वमुक्तम्, अथ प्रकरणेनाप्ययमर्थ उपपाद्यते—

परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५० ॥ एष लोकः—भूः, आपः—समुद्राः, परिश्रिताः—परिस्तरणानि, एतं लोकं पृणानम्—'पॄ पालनपूरणयोः' पूरयन्तं भुवम्, एतदेवं वेद—लिङ्गव्यत्ययः एतमग्निं वेदे-

७ भावप्रकाशिका ७

अयं लोको भूरितिपाठः, एष चितोऽग्निरयं 'लोकः पृथवी आपः समुद्राः' अत्र कैश्चित् अश्मन्नूर्जमिति परिषिञ्चतीति विहिताग्निपरिषेचनजले समुद्रदृष्टिर्विधीयत इति व्याख्यातम्, लोकं पृणेति 'पृण प्रीणने' इत्यस्मात्तौदादिकाल्लोकं प्रीणातीत्यस्मिन्नर्थे मूलविभुजादित्वात्कप्रत्यये 'लोकस्य प्रणेतुं वक्तव्य' इति मुमाग-

## भूयस्त्वात्तत्सन्निधाविद्यानुबन्धः कृतः ॥ ५० ॥

॥ पूर्वविकल्पाधिकरणं समाप्तम् ॥



## एक आत्मनः शरीरे भावात् ॥ ५१ ॥

२१ अधिकरणम्

सर्वासु परविद्यासूपास्योपासनस्वरूपवदुपासकस्वरूपस्यापि ज्ञातव्यत्वमुक्तम्, "त्रयाणामेव चैवमुपन्यासः प्रश्नश्च" इति । वक्ष्यति चास्य प्रत्यगा-

---

* श्रुतप्रकाशिका *

स्यर्थः ॥ ५० ॥

पूर्वविकल्पाधिकरणं समाप्तम् ॥

एक आत्मनः शरीरे भावात् ॥ ५१ ॥ पूर्वाधिकरणं प्रासङ्गिकम्, अतस्तत्पूर्वाधिकरणेन सङ्गतिः, तत्र सर्वविद्यासु भगवत एवोपास्यत्वमुक्तम्, तथा प्रत्यगात्माऽप्यनुसन्धेय इति सङ्गतिः सर्वास्वित्यादिना सूचिता, 'त्रयाणा'मित्यादिसूत्रे त्रयाणामिति पदमुपायोपेयोपेतृपरं व्याख्यातं भाष्ये, दीपसारयोरुपास्योपासकोपासनपरं व्याख्यातम्, एतदभिप्रायेणाह ( सर्वास्विति ) सिद्धान्ते प्रत्यगात्मन उपास्यकोटिनिक्षेपस्य वक्ष्यमाणत्वात् तदुपयोगित्वेनाह ( वक्ष्यति चेति ) सूत्र-

ॐ भावप्रकाशिका ॐ

मे रूपमिति वैयाकरणैरुच्यते तदप्यविरुद्धमेव ॥ ५ ॥

॥ इति पूर्वविकल्पाधिकरणम् ॥

( सर्वास्वित्यादिना सूचितेति ) सर्वविद्योपास्यविशेषस्य स्वरूपचिन्ता प्राक्प्रवृत्ता, सर्वविद्योपास्यविशेषणभूतोपासकस्वरूपचिन्ताप्रकारो विशोध्यत इति सङ्गतिरित्यर्थः, ( दीपसारयोरिति ) यद्यपि भाष्यकृत्यनन्तरमेव दीपसारकृतिः, तथापि ग्रन्थकाराणां चिकीर्षितग्रन्थान्तरेषु वक्ष्यमाणार्थानामप्युक्ततया निर्देशोस्ति, नायं दोषः, वस्तुत उपायोपेयोपेतॄणामेवोपासनादिरूपत्वात् न विरोध इति द्रष्टव्यम् ( तदुपयोगित्वेनाहेति ) इदमुपलक्षणम्, प्रत्यगात्मनोऽनुसन्धेयत्वे सिद्धे किंरूप उपास्य इति चिन्ताऽवतरेत्, नान्यथा,

त्मनः परमात्मात्मकत्वेनानुसन्धानम् "आत्मेति तूप-गच्छन्ति ग्राहयन्ति च" इति । किमयं प्रत्यगात्मा ज्ञाता कर्त्ता भोक्तेहामुत्र सञ्चारक्षमोऽनुसन्धेयः? उत प्रजापतिवाक्योदितापहतपाप्मत्वादिस्वरूपः? किं युक्तम्, ज्ञातृत्वाद्याकारमात्र इत्येके मन्यन्ते । कुतः— अस्योपासकस्यात्मनः शरीरे भावात् । आत्मनः शरीरे वर्त्तमानस्य तादृशमेव रूपं तावतैवा-नुसन्धानेन तत्फलसिद्ध्युपपत्तेश्च । न हि कर्मस्वधिकृ-तानां स्वर्गादिफलार्थिनां ज्ञातृत्वाद्यतिरेकेण फला-नुभवदशायां यादृशं रूपं तादृशं रूपं साधनानु-ष्ठानदशायामनुसन्धातव्यम्, तावतैव साधनानुष्ठान-

---

* श्रुतप्रकाशिका *

द्वयोक्तार्थोपजविनेनेदमाधिकरणं प्रवर्त्तत इत्यर्थः । परमात्मशरीरत्वेनानुस-न्धेयः प्रत्यगात्मा किं ज्ञातृत्वकर्तृत्वभोक्तृत्वमात्राकारोऽनुसन्धेयः ? उतापह-तपाप्मत्वाद्याकारः, किं यथाक्रतुरिति यथोपासनप्राप्तिवचनं परविषयम् ? उत प्रत्यगात्मविषयमपि भवतीति, 'तं यथा यथोपासते' इति तच्छब्दः किं परमात्ममात्रपरः ? उत जीवशरीरकपरमात्मपरः ? इति, परमात्ममात्रपरत्वे यथो-पासनप्राप्तिवचनस्य परविषयत्वात् ज्ञातृत्वादिमात्राकारेण प्रत्यगात्माऽनुस-न्धेयः, जीवशरीरकपरमात्मपरत्वे यथाक्रतुरिति श्रुतेर्विशेषणभूतजीवांश-विषयत्वस्यापि सम्भवात् अपहतपाप्मत्वाद्याकारोऽनुसन्धेयः स्यात्, शरी-रस्थस्य रूपं तादृशमस्तु, ततः किं तथाऽनुसन्धानस्येत्यत्राह ( तावतैवेति ) फलसिद्ध्युपपत्तिं दर्शयति ( नहीति ) तावता फलसिद्ध्यनुपपत्तिमुखेन

* भावप्रकाशिका *

अतो विचारोपयोगार्थमेव 'आत्मेति तूपगच्छन्ति' इति सूत्रोपादानम् । अत एव सूत्रद्वयोक्तार्थोपजीवनेनेति वक्ष्यति, 'तं यथा यथोपासते' इत्यत्र

तत्फलयोः सिद्धेरतिरिक्तानुसन्धाने प्रयोजनाभावात्तदविशेषादिहापि तथैव। ननु चात्र "यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति विशेषवचनादपहतपाप्मत्वाद्याकार एवानुसन्धातव्य इत्यवगम्यते; नैवम् "तं यथा यथोपासते" इत्युपास्यविषयत्वात्तस्य ॥ ५१ ॥

एवं प्राप्ते प्रचक्ष्महे

* श्रुतप्रकाशिका *

चोदयति (ननु चेति) विषयव्यवस्थया परिहरति (नैवमिति) ॥ ५१ ॥

* भावप्रकाशिका *

तच्छब्दस्य परमात्मस्वरूपपरत्वात् तं परमात्मानं यद्गुणविशिष्टमुपासत इत्यर्थः, ततश्च जीवगतापहतपाप्मत्वादेः ब्रह्मस्वरूपविशेषणत्वाभावात् न तत्र तत्क्रतुन्याय इति पूर्वपक्षाभिप्रायः, 'यथायथोपासते' इत्यत्र यत्प्रकारविशिष्टमुपासत इति हि तस्यार्थः, तत्र च ब्रह्मगुणानामिव अपहतपाप्मत्वादिविशिष्टस्वात्मतयोपासने तथैव फलं भवतीति स्वात्मनोप्यपहतपाप्मत्वादिविशिष्टस्यैवाऽनुसन्धानं सिध्यतीति सिद्धान्ताभिप्रायः। नन्वेव सति तच्छब्दस्य विशेष्यस्वरूपपरत्वेऽपि यथाशब्दक्रोडीकृतत्वात् अपहतपाप्मत्वादिविशिष्टस्वात्मस्वरूपस्यानुसन्धानसिद्धेः तच्छब्दस्य विशिष्टपरामर्शित्वसाधनं विफलमिति चेत् तस्य युक्त्यन्तरत्वात् तच्छब्दो विशिष्टविषय इति भाव इति सिद्धान्तग्रन्थे चशब्दमध्याहृत्य इति च भाव इति योजनीयम्, अतो नानुपपत्तिः। ननु 'उपासितगुणादेर्या प्राप्तावप्यबहिष्क्रिया। सा तत्क्रतुनयाद्ग्राह्या नाकारान्तरवर्जनम्' इत्युक्तरीत्या अपहतपाप्मत्वाद्यनुसन्धानमन्तरेणापि तत्प्राप्तिसम्भवेन कथमवश्यानुसन्धेयत्वम्, नच कर्तृत्वादिसांसारिकधर्मवत्तयाऽनुसन्धाने तत्क्रतुन्यायेन फलदशायामपि सांसारिकधर्मानुवृत्तिप्रसङ्ग इति वाच्यम्, तावता कर्तृत्वाद्यनुसन्धानस्याऽयुक्तत्वेपि अपहतपाप्मत्वादिविशिष्टोपासने नियामकाभावादिति चेत्, सत्यम्, तथापि कर्तृत्वाद्यनुस-

व्यतिरेकस्तद्भावभावित्वान्न
तूपलब्धिवत् ॥ ५२ ॥

न त्वेतदस्ति यज्ज्ञातृत्वाद्याकार एवानुसन्धेय इति, अस्यात्मनः संसारदशायां मोक्षदशायां यो व्यतिरेकः सोऽपहतपाप्मत्वादिकोऽनुसन्धेयः । अस्य मोक्षदशायां यादृशं रूपं तादृग्रूप एवोपासनवेलायामात्माऽनुसन्धेय इत्यर्थः । कुतः तद्भावभावित्वात्तद्रूपापत्तेः, "यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति" "तं यथा यथोपासते तथैव भवति" इति यथोपासनमेव हि प्राप्तिः श्रूयते, न च परस्वरूपमात्रविषयमेवेदमिति वक्तुं शक्यते, प्रत्यगात्मनोऽप्युपास्यभूतपरब्रह्मशरीरतयोपास्यकोटिनिक्षिप्तत्वात्, अतः प्रजापतिवाक्योदितापहतपाप्मत्वादिगुणकप्रत्यगात्मशरीरपरमात्मोपासनस्य तथा

---

* श्रुतप्रकाशिका *

( एवं प्राप्त इति )

व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ५२ ॥ व्यतिरेक इत्युक्ते धर्ममात्रस्यानुसन्धेयत्वशङ्कानिवृत्त्यर्थमाह ( अस्य मोक्षदशायामिति ) ( तद्भावभावित्वात् तद्रूपापत्तेरिति ) अपहतपाप्मत्वादिरूपापत्तेः तथाऽनुसन्धानसद्भावभावित्वादित्यर्थः । ( न चेत्यादि ) यथोपासनफलश्रुतिर्न विशेष्यमात्रविषया, अपि तु विशिष्टविषयेत्यर्थः । फलितमर्थमाह ( अत इति ) तस्मात् ब्रह्मगुणानामिव शुद्धस्वरूपस्यापि ब्रह्मविशेषणत्वात्तदनुसन्धेय-

* भावप्रकाशिका *

न्धानस्य चिरकालानुवृत्तस्य निवृत्तेः तद्विरुद्धापहतपाप्मत्वादिरूपानुसन्धानमन्तरेण

रूपमेव प्राप्यमित्युक्तं भवति, अत एव "एवं क्रतुरिहामुं लोकं प्रेत्याऽभिसम्भाविताऽस्मि" इत्युच्यते, तस्मात्प्रत्यगात्मा प्राप्याकार एवानुसन्धेयः । उपलब्धिवत्– ब्रह्मोपलब्धिवत्, यथा ब्रह्मोपलब्धिर्विहिता यथाऽवस्थितब्रह्मस्वरूपविषया तथाऽऽत्मोपलब्धिरपि यथाऽवस्थितात्मस्वरूपविषयेत्यर्थः । कर्मस्वात्मस्वरूपानुसन्धानं कर्माङ्गम्. "यजेत स्वर्गकामः"

---

* श्रुतप्रकाशिका *

मित्यर्थः । 'तं यथा यथोपासते' इत्यत्र तच्छब्दो विशिष्टविषय इति भावः । ( अत एवेति ) प्राप्याकारस्यानुसन्धेयत्वादेव हि प्राप्यचिन्तनमुच्यत इत्यर्थः ।

परे चापरे च देहात्मभेदसमर्थनपरमधिकरणं व्याचक्षते, तदयुक्तम्, पादसङ्गत्यभावात्, उपासनेषु गुणोपसंहारानुपसंहारचिन्तनं हि पादकृत्यम्, प्रासङ्गिकचिन्तनमपि शास्त्रारम्भे करणीयम्, देहस्यैवात्मत्वे शास्त्रस्यानारम्भणीयत्वात् । ये पुनः साधनचतुष्टयं पूर्ववृत्तं वदन्ति तेषाम् 'अथातो ब्रह्मजिज्ञासे'त्यस्मात्पूर्वमेव निवेशनीयम्, देहातीर्णनित्यात्मविवेकस्य नित्यानित्यवस्तुविवेकान्तर्गतत्वात्, इहामुत्र फलभोगविरागमुमुक्षुत्वयोस्तन्मूलत्वाच्च । ऐकशास्त्र्यं वदतामपि धर्मजिज्ञासायाः पूर्वमेव देहात्मविवेकः प्रसजेदिति चेत्—न, माणवकहितैषिभिः पित्रादिभिरध्ययने कारिते सत्यापातप्रतीत्यवगतविलक्षणस्वर्गादिफलरागात् नित्यानित्यसन्देहेऽपि तदुपपत्त्यनुपपत्तिनिरूपणाय स्वयमेव शास्त्रप्रवृत्त्युपपत्तेर्देहव्यतिरेकनिश्चयानपेक्षत्वात्, प्रवृत्तस्य च देहातिरेकनिश्चयो

* भावप्रकाशिका *

असम्भवादित्यत्र तात्पर्यात् ॥

( देहात्मविवेकः प्रसजेदिति ) नचेष्टापत्तिः, तदर्थमध्ययनानन्तरं शास्त्रान्तरश्रवणे प्रवृत्तिप्रसङ्ग इति भावः, ( स्वयमेव शास्त्रप्रवृत्तीति ) त्वया तथानभ्युगमात् नित्यानित्यवस्तुविवेकस्य पूर्ववृत्तत्वा-

इति कर्मानुष्ठानमेव हि फलाय चोद्यते, देहातिरिक्तज्ञातृत्वाद्याकारात्मावगतिः कालान्तरभाविफलसाधनकर्माधिकारार्थेति तावन्मात्रमेव तत्रापेक्षितमिति न किञ्चिदपहीनम् ॥ ५२ ॥

शरीरेभावाधिकरणं समाप्तम् ॥



* श्रुतप्रकाशिका *

भवत्येव 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकमेति' इत्यत्र लोकान्तरप्राप्तुरात्मनो देहातिरेकस्यापि निरूपितत्वात्, 'शारीरके वक्ष्यामः' इति वृत्तिकारोक्तिस्तु न देहातिरेकमात्राभिप्राया, किन्तु जडत्वज्ञानात्मकत्वस्थूलत्वविभुत्वाणुत्वाद्याकारविषया मन्तव्या ।

अन्ये तु ब्रह्माहमस्मीत्युपासने स्थूलत्वाद्याकारोऽहं ब्रह्मेत्येवमनुसन्धेयम्, मानसप्रतिपत्तेर्दृष्टसजातीयाकाराविकल्पितविषयत्वनियमात्, स्वर्णमात्रमित्युक्तेऽपि कुण्डलत्रिकोणचतुरस्राद्याकारेण विना स्वर्णप्रतीत्यनुपपत्तेः नीरूपं ब्रह्मेत्युक्तेऽपि दीपादिवन्नीलपीताद्यवच्छेदेन विना प्रतीत्यनुपपत्तेश्च, स्थूलत्वाद्याकारेण विनात्मप्रतिपत्तेर्विधातुमशक्यत्वादिति पूर्वपक्षं कृत्वा देहातिरेकः प्रतिपत्तव्यः, 'तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीका' मित्यादिशास्त्रप्रवृत्तेः शरीरव्यतिरेकभावभावित्वात् । न च निराकारप्रतीत्यनुपपत्तिः, सन्तमसन्तं वा कञ्चन नीलपीताद्याकारमवर्जनीयं मनः स्वयमेव ग्रहीष्यति, न च मिथ्याप्रतिपत्तिर्दोषः अन्यथा तत्प्रतीत्यनुपपत्तेः, अङ्गुष्ठमात्रो रवितुल्यरूप इत्यादिराकारश्च शास्त्रोपदिष्टः परस्य च महारजनाद्याकारोपदेशात् जीवस्यापि तुल्यस्वभावत्वात् तादात्म्यध्यानसौकर्याय तथाऽनुसन्धेयः सम्भूत्युपासनेषु, विनाशोपासनेष्वस्तित्वमुभयोराकारः, 'अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयो'रिति श्रवणात्, अतो देहातिरिक्त आत्मा ब्रह्माऽहमस्मीति प्रतिपत्तव्य इति सिद्धान्तयन्ति,

* भावप्रकाशिका *

भ्युपगमादिति भावः (वृत्तिकारोक्तिरिति) शरीरातिरिक्तात्मास्तित्वप्रसक्तौ शारीरके वक्ष्याम इत्युपवर्षवृत्तिकृत उक्तिरित्यर्थः, (विभुत्वाणुत्वाद्याका-

* श्रुतप्रकाशिका *

तदयुक्तम् , स्थूलत्वादिविरहेणापि सुखादिविशिष्टात्मावभासदर्शनादशक्यविधानत्वाप्रसक्तेः । ननु सुखदुःखादयोऽप्यौपाधिकाः, निरुपाधिकस्वरूपं दुरनुसन्धानमिति चेत्— सत्यम्, तत् कदेति निरूपणीयम् , शुभाश्रयध्यानेन मनःपरिशोधनात् पूर्वं हि तत्, तदा चाहं ब्रह्मेत्युपासनमविहितम् अशक्यत्वादेव, यदा तु शुभाश्रयसंशीलनपरिशोधितमुपदेशसहकृतं च मनः— तदा निरुपाधिकस्वरूपानुसन्धानक्षममिति नाशक्यविधिः, अत एव सिद्धान्ते मिथ्याभूतस्य यस्य कस्यचिदाकारस्यावलम्बनेऽपि न दोष इति कल्पनमप्ययुक्तम् , नीलपीताद्याकारेणात्मानुसन्धानं परिशुद्धात्मसाक्षात्कारस्य न दृष्टोपकारकं विरुद्धत्वात्, अदृष्टोपकारकत्वं तु निष्प्रमाणकम् , रवितुल्यरूपतोक्तिः प्रकाशस्वरूपताऽभिप्राया 'यथा प्रकाशयत्येक' इति व्याख्यातत्वात् । यदि यत्किञ्चिन्नीलपीताद्याकारावलम्बनेन चिन्त्यमिति सिद्धान्तः , तर्हि पूर्वपक्षसिद्धान्तयोर्वैषम्यमेव स्यात्, महारजनाद्याकारेण तादात्म्यानुसन्धानमप्ययुक्तं तस्येश्वराकारत्वात्, घटशरावयोरिव , तुल्यरूपयोर्देवदत्तयज्ञदत्तयोरिव च, जीवेश्वरयोस्तादात्म्यानुपपत्तेः सम्भूत्युपासने, विनाशोपासने चास्तित्वमुभययोराकार इत्यपि दुरुक्तम् , जीवब्रह्मतादात्म्यज्ञानस्य जडजीवतादात्म्यानुसन्धानस्य च वैषम्याभावात् , असाधारणाकारानुसन्धाने हि वैषम्यसिद्धिः, सत्ता च सर्वसाधारणी , सदस्मीत्यनुसन्धाने च शास्त्रवैयर्थ्यम्, न ह्यसदस्मीति कश्चिदात्मानं जानाति, असाधारणाकारानुसन्धाने च भेद एवानुसंहितः स्यात्, न तु तादात्म्यम्, असाधारणाकारप्रतिपन्नयोर्जीवपरयोः साधारणाकारानुसन्धानमेव तादात्म्यप्रतिपत्तिरिति चेतर्हि खण्डो मुण्डो गौरितिवदेकजातीयत्वमेवानुसंहितं स्यात्, ततश्च तादात्म्यविधानवैयर्थ्यम्, न हि साधारणाकारविधुरं किञ्चित् द्रव्यमस्ति 'अस्तीत्येवोपलब्धव्यः' इति श्रुतिस्तु जन्मादिभावविकारराहित्यविषया , न तु सन्मात्रं ब्रह्मेत्येवंपरा, अतो यथाभाष्यमेवाधिकरणं युक्तम् ॥ ५२ ॥ शरीरेभावाधिकरणं समाप्तम् ॥

* भावप्रकाशिका *

रेति ) स्वरूपतोऽणुत्वं धर्मभूतज्ञानद्वारा विभुत्वमित्यर्थः ॥ * ॥

इति शरीरेभावाधिकरणम् ॥

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५३ ॥

२२ अधिकरणम्

"ओमित्येतदक्षरमुद्गीथमुपासीत" "लोकेषु पञ्चविधं सामोपासीत" "उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवी" "अयं वा व लोक एषोऽग्निश्चितः" इत्येवमाद्याः क्रत्वङ्गाश्रया उपासना भवन्ति। ताः किं यासु शाखासु श्रूयन्ते, तास्वेव नियताः? उत सर्वासु शाखासु उद्गीथादिषु

* श्रुतप्रकाशिका *

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५३ ॥ यत्र यत्र ब्रह्मण उपास्यत्वं तत्र तत्र शुद्धजीवस्योपास्यत्वमुक्तम्, एवं यत्र यत्र शाखासूद्गीथाद्यनुप्रवेशः तत्र तत्र सर्वत्र उद्गीथाद्युपासनानुप्रवेशोऽस्ति न वेति शङ्कया सङ्गतिः, उद्गीथाद्युपासनानि किं प्रतिशाखं व्यवतिष्ठेरन्? उत नेति, 'उद्गीथमुपासीते'त्युद्गीथशब्दः किमुद्गीथमात्रे वर्तते? उत स्वरादिभेदभिन्नोद्गीथे?, किं स्वरादिविशेषविशिष्टोद्गीथव्यक्तेः सन्निधिः? उत सर्वोद्गीथव्यक्तीनां सन्निधिरिति, व्यक्तिविशेषस्य सन्निधिश्चेत् तस्यैवोद्गीथशब्दवाच्यत्वात् तत्तच्छाखाविशेषेषूपासनव्यवस्था, सर्वव्यक्तिसन्निधिश्चेदुद्गीथशब्दस्य उद्गीथमात्रवाचित्वात्तद्विषयोपासनानि न व्यवतिष्ठन्त इति, आधिकरणारम्भाक्षेपशङ्कां परि-

* भावप्रकाशिका *

भाष्ये– उक्थमुक्थमितीति, इत्थं कर्माङ्गभूतं शास्त्रम् यत्प्रजा वदन्ति तदिदमेव 'येयं पृथिवी' इत्युक्थे पृथिवीत्वदृष्टिविधिः, भाष्ये–तास्वेव नियता इति, अयम्भावः–सामवेद एव ताण्डिशाखाप्रभृतयो बह्व्यः शाखाः, तासु च शाखासु सर्वासु सामावयवोद्गीथाः स्वरवर्णविशेषादिभेदेन भिन्नाः, ताण्डिशाखायां च आप्त्यादिगुणविशिष्टतया हिरण्मयप्राणाकाशादिदृष्टिविशिष्टतया चोद्गीथाद्युपासनानि विहितानि, तानि च क्रतु-

सम्बध्यन्त इति विचारः। सर्ववेदान्तप्रत्ययत्वे स्थितेऽपि प्रतिवेदं स्वरभेदादुद्गीथादयो भिद्यन्त इति तत्र तत्र व्यवतिष्ठेरन्निति युक्ता शङ्का। किं युक्तम्—व्यवतिष्ठेरन्निति। कुतः "उद्गीथमुपासीत" इति सामान्येनोद्गीथसम्बन्धितया श्रुतायास्तस्यामेव शाखायां स्वरविशेषयुक्तस्योद्गीथविशेषस्य सन्निधानात्त-

* श्रुतप्रकाशिका *

हरति (सर्ववेदान्तेति) यथा कर्म चोपासनं च सर्वशाखास्वेकं तथोद्गीथस्याप्येकत्वात् सर्वत्रोद्गीथानुसारेण प्राप्नुवन्त्युपासनानीत्यधिकरणारम्भाक्षेपः। उद्गीथादीनां स्वरभेदेन व्यक्तिभेदात् तत्तत्स्वरविशेषविशिष्टव्यक्तिविषया उपासनाः? उत सर्वोद्गीथव्यक्तिविषयाः? इति संशयः स्यादि-

* भावप्रकाशिका *

मध्येऽनुष्ठेयानि, तत्र यदा क्रत्वङ्गतया ताण्डिशाखागतोद्गीथः प्रयुज्यते तदा तस्मिन्नेव तच्छाखाविहिताप्त्यादिगुणविशिष्टोपासनं कर्तव्यम्, उत शाखान्तरगतेप्युद्गीथे क्रत्वङ्गतया प्रयुज्यमाने इति, एवं वेदान्तरविहितोद्गीथाद्युपासनेपि तत्तद्वेदविहितोद्गीथाद्युपासनप्रकारः तत्तद्वेदविहितोद्गीथमात्रविषयकः, उत वेदान्तरविहितविषयकोपि वा, 'उपांशु यजुषा' इति वचनबलात् यजुर्वेदविहित उद्गीथ उपांशुत्वगुणकः, वेदान्तरविहितस्तूच्चैष्ट्वगुणकः इति द्रष्टव्यम्, भाष्ये-- सर्ववेदान्तप्रत्ययत्व इति, ननु उद्गीथानां मन्त्रावयवरूपाणां नानाशाखाम्नातानामभेदः प्रत्यक्षप्रत्यभिज्ञानादेव सुवचो न सर्ववेदान्तप्रत्ययन्यायमपेक्षते, नहि नानाशाखाम्नातमन्त्राभेदप्रत्ययः सर्ववेदान्तप्रत्ययन्यायसाध्य इति चेत्, सत्यम्, सामवेदान्तर्गतनानाशाखाम्नातोद्गीथव्यक्तीनामभेदो न न्यायसापेक्षः, प्रत्यभिज्ञयैवैक्यस्य सुज्ञानत्वात्, तथापि वेदान्तरविहितादुद्गीथाद्वेदान्तरविहितस्योद्गीथस्य 'विहितस्य विधानायोगा'दित्यभ्यासाधिकरणोक्तन्यायेन भेदशङ्का समुन्मिषति, तत्परिहारस्तु सर्ववेदान्तप्रत्ययन्यायमपेक्षत इति भावः। भाष्ये उद्गीथसम्बन्धितया श्रुताया इति, उपासनाया इति शेषः।

स्मिन्नेव विशेषे पर्यवसानं युक्तमिति— एवमाद्यास्तास्वेव शाखासु व्यवतिष्ठेरन्निति ।

एवं प्राप्ते प्रचक्ष्महे—अङ्गावबद्धास्त्विति । तुशब्दः पक्षं व्यावर्त्तयति, न ह्युद्गीथाद्यङ्गावबद्धा उपासनास्तास्वेव शाखासु व्यवतिष्ठेरन्, अपि तु प्रतिवेदं सम्बध्येरन्, सर्वासु शाखास्वित्यर्थः । हिशब्दो हेतौ, यस्माच्छ्रुत्यैवोद्गीथाद्यङ्गमात्रावबद्धाः, तस्मात् यत्रोद्गीथादयस्तत्र सर्वत्र सम्बध्येरन् । यद्यपि स्वरभेदेनोद्गीथव्यक्तयो भिद्यन्ते । तथाऽपि सामान्येनोद्गीथश्रुत्या सर्वा व्यक्तयः सन्निहिता इति न कचिद्व्यवस्थायां प्रमाणमस्ति । सर्वशाखा-

---

* श्रुतप्रकाशिका *

त्याक्षेपसमाधिरित्यर्थः (तस्मिन्नेव विशेष इति) लोके गामानयेत्यादिषु सामान्यशब्दानां सन्निहितविशेषपर्यन्तत्वदर्शनादिति भावः ।

(एवं प्राप्त इति) यस्मात् श्रुत्यैवोद्गीथाद्यङ्गमात्रविषयाः प्रतीयन्ते— इति तस्मादित्यर्थः । पूर्वपक्षयुक्तिमनूद्य दूषयति (यद्यपीति) (न कचिद् व्यवस्थायां प्रमाणमस्तीति) गामानयेत्यादिषु सर्वव्यक्तीनामानयनायोग्यत्वं व्यक्तिविशेषे शब्दस्य व्यवस्थापकम्, न त्वसन्निधिः, सामान्येन व्यक्तीनां धीस्थत्वात्, धीस्थत्वं हि सन्निधिः, अत्र तु तादृशायोग्यत्वादिव्यवस्थापकाभावात् शब्दस्य स्वतः प्राप्तं सर्वव्यक्तिविषयत्वं तिष्ठतीति भावः । सन्निहिताः— बुद्धिस्थाः, अनेन सन्निधेर्व्यवस्थापकत्वमपास्तम्— निरङ्कुशया

❀ भावप्रकाशिका ❀

भाष्ये—एवमाद्यास्तास्वेव शाखास्विति, 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादिवाक्यविहिताप्त्यादिगुणकोद्गीथोपासनप्रभृतय इत्यर्थः (अनेन सन्निधेर्व्यवस्थापकत्वमिति) नन्विदमसङ्गतम्, उद्गीथवाक्यप्रवृत्तेः प्राक् तत्तच्छाखागतोद्गीथादिव्यक्तीनामेव सन्निहितत्वादविशेषप्रवृत्तापि श्रुतिः सन्निधिवशेन व्यवस्था-

प्रत्ययन्यायेन च सर्वासु शाखासु क्रतुरेकः । अतः सर्वासु शाखास्वेकस्य क्रतोः सन्निधानात् क्रत्वङ्गभूतोद्गीथादयोऽपि सन्निहिता इति नैकस्य सन्निधिविशेषोऽस्तीति न व्यवस्था ॥ ५३ ॥

* श्रुतप्रकाशिका *

शब्दशक्त्या सर्वव्यक्तीनां बुद्धिस्थत्वात् । अथार्थस्वभावादपि सर्वोद्गीथव्यक्तिसन्निधिमाह ( सर्वशाखाप्रत्ययेति ) अङ्गिनस्सन्निधानादङ्गान्यपि सन्नि-

* भावप्रकाशिका *

स्यत इति पूर्वपक्षिणोपक्षिप्ते अविशेषप्रवृत्तायाः श्रुतेर्दुर्बलसन्निध्यनुरोधेन सङ्कोचासम्भवादित्येव परिहर्तव्यम्, श्रुतिजनितप्रतीतेरपि प्राक्सन्निहित एव विषय इति वदन्तं पूर्वपक्षिणं प्रति एतस्यानुत्तरत्वात् , श्रुतिप्रवृत्तेः प्राक् उद्गीथव्यक्त्यन्तराणाम् असन्निधानस्यैव हेतूकरणेन तस्य पूर्वपक्षहेतोः तादवस्थ्यादिति चेत् , सत्यम्, अविशेषप्रवृत्तायाः श्रुतेः सन्निधिवशेन सङ्कोचस्यायुक्तत्वादित्यत्रैव तात्पर्यात्, ननु ‘ उद्गीथमुपासीत ’ इत्यत्र उद्गीथश्रुतेरुद्गीथसामान्यं वाच्यम्, उद्गीथव्यक्तिर्लक्ष्या, स्वशाखागतोद्गीथव्यक्त्युपादाने च सामान्यस्य प्रतिव्यक्तिसमाप्त्या सामान्यविशेषौ द्वावपि श्रुत्यर्थौ गृहीतौ, तत्र कथं श्रुतिबाधः, यथाहुः ‘जातिव्यक्ती गृहीत्वेह वयन्तु श्रुतलक्षिते । कृष्णादिं यदि मुञ्चामः का श्रुतिस्तत्र पीडयते’ इति, पटं शुक्लमानयेति प्रयोगे पटपदेन श्रुतपटत्वजातिं लक्षितां च शुक्लपटव्यक्तिं गृहीत्वा कृष्णादिव्यक्तिं यदि मुञ्चामः का श्रुतिस्तत्र पीडयते, न कापीत्यर्थः— इत्युक्तमिति चेन्न, शुक्लं पटमानयेत्यत्र शुक्लमात्रस्य पटमात्रस्य च ग्रहणे परस्परविशिष्टार्थप्रत्यायकत्वभङ्गप्रसङ्गेन सङ्कोचेपि इह अविशेषप्रवृत्तोद्गीथमात्रग्रहणे बाधकाभावादिति भावः । भाष्ये—सर्वशाखाप्रत्ययन्यायेन चेति, ननु ‘भूयस्त्वेनोभयश्रुति, इति न्यायेन ज्योतिष्टोमस्य याजुर्वेदिकतया ताण्डिशाखायां विधानाभावेन तद्द्वारा उद्गीथाद्यङ्गानामसन्निधापितत्वेन आप्त्यादिगुणविशिष्टताण्डिशाखाविहितोद्गीथोपासनेषु ज्योतिष्टोमाङ्गभूतनानाशाखागतस्वरविशेषविशिष्टसर्वोद्गीथव्यक्तीनामुपास्यत्वं न स्यात्, किम्बहुना , यस्यां शाखायां

**मन्त्रादिवद्वाऽविरोधः ॥ ५४ ॥**

**वाशब्दश्चार्थे, आदिशब्देन जातिगुणसङ्ख्या-सादृश्यक्रमद्रव्यकर्माणि गृह्यन्ते, यथा मन्त्रादीना-मेकैकशाखास्वाम्नातानामपि शेषिणः क्रतोः सर्व-शाखास्वेकत्वेन यथायथं श्रुत्यादिभिः सर्वासु शाखासु विनियोगो न विरुध्यते; तद्वदिहाप्यविरोधः ॥ ५४ ॥**

अङ्गावबद्धाधिकरणं समाप्तम् ।

---

* श्रुतप्रकाशिका *

हितानि भवन्ति— इत्यर्थः ॥ ५३ ॥

मन्त्रादिवद्वाऽविरोधः ॥ ५४ ॥ वेदान्तरोत्पन्नानाम् 'अग्नेर्वै होत्रं वेतु' इत्यादिमन्त्राणां वेदान्तरेऽपि परिग्रहो दृष्टः, बह्वृचपठि-तस्य 'यो जात एव प्रथमो मनस्वा' निति सूक्तस्य 'अध्वर्यवे सज-नीयं शस्य'मिति विनियोगो दृष्टः, 'अजोऽग्नीषोमीय' इत्युपदिष्टा जाति-स्तदुपदेशरहिते शाखाभेदे 'छागस्य वपाया मेदसोऽनुब्रूहि' इत्याश्रीयते, एवं गुणादीनां विनियोगो द्रष्टव्यः, प्रकरणाम्नानमात्रेणान्यत्र प्रवेशाभावे मन्त्रादीनामपि शाखान्तरे प्रवेशो न स्यादित्यतिप्रसङ्गरूपस्तर्कोऽभिप्रेतः, अविरोधः— शाखाविशेषस्थस्यान्यत्र प्रवेशे विरोधाभावः, मन्त्रादीनां श्रुत्या-

ॐ भावप्रकाशिका ॐ

यस्य क्रतोर्न विधिः तदङ्गभूतोद्गीथव्यक्तीनां नानाशाखागतानामङ्गिद्वारा सन्नि-धापनाभावाद्विषयत्वं न स्यादिति चेन्न, एकस्याभ्युच्चययुक्तितया उपन्यस्त-त्वेन एतस्याव्यापित्वेपि पूर्वोक्तयुक्तेर्व्यापित्वेन निराकरणसम्भवेन दोषा-भावात् ॥ ॐ ॥

भाष्ये—आदिशब्देनेति, 'पशुना यजेत' इत्यत्र पशुत्वजातिरेकत्वसंख्या 'अरुणयैकहायन्या' इत्यत्रारुणिमगुणः, एकहायनीद्रव्यं 'श्येनचितं चिन्वीत' इत्यादौ सादृश्यं 'वेदं कृत्वा वेदीं करोति' इत्यादौ क्रमः प्रयाजादीनि च कर्माणि, (उद्गीथपदश्रुत्या विनियोगादिति) उद्गीथपदगतद्वितीयाश्रुत्येत्यर्थः,

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५५ ॥

२३ अधिकरणम्

"प्राचीनशाल औपमन्यवः" इत्यारभ्य वैश्वानरविद्याऽऽम्नाता; तत्र वैश्वानरः परमात्मा त्रैलोक्यशरीर उपास्यः श्रुतः स्वर्लोकादि-

* श्रुतप्रकाशिका *

दिभिर्विनियोगादविरोधश्चेत्—इहाप्युद्गीथपदश्रुत्या विनियोगादविरोधः इत्यभिप्रायः, एवं सर्वशाखासूद्गीथानुवृत्त्या सर्वशाखिनामुपासनेष्वधिकारः फलम् ॥५४॥

अङ्गावबद्धाधिकरणं समाप्तम् ॥

भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५५ ॥ पूर्वाधिकरणे उद्गीथादिकं प्रस्तुतम्, तत्र सामावयवभूतोद्गीथादेः समस्तस्य व्यस्तस्य चोपासनं श्रुतिसिद्धम्, एवं वैश्वानरविद्यायां किं समस्तस्योपासनं कार्यम्, उत व्यस्तस्य ? उतोभयस्येति शङ्कया सङ्गतिः, स्वर्लोकादिषु किमव-

* भावप्रकाशिका *

नचैवमुपासनस्योद्गीथाङ्गत्वप्रसक्त्या तन्निर्धारणानियमः, 'अङ्गेषु यथाश्रयभावः' इत्याद्यधिकरणविरोध इति वाच्यम्, तत्परिहारस्य 'अन्यथात्वं शब्दादिति चे'दित्यत्रास्माभिः प्रपञ्चितत्वात् (सर्वशाखिनामुपासनेष्वधिकारः फलमिति) सर्वशाखिनां सर्वशाखागतोद्गीथप्रयोक्तॄणां सर्वशाखाविहितोद्गीथोपासनेष्वधिकारः फलमित्यर्थः, ततश्च यथाप्त्यादिगुणविशिष्टमुपासनं ताण्डिशाखायां श्रुतं क्रतुमध्ये ताण्डिशाखागतोद्गीथप्रयोक्तारमधिकरोति, एवं क्रतुमध्ये शाखान्तरगतोद्गीथप्रयोक्तारमपीदमुपासनमधिकुर्यात्, अन्यथा ताण्डिशाखागतोद्गीथविषयमेव तच्छाखाविहितमाप्त्यादिगुणविशिष्टमुपासनमिति क्रतुषु जैमिन्यादिशाखागतोद्गीथप्रयुक्तः तत्रोपासनेऽधिकारो न स्यादिति भावः ॥५४॥

इत्यङ्गावबद्धाधिकरणम् ॥

(श्रुतिसिद्धमिति) 'ओमित्येतदक्षरमुद्गीथ' मित्यत्र व्यस्तोपासनम्' 'पृथिवी हिंकारोऽग्निः प्रस्ताव आदित्य उद्गीथः' इति द्वितीयप्रपाठके

स्ववाय्वाकाशाप्पृथिव्यवयवः । तत्र च द्यौर्मूर्द्धा आदित्यश्चक्षुर्वायुः प्राणः आकाशः सन्देहो—मध्यकाय इत्यर्थः, आपो वस्तिः पृथिवी पादावित्यवयवविशेषाः; तत्र संशयः—किमस्य त्रैलोक्यशरीरस्य व्यस्तस्योपासनं कर्त्तव्यम् ? उत व्यस्तस्य समस्तस्य च ? अथ समस्तस्यैवेति । किं युक्तम्, व्यस्तस्येति । कुतः ? उपक्रमे व्यस्तोपासनोपदेशात् । तथा ह्युपदिश्यते—"औपमन्यवादयः किलोद्दालकषष्ठाः केकयमश्वपतिमुपसद्यात्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि" इति पप्रच्छुः । स च तेभ्यः प्रत्येकं स्वोपास्यान् द्युप्रभृतीनुक्तवद्भ्यो मूर्द्धादिषु व्यस्तेषूपासनं तत्र तत्र फलं चोक्तवान् "अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसकुले य एतमेवमात्मानं वैश्वारनमुपास्ते मूर्द्धा त्वेष आत्मन इति एष वै सुतेजा आत्मा वैश्वानरः" इत्यादिना । तेषु तेषूपासनेषूपास्यस्य वैश्वानरत्वं चाह । अतो

---

* श्रुतप्रकाशिका *

यवभूतमित्यत्राह (तत्र चेति) किं वैश्वानरविद्यायां व्यस्तोपासनविधिः ? उत व्यस्तस्य समस्तस्य च ? उत समस्तस्यैव, किं प्रत्यवयवं फलश्रवणात् 'यस्त्वेतमेव' मित्युपासनसमुदायानुवादः ? उत व्यस्ते समस्ते च फलश्रवणादुभयत्र विधिः कल्प्यः ? उत प्रत्येकफलश्रवणमर्थवादः । आद्ये व्यस्तोपासनविधिः, द्वितीये उभयविधिः, तृतीये समस्तस्यैव विधिः । अत्त्यन्नम्—अन्नमत्ति, प्रियं पश्यति— अस्य कुले ब्रह्मवर्चसम्भवतीत्यन्वयः, वैश्वानरोपासनं ह्युपक्रान्तं तत्कथं मूर्द्धमात्रोपासनोपदेश इत्यत्राह ( वैश्वारनत्वं

-व्यस्तस्यैवोपासनं कर्त्तव्यम् । परत्र "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति। द्युप्रभृतिप्रदेशावच्छिन्नमात्रे वैश्वानरे उक्तस्य मूर्द्धाद्युपासनस्य समासेनोपसंहार इत्यवगन्तव्यम् । अपर आह- एवमेव समस्तस्याप्युपासनं कार्यमिति, पृथक्फलनिर्देशात् "यस्त्वेतमेवं प्रादेशमात्रमभिविमानं वैश्वानरमुपास्ते सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" इति । न चैतावता वाक्यभेदः

---

* श्रुतप्रकाशिका *

चाहेति ) एतमेवमात्मानं वैश्वानरमुपास्ते इत्यादिष्वित्यर्थः, व्यस्तोपासनं विवक्षितं चेत् कथं समस्तस्योपसंहारः? इत्यत्राह ( परत्रेति ) ( वैश्वानर उक्तस्य ) वैश्वानरविषयत्वेनोक्तस्येत्यर्थः । ( अपर आहेति ) पृथक्फलनिर्देशात्--

* भावप्रकाशिका *

समस्तोपासनं सिद्धमित्यर्थः ( किमवयवभूतमिति ) किंरूपावयवभूतमित्यर्थः, ( एतमात्मानं वैश्वानरमुपासस्त इत्यादिष्वित्यर्थ इति ) 'एष वै सुतेजा आत्मा वैश्वानरः' इत्यादिना तेषु तेषूपासनेषूपास्यस्य वैश्वानरत्वञ्चाहेति भाष्ये स्फुटान्वये प्रतीयमाने एवं व्याख्यानमयुक्तमिति मन्यमाना इमं ग्रन्थं लेखकप्रक्षिप्तं वर्णयन्ति, एवं श्रुतिः 'औपमन्यव कं त्वमात्मानमुपास्से' इति 'दिवमेव भगवो राजन्निति होवाच एष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से अत्त्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यसि प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एवमेतमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्यः' इति, अत्र च अत्त्यन्नमित्यादिरुत्तरसन्दर्भो व्यस्तोपासने तत्फले च प्रमाणीकर्तुं योग्यः 'एष वै सुतेजा' इत्यादिपूर्वसन्दर्भस्तु उपास्यस्य वैश्वानरत्वे प्रमाणीकर्तुमुचितः, अतोऽयं ग्रन्थः प्रक्षिप्त इत्येव युक्त इति । केचित्तु-मूर्धादिषु

यथा भूमविद्योपक्रमे नामाद्युपासनं तत्फलं चाभिधाय "एष तु वा अतिवदिति यः सत्येनातिवदति" इत्यादिना भूमविद्यामुपदिश्य "स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति" इति तत्फलं च

* श्रुतप्रकाशिका *

व्यस्तोपासनफलात पृथक्फलनिर्देशाद्वाक्यभेदः, महावाक्यभेदः, अनेकार्थप्रतिपादने सत्यपि वाक्यैकत्वे दृष्टान्तमाह ( यथा भूमेति ) समस्तोपासनं प्रधानप्रतिपाद्यं व्यस्तोपासनं प्रासङ्गिकमिति न विरोध इति भावः ।

* भावप्रकाशिका *

व्यस्तेषूपासनं तत्र फलञ्च उक्तवान् 'अत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एवमेतमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन' इत्येतावत्येव न वाक्यं परिसमाप्तं 'मूर्धा त्वेष आत्मनः' इत्यस्य मूर्धरूपव्यस्तोपासनमात्रप्रमाणत्वेन मूर्धादिव्यस्तोपासने प्रमाणत्वाभावात्, अत 'एष वै सुतेजा आत्मा वैश्वानरः' इत्यस्य फलञ्चोक्तवानिति पूर्वेणान्वयो वक्तव्यः, नतु वैश्वानरञ्चाहेत्युत्तरेण, तमिमंमर्थमभिप्रेत्य 'एतमात्मानं वैश्वानरमुपास्ते' इत्यादिष्वित्यर्थ इत्युक्तम्– इति वर्णयन्ति, भाष्ये– द्युप्रभृतिप्रदेशावच्छिन्नमात्र इति, द्युप्रभृतिप्रदेशसम्बन्धिनी प्रादेशिकी मात्रा यस्य स प्रादेशमात्र इति श्रुत्यर्थ इति भावः ( व्यस्तोपासनफलात् पृथक्फलनिर्देशादिति ) नच 'यस्त्वेतमेवं प्रादेशमात्र' मित्येद्व्यस्तोपासनसमुदायानुवाद इत्युक्तमिति वाच्यम्, व्यस्तोपासनेषु फलोक्तेरेवावयुत्यानुवादत्वमित्यपि सुवचत्वेन विनिगमनाविरहात् उभयोपासनमपि विधीयत इत्येवाभ्युपगमनीयमिति भावः ( समस्तोपासनं प्रधानप्रतिपाद्यमिति ) यथा भूमविद्यायां सत्यशब्दोक्तस्य ब्रह्मणः सर्वतो भूयस्त्वप्रतिपादनार्थं तदवधित्वेनोपास्यमानेषु नामादिप्राणान्तेष्विव सर्वशरीरकस्य वैश्वानरस्य प्रतिपादनार्थं तदवयवत्वेनोपन्यस्यमानेषु स्वर्लोकादिषु प्रासङ्गिकोपासनतत्फलाभिधानस्य महावाक्यैक्याविरोधित्वादिति भावः, नच भूमविद्यायां नामाद्युपासनानामश्रुता निन्दा, इह तु व्यस्तोपासनानां निन्दा श्रू-

व्यपदिशति। तत्र भूमविद्यापरत्वेऽपि वाक्यस्य नामाद्यवान्तरोपासनं तत्फलं चाङ्गीक्रियते; तथेहापीति।

एवं प्राप्तेऽभिधीयते—भूम्नः ज्यायस्त्वमिति। भूम्नो विपुलस्य समस्तस्यैव, ज्यायस्त्वं—प्रामाणिकत्वमित्यर्थः, एकवाक्यत्वावगतेः। तथा हि "प्राचीनशाल औपमन्यवः" इत्युपक्रम्य "उद्दालको ह वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम:" इति वैश्वानरात्मबुभुत्सयौपमन्यवादयः पञ्च महर्षयः तमुद्दालकमुपेत्य तत्र वैश्वानरात्मवेदनमलभमानास्तेन च सहाश्वपतिं केकयं वैश्वानरात्मवेदिनमुपसङ्गम्य "आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि" इति पृष्ट्वा तत्सकाशात्परमात्मानं वैश्वानरं स्वर्लोकादिपृथिव्यन्तशरीरमुपास्यमवगम्य तत्फलं च सर्वलोकसर्वभूतसर्वात्मान्नभूतब्रह्मानुभवमवगतवन्त इत्युपसंहारतो वाक्यस्यैकत्वमवगम्यते। एवमेकवाक्यत्वेऽवगते सत्यवयवविशेषेषूपास्तिवचनं फलनिर्देशश्च समस्तोपासनैकदेशानुवादमात्रमिति निश्चीयते। क्रतुवत्— यथा

* श्रुतप्रकाशिका *

( एवं प्राप्त इति ) भूमशब्दो धर्मिपरः, वैश्वानरात्मजिज्ञासून् प्रति द्युपृथिव्याद्यवयवविशिष्टविषयोपासनतत्फलोपदेशादेकवाक्यत्वमवगतम्। ( अनुवादमात्रमिति ) समुदायोपासनतत्फले विहिते— तदन्तर्गततदेकदेशोपासनतदेकदेशफलकथनमनुवाद इत्यर्थः। समस्तोपासनफले सर्वदेशसर्वकालवर्तिसमस्तभोग्य-

"वैश्वानरं द्वादशकपालं निर्वपेत पुत्रे जाते" इति विहितस्यैव क्रतोरेकदेशाः "यदष्टाकपालो भवति" इत्यादिभिरनूद्यन्ते ; तथा समस्तोपासनमेव न्याय्यं न व्यस्तोपासनम् । तथा हि दर्शयतीयं श्रुतिः व्यस्तोपासनेऽनर्थं ब्रुवती "मूर्द्धा ते व्यपतिष्यद्यन्मां नागमिष्यः" इति "अन्धोऽभविष्यो यन्मां नागमिष्यः" इत्यादिका । अत इदमप्यपास्तम्, यन्नामाद्युपासनसाम्यमुक्तम्, तत्र हि नामाद्युपासनेष्वनर्थो न श्रुतः, नामाद्युपासनेभ्यो भूमोपासनस्यातिशयितफलत्वं श्रुतम् "एष तु वा अतिवदति यः स-

---

* श्रुतप्रकाशिका *

जातं ह्यन्तर्गतमिति दर्शयितुं फलैकदेशानुवादः कृतः, न तु तथाऽनुष्ठेयमिति ज्ञापयितुम्, इतरथा वाक्यभेदात्, व्यस्तोपासने प्रत्यवायकथनाच्च यथोक्त एवार्थः । ( अत इदमपीत्यादि ) अनर्थाश्रवणमेकं वैषम्यमित्यर्थः । वैषम्यान्तरमाह ( नामाद्युपासनेभ्य इति ) नामाद्युपासनानां भूमविद्योपयोगित्वमस्ति, आ-

❀ भावप्रकाशिका ❀

यते, सा चोदिता अनुदितहोमनिन्दान्यायेन प्रक्रान्तविषयत्यागविषयतया योजयितुं न शक्यते, समस्तोपासनामविज्ञाय व्यस्तोपासना एव कृतवतः प्राचीनशालादीन्प्रति तन्निन्दाश्रवणादिति वाच्यम्, तथापि नहिनिन्दान्यायेन योजयितुं शक्यत्वात्, नह्यत्र उदितानुदितहोमयोरिव व्यस्तोपासनेषु प्रायश्चित्तश्रवणमस्ति, येन प्रक्रान्तविषयत्यागविषयतायोजनपर्यन्तमपेक्ष्येत, नहिनिन्दान्यायेन विधेयप्रशंसापरत्वात् निन्दया व्यस्तोपासननिषेधोन्नयनेपि 'न चतुस्त्रिंशदिति ब्रूयात्' इत्यत्र निषेधेनेव विध्युन्नयनमवर्जनीयम्, निषेधस्य रागप्राप्तविषयत्वाभावात्, तस्मात् समस्तोपासनवत् व्यस्तोपासनान्यपि नामाद्युपासनवत् विधेयानीति भावः ( अनर्थाश्रवणमेकं वैषम्यमित्यर्थ इति ) नन्वनर्थवचनं नहिनिन्दान्यायेन

त्येनातिवदति" इति । तत एव तत्र भूमविद्या-परत्वेऽपि वाक्यस्य नामाद्युपासनानां सफलानां विवक्षितत्वम्, अन्यथाऽतिशयितफलत्वनिमित्ताति-

---

* श्रुतप्रकाशिका *

शयस्य प्रतियोगित्वेनापेक्षितत्वात् । अतिशयितफलश्रवणमस्तु ततः किमित्यत्राह (तत एवेति) विवक्षितत्वमुपपादयति (अन्यथेति) एवमर्थान्तराणां प्रधानार्थोपयोगित्वान्न वाक्यभेदो भूमविद्यायाम्, अत्र तूपासनानामन्योन्योपयोगित्वाभावाद्वाक्यभेदस्तिष्ठत्येवेत्यर्थः । अत इत्यधिकरणार्थोपसंहारः, ज्यायस्त्वशब्दश्रवणात् व्यस्तोपासनपक्षेऽपि सूत्रकाराभिमत इति चेन्न, वाक्यभेदादि-

छ भावप्रकाशिका छ

समस्तोपासनस्तुत्यर्थतयोपपन्नम्, न निषेधानुमापकम्, तथात्वेऽपि लोकतो प्राप्तानां व्यस्तोपासनानां निषेधः तेषु विधेः साधक एव न बाधक इत्युक्तमिति चेन्नैवम्, अग्निहोत्रं प्रकृत्य श्रुतेन 'जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा जुहुयात्, गवीधुकयवाग्वा जुहुयात् न ग्राम्यान्पशून्हिनस्ति नारण्यान्' इति वाक्येन जर्तिलगवीधुकशब्दवाच्यारण्यतिलारण्यगोधूमकृतयवाग्वोर्विकल्पेनाग्निहोत्राहुतौ द्रव्यत्वविधाने लिङ्विभक्तिबलेन ग्राम्यारण्यपशुहिंसारहिततया तयोः स्तवने च प्रतीयमानेपि 'अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च पयसाग्निहोत्रं जुहुयात्' इति, तदनन्तरं जर्तिलादिप्रतिक्षेपेण पयोविधिदर्शनात्, तदेकवाक्यतया 'जर्तिलयवाग्वा वा जुहुया'दित्यादेर्ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्ततया होमार्हा अपि जर्तिला गवीधुकाश्च यदपेक्षया दुष्टास्तत्पयोऽत्यन्तप्रशस्तमिति पयस्स्तुत्यर्थत्वम् एकवाक्यतानुरोधादिति, 'नचेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यात् आनर्थक्यात् परसामर्थ्याच्च' इति पूर्वतन्त्राधिकरणे किंचिद्विधिपूर्वकनिन्दायाः सह विधिना विध्यन्तरश्रवणे सति तदर्थवादत्वं तदेकवाक्यतानुरोधात् समर्थितम्, एवमिहाप्यङ्गीकर्तुं युक्तम्, ननु जर्तिलगवीधुकयोः पयसा सह सम्बन्धाभावात् जर्तिलगवीधुकयवागूविधानयोः पयोविध्येकवाक्यतार्थवादतयैव समर्थनीयमिति तत्र तथास्तु नाम, इह तु भूमविद्यायां

वादेन भूमविद्यास्तुत्यनुपपत्तेः । अतः समस्तोपासनमेव न्याय्यम् ॥ ५५ ॥

भूमज्यायस्त्वाधिकरणं समाप्तम् ॥



* श्रुतप्रकाशिका *

प्रसङ्गात्, ज्यायस्त्वशब्दस्तु प्रामाणिकत्वाभिप्रायेणाप्युपपन्नः । क्रतुवदिति— दर्शपूर्णमासप्रभृतिषु सामस्त्येन साङ्गस्य प्रधानस्यैकस्य विवक्षितत्ववदिति परे व्याचक्षते, ततोऽपि भाष्योक्तदृष्टान्त एवोचितः, सादृश्यप्रकर्षात्, क्रतोरङ्गोपचयात् फलोपचयवदित्यन्ये, ते व्यस्तोपासनस्य सूत्रानुमतिमपि मन्यन्ते, तदयुक्तम्— ज्यायस्त्वशब्दस्यान्यथासिद्धेः पूर्वोक्तत्वात्, एकैकोपासननिन्दाया इतरप्रशंसार्थत्वाभिप्रायकल्पने गौरवात्तस्य च गतिशून्यत्वाभावेऽनुपपत्तेः ॥ ५५ ॥

भूमज्यायस्त्वाधिकरणं समाप्तम् ॥

छ भावप्रकाशिका छ

नामादीनां सत्येन ब्रह्मणा सह भूयस्त्वावधितयैव द्रव्यादीनां समस्तोपासनाविषयेण वैश्वानरात्मना सहावयवत्वेन सम्बन्धोऽस्तीति प्रासङ्गिकतदुपासनाविधानैरेकवाक्यत्वभङ्गोऽस्ति, अतो भूमविद्यान्याय एवात्र प्रवर्तितः, ननु जर्तिलगवीधुकयवागून्याय इति चेत्—मैवम्, व्यस्तोपासननिन्दनेन 'मूर्धा त्वेष आत्मन इति होवाच' इत्यादिवाक्येषु तुशब्दकृतेन द्युद्यादीनां स्वतन्त्रोपास्यत्वव्यवच्छेदेन 'तान्होवाच एते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ' इति व्यस्तोपासनानां भ्रममूलत्वोद्घाटनेन भूमविद्यावैषम्यस्य बहुविधस्य सत्त्वेन जर्तिलयवागून्यायस्यैव प्रवृत्त्यौचित्यादिति, (प्रामाणिकत्वाभिप्रायेणाऽप्युपपन्न इति) ज्यायस्त्वम्—प्राचीनत्वम् 'वृद्धस्य च' इति सूत्रेण वृद्धशब्दस्यापि ज्यादेशविधानात्, तच्च प्रामाणिकत्वपर्यवसायी, प्रामाणिकत्वं प्रायोऽनादिसिद्धं भवति, भ्रान्तिकल्पितं तु पूर्वपक्षिणोऽपेक्षितमित्यद्यतनं भवतीति भावः (भाष्योक्तदृष्टान्त एवोचित इति) ॥ छ ॥

इति भूमज्यायस्त्वाधिकरणम् ॥

## नाना शब्दादिभेदात् ॥ ५६ ॥

२४ अधिकरणम्

इह ब्रह्मविद्याः सर्वा ब्रह्मप्राप्तिरूपमोक्षैकफलाः; सद्विद्याभूमविद्यादहरविद्योपकोसलविद्याशाण्डिल्यविद्या—वैश्वानरविद्याऽऽनन्दमयविद्याऽक्षरविद्यादिकाः एकशाखागताः शाखान्तरगताश्चोदाहरणम्। अन्याः प्राणाद्येकविषयफलाश्च। किमत्र विद्यैक्यमुत विद्याभेदः? इति संशय्यते। अत्रैवासां परस्परभेदे समर्थिते सत्येकस्या दहरविद्या-

---

* श्रुतप्रकाशिका *

नानाशब्दादिभेदात् ॥ ५६ पूर्वं विद्याविशेषविषयचिन्ता कृता, इदानीं सर्वविद्याविषयचिन्ता क्रियत इति सङ्गतिः। (अक्षरविद्यादिका इति) आदिशब्देन न्यासो विवक्षितः, सूत्रेऽपि शब्दादिभेदसद्भावात् उदाहरणं विषय इत्यर्थः। किं सर्वासां परविद्यानामैक्यम्? उत भेदः? किं सर्वासां ब्रह्मकर्मकत्वमुक्तिफलकत्वाविशेषादैक्यं न्याय्यम्, किं विद्यानां तत्तद्गुणविशेषविशिष्टतया श्रुतानां तावता निराकाङ्क्षत्वात् भेदो न्यायः, प्रथमे विद्यैक्यम्, द्वितीये विद्याभेदः। पौनरुक्त्यशङ्कां परिहरति (अत्रैवासामित्यादिना) अविशेषपुनश्श्रवणस्य प्रकरणभेदस्य च विद्याभेदहेतुत्वे सिद्धे सति हि विद्याविशेषाणां भेदाभेदविचारावतारः, तस्मात्तत्रेदमर्थमुपजीव्य पूर्वं वेदान्तप्रत्ययन्यायोऽवतारितः,

* भावप्रकाशिका *

भाष्ये— अन्याः प्राणाद्येकविषयफला इति, प्राणाद्येकविषया एकफला विद्या अप्युदाहरणमित्यर्थः (पौनरुक्त्यशङ्कां परिहरतीति) 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' इत्यत्राभ्यासप्रकरणान्तराभ्यां भेदहेतुभ्यां भेदं पूर्वपक्षीकृत्य चोदनाद्यविशेषेण सिद्धान्तः क्रियते, यद्यभ्यासप्रकरणान्तरयोर्भेदहेतुत्वमसिद्धं स्यात्, तदा पूर्वपक्ष एवानुपपन्नः स्यात्, सिद्धान्तश्च ततस्तराम्, ततस्तयोर्भेदहेतुत्वं तत्रैव समर्थितमिति पौनरुक्त्यशङ्का भवतीति भावः। एवं वदत

दिकायाः सर्ववेदान्तप्रत्ययन्यायः । किं युक्तम् ? विद्यैक्यमिति । कुतः ? वेद्यस्य ब्रह्मण एकत्वात् । वेद्यं हि विद्याया रूपम् । अतो रूपैक्याद्विद्यैक्यमिति ।

एवं प्राप्तेऽभिधीयते– नाना– इति । नानाभूताः विद्याः ; कुतः ? शब्दादिभेदात् । आदिशब्देनाभ्याससंख्यागुणप्रक्रियानामधेयानि गृह्यन्ते । शब्दान्तरादिभिरत्र विधेयभेदहेतवोऽनुबन्धभेदा दृश्यन्ते । यद्यपि वेदोपासीतेत्यादयः शब्दाः प्रत्ययावृत्य-

---

* श्रुतप्रकाशिका *

तदपेक्षितः परस्परभेदोऽत्र निरूप्यत इत्यर्थः । अविशेषपुनःश्रवणस्य प्रकरणभेदस्य च भेदहेतुत्वे कर्मकाण्डसिद्धेऽपीह तदुपपादनमविधेयभूतवाक्यार्थज्ञानमात्रोपायत्वनिरासार्थमितीदं स्वयमेव वक्ष्यति, ( किं युक्तमिति ) रूपैक्यं फलैक्यं च पूर्वपक्षहेतुः ।

( एवं प्राप्त इति ) विधेयम्– साङ्गं प्रधानं कर्म, अनुबन्धाः–तदेकदेशधात्वर्थादयः, शब्दादयोऽनुबन्धभेदहेतुत्वेन प्रधानविधेयहेतव इत्यर्थः । ( यद्यपीत्यादि ) विषयैक्येऽपि धात्वर्थभेदाद्रूपभेदो माभूदिति प्रत्ययावृत्त्यभिधायिन इत्युक्तम् , यजति ददाति जुहोति इत्यादयो भिन्नार्थतयैव लोके व्युत्पन्नाः, अतः

* भावप्रकाशिका *

आचार्यस्यात्रैवासां परस्परभेदे समर्थिते सतीति भाष्यस्याभ्यासप्रकरणान्तरयोर्भेदहेतुत्वे समर्थिते सतीत्यर्थ इति हृदयम् , ( साङ्गं प्रधानं कर्मेति ) प्रयोगापरपर्याया धात्वर्थकरणिका भावनेत्यर्थः , साङ्गप्रधानानुष्ठानमिति यावत् , शब्दान्तरादिभिर्यागदानादिलक्षणधात्वर्थात्मकानुबन्धभेदसिद्धिः, धात्वर्थभेदानुनिष्पादी च भावनाभेद इति मीमांसकप्रक्रिया, ( तदेकदेशा धात्वर्थादय इति ) धात्वर्थस्य यागादेः साङ्गप्रधानानुष्ठानविषयत्वेन एकदेशत्वोक्तिरिति द्रष्टव्यम् । ( विधेयभेदहेतव इत्यर्थ इति ) शब्दान्तराद्यवगमितधात्वर्थभेदानुनिष्पादी भावनाभेद इत्यर्थः । ( रूपभेदो मा भूदिति ) रूप्यत इति रूपं भावना,

भिधायिनः, प्रत्ययाश्च ब्रह्मैकविषयाः, तथाऽपि तत्तत्प्रकरणोदितजगदेककारणत्वापहतपाप्मत्वादिविशेषणविशिष्टब्रह्मविषयप्रत्ययावृत्त्यवबोधिनः प्रत्ययावृत्तिरूपा विद्या भिन्दन्ति । ब्रह्मप्राप्तिरूपफलसम्बन्ध्युपासनविशेषाभिधायीनि च निराकाङ्क्षाणि वाक्यानि प्रतिप्रकरणं विलक्षणविद्याभिधायीनीति

---

* श्रुतप्रकाशिका *

शास्त्रेऽपि ते स्वार्थभूतानुबन्धभेदज्ञापका उपासनध्यानादिशब्दा एकार्थतयैव व्युत्पन्नाः, वेदनोपासनादिशब्दाश्च सामान्यविशेषभावेनैकार्थविषयाः । तत्कथमनुबन्धभेदज्ञापकत्वमित्यर्थः । ( तथाऽपीति ) 'अर्थेनैव विशेषो हि निराकारतया धिया' मित्यभिप्रायः, नन्वेवं सति रूपभेदात्को विशेषः ? उच्यते, यागदानहोमेषु द्रव्यग्रहणे समानेऽपि देवतोद्देशपरस्वत्वापादनदेशविशेषविशिष्टप्रहाणगोचरतया यजत्यादिशब्दानां भिन्नार्थत्ववत् तत्तद्रूपविशेषविशिष्टप्रत्ययावृत्त्यवबोधित्वमुपासनादिशब्दानां तत्तत्प्रकरणावगतानाम्, तत्रैकैकविद्याश्रवणवेलायां तेषामुपासनादिशब्दानां विलक्षणप्रत्ययावृत्तिबोधकत्वावगमोऽप्युत्पत्तिस्थानीयः,

* भावप्रकाशिका *

भावनाभेदो मा भूदित्यर्थः ( वेदनोपासनादिशब्दाश्चेति ) विद्युपास्योर्व्यतिकरेण उपक्रमोपसंहारदर्शनादिति भावः ( रूपभेदात्को विशेष इति ) यद्यपि न्यासविद्यायां शब्दान्तरं भेदकम्, उपासनेषु रूपभेदो नियामक इति सिद्धावपि न दोषः, तथाप्युपासनेऽपि शब्दान्तरस्यापि भेदकत्वं वक्तव्यमित्यभिप्रेत्य तथोक्तमिति द्रष्टव्यम् ( देवतोद्देशेति ) देवतोद्देशेन द्रव्यत्यागो यागः, देशविशेषप्रक्षेपविशिष्टस्त्यागो होमः, परस्वत्वापादनपर्यन्तस्त्यागो दानमिति पूर्वतन्त्रे चतुर्थे जैमिनिना प्रतिपादितत्वादिति भावः, ( देशविशेषविशिष्टप्रहाणगोचरतयेति ) देशविशेषविशिष्टप्रक्षेपविशिष्टप्रहाणगोचरतयेत्यर्थः, तर्हि यजत्यादितुल्यत्वे मुख्यशब्दान्तरत्वमेव स्यादित्यत आह ( ( तत्रैकैकविद्याश्रवणवेलायामिति ) यजत्यादिशब्दानां व्युत्पत्तिदशायामेव भिन्नार्थत्वावगमः, उपा-

निश्चीयते । अस्मिन्नर्थे "शब्दान्तरे कर्मभेदः" इत्यादिभिः पूर्वकाण्डोदितैः सूत्रैस्सिद्धेऽपि पुनरिह प्रतिपादनं वेदान्तवाक्यान्यविधेयज्ञानपराणीति कुदृष्टिनिरसनाय । अतो विद्याभेद इति स्थितम् ॥ ५६ ॥

शब्दादिभेदाधिकरणं समाप्तम् ॥



* श्रुतप्रकाशिका *

पश्चात्तासां विद्यानां भेदाभेदबुभुत्सायां विलक्षणार्थतया बुद्धिस्था उपासनादिशब्दाः शब्दान्तरस्थानीया इति तथोक्तिरुपचारात्, एवं स्वरूपभेदश्चोक्तो भवति, ब्रह्मेति प्रकरणभेद उक्तः । अत्रैतदर्थप्रतिपादनस्य प्रयोजनमाह (अस्मिन्निति) (अविधेयज्ञानपराणीति) अत्र निर्विशेषविषयज्ञानपरत्वमपि निरसनीयमनुसन्धेयम्, बह्वधिकरणेषु बहुभिः सूत्रैर्विस्तरेणोक्तार्थस्य सङ्क्षेपेण स्मारणं कुदृष्टिनिरसनं च प्रयोजनम् ।

अन्ये तु 'आत्मानं विद्या'दिति वेदनस्य द्रव्यनिष्ठत्वाद्वैशद्येन विनाऽतिशयान्तरासम्भवेन प्रोक्षणावघातादीनामिवावान्तरकार्यभेदाभावेन कर्मभेदाभावात्, आत्मनश्चैकत्वाद्विद्यैकत्वमित्युक्त्वा आत्मनः कार्यान्तरासम्भवेन सक्तुवदात्मना विद्यादिति विपरिणामस्य न्याय्यत्वात्, भावार्थप्राधान्ये सति साध्यानामपूर्वाणां भेदेन भिन्नानुबन्धानां श्रवणादिप्रत्ययानां भेदोपपत्तेर्विद्याभेदः— इति वदन्ति, उपासीत—श्रोतव्यो— मन्तव्यः—

* भावप्रकाशिका *

सनादिशब्दानान्तु न व्युत्पत्तिदशायां भिन्नार्थत्वावगमः, अपि तु पश्चादिति भावः (ब्रह्मेति प्रकरणभेद उक्त इति) ब्रह्मप्राप्तिरूपफलसम्बन्धिनीति वाक्येनेत्यर्थः (कुदृष्टिनिरसनञ्चेति) शब्दान्तरादीनि हि उत्पत्तिपरतां विधेः बोधयन्ति सन्त्युत्पन्नस्य पुनरुत्पत्त्ययोगात् कर्म भिन्दन्ति, अतश्शब्दान्तरादिभिर्भेदसाधने सिद्धं विधेयत्वमिति भावः । (बह्वधिकरणेष्विति) पूर्वतन्त्र इति शेषः, (वेदनस्य द्रव्यनिष्ठत्वादिति) द्रव्यशेषत्वादित्यर्थः (प्रोक्षणावघातादीनामिवेति) उत्पत्त्याप्तिविकृतिसंस्कृतिकरणोपकारकरणावान्तरव्यापाराभिकारा-

विकल्पोऽविशिष्टफलत्वात् ॥ ५७ ॥

२५ अधिकरणम्

ब्रह्मप्राप्तिफलानां सद्विद्यादहरविद्यादीनां नानात्वमुक्तम्; इदानीमासां विद्यानामेकस्मिन् पुरुषे प्रयोजनवत्त्वेन समुच्चयोऽपि सम्भवति, उत प्रयोजनाभावाद्विकल्प एवेति विशये किं युक्तम्, समुच्चयोऽपि सम्भवतीति । कुतः? एकफलानां भिन्नशास्त्रार्थानामपि समुच्चयदर्शनात् । दृश्यते ह्येकस्यैव स्वर्गादेः साधनानामग्निहोत्रदर्शपूर्णमासादीनां तस्यैव स्वर्गस्य भूयस्त्वापेक्षयैकत्र पुरुषे समुच्चयः; एवमिहापि ब्रह्मानुभवभूयस्त्वापेक्षया समुच्चयोऽपि सम्भवतीति ॥

---

* श्रुतप्रकाशिका *

इति शब्दभेदादिति सूत्रं च योजयन्ति, तदयुक्तम्, रागप्राप्ततयाऽनूदितयोः श्रवणमननयोर्विधेयेन ध्यानेनैक्यशङ्कानुदयात्, अत एव सिद्धान्ते साध्यापूर्वभेदाङ्गीकारेण भेदसमर्थनं चायुक्तम्, तेषां विधेयत्वेऽपि नैक्यशङ्का श्रवणादिस्वरूपभेदस्य लोकसिद्धत्वात्, अज्ञातप्रतीतिश्रुतार्थप्रतिष्ठापनवैशद्यरूपकार्यभेदस्य प्रसिद्धत्वाच्च ॥ ५६ ॥

शब्दादिभेदाधिकरणं समाप्तम् ॥

विकल्पोऽविशिष्टफलत्वात् ॥ ५७ ॥ अस्मिन्नधिकरणे न्यासविद्याऽभिप्रेता । सङ्गतिमाह (ब्रह्मप्राप्तीति) भेदे सिद्धे हि समुच्चयविकल्पनिरूपणं युक्तमिति

७ भावप्रकाशिका ७

पूर्वरूपसप्तविधसाध्यभेदादनुबन्धभेदाच्च शास्त्रभेद इति गुरुमर्यादा, प्रकृते च अस्याप्यभावात् श्रवणमनननिदिध्यासनानामन्योन्यं निदिध्यासनेष्वपि न परस्परं भेद इतिपूर्वपक्षाभिप्रायः (अत एवेति) पूर्वपक्षावकाशाभावादित्यर्थः ॥ ७ ॥

इति शब्दादिभेदाधिकरणम् ॥

(न्यासविद्याऽभिप्रेतेति) न्यासविद्याप्यभिप्रेतेत्यर्थः ॥ ७ ॥

एवं प्राप्ते प्रचक्ष्महे—विकल्प एव ; न समुच्चयः सम्भवतीति । कुतः ? अविशिष्टफलत्वात्– सर्वासां हि ब्रह्मविद्यानामनवधिकातिशयानन्दब्रह्मानुभवः फलमविशिष्टं श्रूयते "ब्रह्मविदाप्नोति परम्" "स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य" "यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इत्यादिभ्यः । ब्रह्म हि स्वस्य परस्य च स्वयमनुभूयमानमनवधिकातिशयानन्दं भवति । स च तादृशो ब्रह्मानुभव एकया विद्ययाऽवाप्यते चेत्किमन्ययेति न समुच्चयसम्भवः । स्वर्गादेर्हि देशतः कालतः स्वरूपतश्च परिमितत्वेन तत्र देशाद्यपेक्षया भूयस्त्वसम्भवात्तदर्थिनः समुच्चयः सम्भवति ; इह तु तद्विपरीतस्वरूपे ब्रह्मणि तन्न सम्भवति । सर्वाश्च विद्या ब्रह्मानुभवविरोध्यनादिकर्माविद्यानिरसनमुखेन ब्रह्मप्राप्तिफला इत्यविशिष्टफलत्वात्सर्वासां विकल्प एव ॥ ५७ ॥

---

* श्रुतप्रकाशिका *

भावः । किं सर्वासां समुच्चयः ? उत विकल्पः ? किं ब्रह्मप्राप्तिरेकरूपा ? उत स्वर्गप्राप्तिवद्विलक्षणेति , वैलक्षण्ये तदपेक्षया समुच्चयः, एकरूप्ये विकल्पः ।

राद्धान्ते ( परमं साम्यमुपैतीति ) अनवधिकातिशयानन्दं ब्रह्म स्वसदृशानन्दं ददाति , ततोऽधिकानन्दस्याभावान्न भूयस्तदपेक्षासम्भव इति भावः । ब्रह्मानन्दस्य फलत्वं दर्शयति ( ब्रह्म हीति ) काश्चिद्विद्या विरोधिनिरसनोपक्षीणाः

ब्रह्मप्राप्तिव्यतिरिक्तफलास्तु विद्याः स्वर्गादिफलकर्मवद्यथेष्टं विकल्पेरन्, समुच्चीयेरन् वा, तासां परिमितफलत्वेन भूयस्त्वापेक्षासम्भवात्, तदाह—

**काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ५८ ॥**

अपरिमितफलत्वाभावादित्यर्थः ॥ ५८ ॥

विकल्पाधिकरणं समाप्तम् ॥



* श्रुतप्रकाशिका *

काश्चिद्ब्रह्मप्राप्तिफलाः, अतः समुच्चयसम्भव इत्यत्राह ( सर्वाश्च विद्या इति ) ॥५७॥

अनेन सूत्रेण सङ्गतमुत्तरसूत्रार्थं सङ्क्षेपेणाह ( ब्रह्मप्राप्तिव्यतिरिक्तफलास्त्विति )।

काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ५८ ॥ अत्र व्याख्येयं परमपदं व्याचष्टे ( अपरिमितेति ) समुच्चीयेरन्न वेत्युक्तेऽपि समुच्चयविकल्पयोः किं नियामकमित्यपेक्षायामिच्छा नियामिका स्यादिति यथाकाममिति पदस्यार्थः ॥

विद्यानामेकरूपं फलं समाधौ साक्षात्करणमिति परे, तदयुक्तम्— समाधौ साक्षात्कारस्य विद्याशरीरान्तर्भावात्, तस्य च फलभावेऽपि तत्तद्गुणविशेषविशिष्टविषयतया भिन्नरूपत्वाच्च विकल्पानुपपत्तेः, साक्षात्कारस्यैकरूपत्वेऽपि बन्धनिवृत्त्यनन्तरभाविब्रह्मानुभववैषम्यशङ्कानिरासेन विना समुच्चयनिरासायोगाच्च बन्धनिवृत्तिपूर्वकब्रह्मानुभवफलैक्यरूप्यं वक्तव्यम्।— अन्ये तु सम्भूत्युपासनाविषयं विचारमाहुः, तदयुक्तम्— सम्भूतिविनाशविभागविभक्तोपासनसमुच्चयस्याप्रामाणिकत्वोपपादनात्, ते च 'ये चेमेऽरण्ये' इत्यत्र देवयानपथस्य फलत्वेनोपादानादेकाधिकारपरिगृहीतत्वा

* भावप्रकाशिका *

( समुच्चयनिरासायोगाच्चेति ) ब्रह्मानुभवविशेषहेतुसाक्षात्कारार्थतया समुच्चयशङ्का तादवस्थ्यादिति भावः ( ये चेमेऽरण्ये इत्यत्रेति ) 'तद्य इत्थं विदुर्ये चेमेऽरण्ये' इति

* श्रुतप्रकाशिका *

दाग्नेयादीनामिव समुच्चय इति पूर्वपक्षं कृत्वा आग्नेयादीनामिव प्रकरणैक्याधिकारवाक्यैक्याभावादिभिः प्रतिप्रकरणं निराकाङ्क्षाणां विद्यानां मिथः सम्बन्धानुपपत्तेः, 'ये चेमे' इत्यादिवाक्यस्य गतिविधिपरत्वेन ब्रह्मप्राप्तेरनूद्यमानतया अधिकारवाक्यत्वाभावादेकस्मिन् दोषे विहितप्रायश्चित्तानामिव विकल्प इत्याहुः, तदयुक्तम्, अथ 'ये इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ती'ति पितृयाणपथस्य फलत्वेनोपादानेऽपि प्रत्येकं फलसाधनत्वेन विहितानामिष्टापूर्तदत्तादीनामिव विद्यादीनामपि समुच्चित्यैकफलसाधनत्वशङ्कानुत्थानादधिकारवाक्यभेदादिभिः प्रत्येकमेकरूपफलसाधनत्वे सिद्धान्तदृष्ट्या दर्शितेऽपि फलातिशयसम्भवानया ज्योतिष्टोमदर्शपौर्णमासविश्वजिदादीनामिव समुच्चयशङ्काया दुर्निवारत्वाच्च, अतः सैवाविशिष्टफलत्वेन निराकार्या, समुच्चित्य साधनत्वे पूर्वपक्षिते प्रत्येकं निरपेक्षसाधनत्वं सिद्धान्तिनः साध्यं स्यात्, तत्र चाविशिष्टफलत्वादिति हेतुर्न घटते— साध्याविशिष्टत्वात्, अविशिष्टं फलं प्रति निरपेक्षसाधनत्वं हि साध्यम्, तद्धेतवोऽभिप्रेता इति चेत्— अनपेक्षितकण्ठोक्तिरपेक्षितस्यावचनं सूत्रास्वारस्यं च स्यात्, अतो यथाभाष्यमेवार्थः ।— इतरे सर्वे 'काम्या'स्त्विति सूत्रमधिकरणान्तरमाहुः, तदयुक्तम्, अविशिष्टफलत्वाभावस्य स्फुटत्वात्, सूत्रप्रयोजनन्तु विद्यात्वसामान्यप्रसक्तविकल्पनिवारणम्, काम्यासु विद्यासु सूत्रस्वारस्येन सामान्यतो निरूपितास्वपि मुमुक्षोश्च भवति प्रयोजनं विद्याङ्गक्रतुसमृद्ध्यर्थानामुद्गीथाद्युपासनानां क्रतुफलप्रतिबन्धककर्मलाघवभूयस्त्वाद्यानुगुण्येन विकल्पसमुच्चयाद्याश्रयणम् ॥ ५८ ॥

विकल्पाधिकरणं समाप्तम् ।

* भावप्रकाशिका *

सर्वब्रह्मविद्यानां ब्रह्मप्राप्तिफलकत्वश्रवणेन पराणामाग्नेयादीनां समुच्चित्य स्वर्गसाधनत्ववत् इहापि वक्तव्यमिति भावः (सैवाविशिष्टफलत्वेन निराकार्येति) फलातिशयसम्भावनैवाविशिष्टफलत्वादिति सूत्रखण्डेन निरसनीयेत्यर्थः ॥ * ॥

इति विकल्पाधिकरणम् ।

## अङ्गेषु यथाश्रयभावः ॥ ५६ ॥

६ अधिकरणम्

उद्गीथादिक्रत्वङ्गेष्वाश्रिताः "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यादिका विद्याः किमुद्गीथादिवत् क्रत्वर्थतया क्रतुषु नियमेनोपादेयाः? उत गोदोहनादिवत्पुरुषार्थतया यथाकाममिति विशये नियमेनोपादेया इति युक्तम् । ननु चासां पुरुषार्थत्वेनानियमः प्रतिपादितः "तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम्" इत्यत्र । सत्यम् , तदेव द्रढयितुं कैश्चिल्लिङ्गदर्शनैर्युक्त्या चाक्षिप्यते । तत्र हि



* श्रुतप्रकाशिका *

अङ्गेषु यथाश्रयभावः ॥ ५६ ॥ यथाकाममिति पदेन सङ्गतिरभिप्रेता, यथाकामं विकल्पः समुच्चयो वा स्यादिति ह्युक्तम् , तथा उद्गीथादिविद्या यथाकाममुपादेया न वेति शङ्कया सङ्गति । किमुद्गीथाद्युपासनानि क्रतुषु नियमेनोपादेयानि ? उतानियमेन ? । किं क्रत्वङ्गोद्गीथादिमुखेन पर्णत्वादिवत् क्रत्वर्थानि ? उत फलश्रवणात् पुरुषार्थभूतानि । किं गोदोहनादीनां पुरुषार्थत्वं स्ववाक्ये फलसम्बन्धश्रवणात् ? उत क्रतुफलात्पृथक्फलसम्बन्धश्रवणात् , स्ववाक्ये फलश्रुत्या पुरुषार्थत्वं चेत्– तदभावेन पर्णतादिवत् क्रत्वर्थतया नियमेनोपादेयता , पृथक्फलसम्बन्धश्रवणमात्राच्चेदुद्गीथाद्युपासनानामपि पृथक्फलतया पुरुषार्थत्वान्न नियमेनोपादेयता । पौनरुक्त्येन चोदयति ( नन्विति ) परिहरति ( सत्यन्तदेवेति ) सङ्गतिविशेषादधिकरणान्तरं मध्ये प्राप्तम् , अतो न तत्र कृतमित्यर्थः । तत्रोक्तांशमाह ( तत्र हीति ) अत्र तद्विपरी-

⁂ भावप्रकाशिका ⁂

( पर्णतादिवदिति ) जुह्वादिमुखेनेति शेषः ( अधिकरणान्तरं मध्ये प्राप्तमिति ) ननु 'तन्निर्धारणानियमः' इत्यत्रैव इमाः शङ्का परिहरणीयाः एकविषयत्वान्मुखभेदाभावादित्याक्षिपन्तं प्रति नेदमुत्तरमिति चेत्– उच्यते, तस्मिन्नधिक-

"तेनोभौ कुरुतः" इत्यनियमदर्शनात् पृथक्फलत्वमुक्तम् । उपासनाश्रयभूतोद्गीथादिवदुपासनानामप्यङ्गतयोपादाननियमे बहवो हेतव उपलभ्यन्ते । न ह्यत्र "गोदोहनेन पशुकामस्य प्रणयेत्" इत्यादिवदुपासनाविधिवाक्ये फलसम्बन्धः श्रूयते । 'उद्गीथमुपासीत' इत्युद्गीथादिसम्बन्धितयैवोपासनं प्रतीयते, 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम्" इति वर्तमानापदेशरूपवाक्यान्तराद्धि फल-

* श्रुतप्रकाशिका *

तद्धेतुत्वमाह ( उपासनेति ) ( न ह्यत्रेति ) गोदोहनस्य स्ववाक्ये श्रूयमाणं पृथक्फलसाधनत्वमङ्गत्वविरोधि, अत्र तु वाक्यान्तरस्थत्वेन फलसम्बन्धस्य विलम्बितप्रतीतित्वादर्थवादमात्रमिति न तदङ्गत्वविरोधीत्यर्थः । विरोध्यभाव उक्तः, अनुकूलहेतुमाह ( उद्गीथमिति ) उद्गीथगता द्वितीयाश्रुतिरुपासनस्य तच्छेषत्वे प्रमाणम्, व्रीह्यादिगता प्रोक्षणादेरिवेत्यर्थः । फलसम्बन्धस्य वाक्यान्तरस्थत्वं दर्शयति ( यदेवेति ) वर्तमानापदेशः—वर्तमानव्यपदेशः, स्व-

* भावप्रकाशिका *

रणे एतदधिकरणसिद्धं पुरुषार्थत्वमुपजीव्य अनियमदर्शनादनियमः प्रतिपादितः, इह तु पुरुषार्थत्वं समर्थ्यत इति मुखभेदान्नैकाधिकरणप्रतिपाद्यत्वनिर्बन्ध इति भावः । अत एवास्मिन्नेवाधिकरणे भाष्यटीकयोः पुरुषार्थत्वप्रतिपादकयुक्त्युपन्यासो भूयान् दृश्यत इत्यवगन्तव्यम् ( अतो न तत्र कृतमिति ) तदनन्तरमेव न कृतमित्यर्थः ( स्ववाक्ये श्रूयमाणमिति ) कमिपदोपबन्धादिति शेषः ( वाक्यान्तरस्थत्वेनेति ) कमिपदाद्युपबन्धयुक्तवाक्यविलक्षणवाक्यस्थत्वेनेत्यर्थः, एवं सर्वत्र वाक्यान्तरस्थशब्दस्यार्थो द्रष्टव्यः, इतरथा 'यदेव विद्यया करोति' 'यस्य पर्णमयीजुहूर्भवति' इत्यादावाख्यातभेदे सत्यपि यच्छब्दादिभिरेकवाक्यतावगमेन वाक्यभेदाभावादिति द्रष्टव्यम् ( अनुकूलहेतुमाहेति ) यद्यपि क्रत्वङ्गभूतोद्गीथसम्बन्धितया उपासनविधानरूपा युक्तिः 'शिष्टेश्च' इतिसूत्रप्रतिपाद्या,

सम्बन्धो ज्ञायते । स्ववाक्येनैवाव्यभिचरितक्रतुसम्बन्ध्युद्गीथादिसम्बन्धेन निर्ज्ञातक्रत्वङ्गभावस्य वाक्यान्तरस्थवर्तमानफलसम्बन्धनिर्देशोऽर्थवादमात्रं स्यात्, अपापश्लोकश्रवणादिवत् । अतो यथोद्गीथादयः उपासनाश्रयाः क्रत्वङ्गतया प्रयोगविधिना नियमेनोपादीयन्ते, तथा तदाश्रिताश्चोपासनास्तन्मुखेन क्रत्वङ्गभूता इति नियमेनोपादेया एव ॥ ५९ ॥

---

* श्रुतप्रकाशिका *

वाक्यस्थे फलसम्बन्धे तत्रापि विधिकटाक्षः स्यात्, वाक्यान्तरस्थत्वे सोऽपि नास्तीति भावः । फलितमर्थमाह (स्ववाक्येनैवेति) निर्ज्ञातः— निश्चितः, प्रयोगविधिः—अनुष्ठापकत्वदशापन्नविधिः, न तु ज्ञापकावस्थः, यथा स्ववाक्यानवगतफलसम्बन्धस्य प्रकरणान्तरस्थस्याप्यव्यभिचरितक्रतुसम्बन्धिजुहूसम्बन्धेन ज्ञातक्रत्वङ्गभावस्य पर्णत्वस्यापापश्लोकश्रवणफलमर्थवादमात्रं स्यात्, अतः पर्णत्वं नियमेनोपादेयं तथेदमित्यर्थः ॥ ५९ ॥

* भावप्रकाशिका *

प्रथमसूत्रे च कर्मिपदोपसम्बन्धरूपस्य क्रत्वर्थत्वप्रतिबन्धकस्याऽभाव एव हि प्रतिपाद्यः, अथापि बुद्धिसौकर्याय वक्ष्यमाणार्थं इहोपन्यस्त इति द्रष्टव्यम् (द्वितीया श्रुतिरिति) द्वितीयया शेषित्वे बोधिते शेषत्वमपि सिद्ध्यतीति भावः, अपदेशशब्दस्य व्याजाद्यर्थकत्वभ्रान्तिं व्युदस्यति (वर्तमानव्यपदेश इति) (अनुष्ठापकत्वदशापन्नविधिरिति) उत्पत्तिविनियोगप्रयोगाधिकारभेदेन विधिश्चतुर्विधः, उत्पत्तिः— प्राथमिकावगतिः, विनियोगः— शेषशेषिभावसम्बन्धः, अधिकारः— फलसम्बन्धः, प्रयोगो हि साङ्गप्रधानानुष्ठानम्, तदुपयुक्तविधिः प्रयोगविधिरित्यर्थः । नानाशाखावाक्ये चोदकस्मृत्याचारप्रापितसर्वाङ्गोपसङ्ग्रहेण अनुक्रमणिकारूपेण श्रुतानुमितैकदेशनिष्पन्नो बुद्धिमद्भिः कल्पितो विधिः प्रयोगविधिरुच्यते 'उत्पत्तिविधिर्नामैको यो द्वितीये विचिन्तितः । विनियोगविधिस्त्वन्यो यस्तृतीये विचिन्तितः । चतुर्थे पञ्चमे चैव प्रयोगविधि-

शिष्टेश्च ॥ ६० ॥

शिष्टिः—शासनम्, विधानमित्यर्थः । "उद्गीथमुपासीत" इत्युद्गीथाङ्गतयोपासनविधानाच्चोपादाननियमः "गोदोहनेन पशुकामस्य प्रणयेत्" इत्यादिवद्विधिवाक्येऽधिकारान्तराश्रवणात् उद्गीथाद्यङ्गभाव एव हि विधेय इति गम्यते ॥ ६० ॥

समाहारात् ॥ ६१ ॥

"होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति" इत्युपासनस्य समाहारनियमो दृश्यते । दुरुद्गीथं—वेदनविहीनमुद्गीथम् । वेदनहानावन्येन समाधानं ब्रुवत्तस्य नियमेनोपादानं दर्शयति ॥ ६१ ॥

---

* श्रुतप्रकाशिका *

शिष्टेश्च ॥ ६० ॥ पूर्वं युक्तिरुक्ता, व्याप्तिरूपा हि युक्तिः, विधिवाक्यस्थफलसम्बन्धेष्वङ्गत्वाभावः, विधिवाक्यस्थफलविरहेऽङ्गत्वं च हि दर्शितम् । अथ लिङ्गानि प्रदर्श्यन्ते, गोदोहनस्याप्यङ्गत्वप्रसङ्ग इत्यत्राह ( गोदोहनेनेति ) ॥ ६० ॥

समाहारात् ॥ ६१ ॥ समाहारः—समाधानम्, कथं दृश्यत इत्यत्राह ( दुरुद्गीथमिति ) ॥ ६१ ॥

* भावप्रकाशिका *

चिन्तनम् । अधिकारविधिः प्रोक्तो यष्षष्ठाध्यायगोचरः' इति ॥ ६९ ॥

( अथ लिङ्गानि प्रदर्श्यन्त इति ) ननु 'शिष्टेश्च' इति सूत्रस्य साक्षात् शेषशेषिभावप्रदर्शकश्रुतिप्रदर्शनपरतया कथं लिङ्गोपन्यासरूपत्वमिति चेन्न, कमिपदोपबन्धाभावे सति क्रत्वर्थाश्रिततया विधीयमानत्वस्य क्रत्वर्थसाधकलिङ्गतया अस्यापि सूत्रस्य क्रत्वर्थत्वव्याप्तलिङ्गोपन्यासपरत्वे विरोधाभावात् ॥ ६९ ॥

भाष्ये— वेदविहीनमुद्गीथमिति, ननु 'अथ खलु य उद्गीथः स प्रणवो

## गुणसाधारण्यश्रुतेश्च ॥ ६२ ॥

उपासनगुणस्य उपासनाश्रयस्य प्रणवस्य सोपासनस्य "तेनेयं त्रयी विद्या वर्तते ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति" इति साधारण्यश्रुतेश्चोपासनसमाहारो गम्यते, तेनेति प्रकृतपरामर्शात् सोपासन एव प्रणवः सर्वत्र सञ्चरति । अत उपासनस्य प्रणवसहभावनियमदर्शनाच्चोद्गीथाद्युपासनानामुद्गीथादिवन्नियमेनोपादानम् ॥ ६२ ॥

* श्रुतप्रकाशिका *

गुणसाधारण्यश्रुतेश्च ॥ ६२ ॥ उपासनार्थत्वविवक्षया तदाश्रयस्य गुणत्वव्यपदेशः, ( समाहारो गम्यत इति ) समाहारः— अनुवृत्तिः, सोपासनप्रणवानुवृत्त्योपासनानुवृत्तिर्गम्यते इत्यर्थः । तदुपपादयति ( तेनेति ) ॥ ६२ ॥

छ भावप्रकाशिका छ

यः प्रणवस्स उद्गीथः' इति प्रणवोद्गीथयोरेकत्वविज्ञानं विधाय तत्र श्रूयते 'होतृषदनाद्धैवापि दुरुद्गीथ'मिति, तस्य ह्ययमर्थः— होत्रा प्रयुज्यमानस्य प्रणवस्य उद्गात्रा प्रयुज्यमानस्य उद्गीथस्य च एकत्वविज्ञाने उद्गात्रा अनुष्ठिते सति तद्विज्ञानमाहात्म्यात् उद्गाता स्वकर्मण्युद्गाने यत्क्षतं स्वरप्रमादादिरूपं तद्धोतृकृतात् सम्यक् शंसनाद्धेतोस्समादधातीत्यर्थः , दुष्टस्य समीचीनेनैक्ये हि दुष्टस्य सामीचीन्यं भवतीति युज्यत इति, ननु दुरुद्गीथमित्यस्य वेदनविहीनमित्यर्थः, वेदनस्यैव फलश्रवणादिति चेत् , सत्यं प्रणवोद्गीथैक्यविज्ञानफलमेवेदम् । तथापीदं विज्ञानम् उद्गीथविषयकत्वात् उद्गातृकर्तृकमपि सम्भवति, होत्रा प्रयुज्यमानप्रणवविषयत्वात् होतृकर्तृकमपि भवति , ततश्चोद्गातृकर्तृकवेदनहीनतया दुरुद्गीथं होत्रा स्वकृतात् शंसनात् प्रतिसमादधातीत्यर्थः , ततश्चोद्गीथोपासनस्यावश्यकत्वं सिद्ध्यतीति भावः ॥ छ ॥

भाष्ये— गुणशब्दस्य सूत्रगतस्याश्रयत्वमर्थ इति कथमुच्यत इत्याशङ्क्याह

इति प्राप्ते उच्यते—

न वा तत्सहभावाश्रुतेः ॥ ६३ ॥

न चैतदस्ति— यदुद्गीथाद्युपासनानां क्रतुषूद्गीथादिवदुपादाननियमः—इति । कुतः तत्सहभावाश्रुतेः— उद्गीथाङ्गभावाश्रुतेरित्यर्थः । अङ्गभावे हि सहभावनियमो भवति, यद्यपि "उद्गीथमुपासीत" इत्यस्मिन् पदसमुदायेऽधिकारान्तरं न प्रतीयते, तथाऽपि तदनन्तरमेव "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति विद्यायाः क्रतुवीर्यवत्तरत्वं

* श्रुतप्रकाशिका *

न वा तत्सहभावाश्रुतेः ॥ ६३ ॥ फलितमर्थमाह ( उद्गीथाङ्गभावाश्रुतेरिति ) कथमयमर्थ इत्यत्राह ( अङ्गभावे हीति ) सहभावमात्रस्य पूर्वपक्षिणाऽप्यङ्गीकृतत्वात् सहभावनियम इत्युक्तम् , सहभावनियम एवाङ्गत्वम् , अङ्गत्वविरोधिपृथक्फलसाधनत्वं सूत्राभिप्रेतम् , गोदोहनवाक्यसाम्यप्रतिपादनेन तदुपपादयति ( यद्यपीति ) स्ववाक्यस्थत्वं वाक्यान्तरस्थत्वं च न प्रयोजकम् , विलम्बाविलम्बावेव प्रयोजकौ, पर्णताविधिवाक्ये विलम्बद्वयमस्ति,

❀ भावप्रकाशिका ❀

( उपासनार्थत्वविवक्षयेति ) प्रधानस्याप्योङ्कारस्य उपासननिर्वर्तकत्वेन गुणत्वसम्भवात्तद्विवक्षया आश्रये गुणशब्द उपचरितस्सूत्रे इति भावः ॥ ❀ ॥

भाष्ये—अङ्गभावे हि सहभावनियमो भवतीति, अङ्गभाव एव सहभावनियम इत्यर्थः, सहभावनियम एवाङ्गत्वमित्युत्तरटीकाग्रन्थानुसारात् , ततश्च सहभावशब्देन तन्नियमरूपाङ्गभावस्य लक्षणासम्भवात् सहभावाश्रुतेरित्यस्य अङ्गभावाश्रुतेरिति व्याख्या युज्यत इति भावः, यथाश्रुते अनुपपत्तिमाह ( सहभावमात्रस्येति ) ( पूर्वपक्षिणाप्यङ्गीकृतत्वादिति ) पूर्वपक्षिसिद्धान्तिभ्यामङ्गीकृतत्वेन सहभावाश्रुतेरिति यथाश्रुतार्थासम्भवादिति भावः, नन्वङ्गभावाश्रवणमप्रयोजकम्, पर्णतान्याये वाक्यविधया

प्रति साधनभावः प्रतिपाद्यते। तेन क्रतुफलात् पृथ-

* श्रुतप्रकाशिका *

पर्णताया अपापश्लोकश्रवणं प्रति साधनत्वाश्रवणात्, फलस्य वाक्यान्तरस्थत्वाच्च, गोदोहनवाक्ये त्वन्यतरविलम्ब एव, फलस्य स्ववाक्ये श्रवणात् पशुं प्रति गोदोहनस्य साधनतामात्रस्य कल्प्यत्वात्, एवं पर्णताविधिवाक्ये विलम्बद्वयसद्भावात् वाक्यस्वरससिद्धाङ्गत्वबाधायोगात् तत्फलश्रुतिरर्थवादः । एवं गोदोहनवाक्ये त्वन्यतरविलम्बाभावात्तत्र फलसाधनत्वमङ्गत्वविरोधि, एवमन्यतरविलम्बाभावसाधर्म्यात्तद्वदिदमपि पृथक्फलसाधनत्वमेवोपासनस्य प्रतिपादयतीति गोदोहनवदुपासनमपि न क्रत्वङ्गम् । अतो विलम्बद्वयाभाववैषम्यात् पर्णतावाक्यवन्नेदं क्रत्वङ्गतां प्रतिपादयतीत्यर्थः । जुह्वाः प्रकृतिद्रव्याकाङ्क्षाऽस्ति नैवमुद्गीथादीनामुपासनाकाङ्क्षाऽस्ति, पर्णताया अक्रियारूपत्वात् क्रत्वनुप्रवेशाकाङ्क्षाऽस्ति, नैवमुपासनानां क्रियारूपत्वेनाव्यवधानेन पुरुषार्थसंस्पर्शादिति च पर्णतावैषम्यं सिद्धम् । अधिकारान्तरम्— फलान्तरसाधनत्वम्, ( साधनभावः प्रतिपाद्यत इति ) अनेन गोदोहनवाक्ये साधनभावः कल्प्य इत्य-

* भावप्रकाशिका *

बाधनसम्भवादित्यत आह ( अङ्गत्वविरोधीत्यादि ) ( अन्यतरविलम्बाभावसाधर्म्यादिति ) ननु गोदोहनवाक्येऽपि गोदोहनेनेति तृतीया श्रूयते, तत्र कथं फलसाधनत्वाश्रवणम् इह कथं विद्ययेति तृतीयया साधनत्वश्रवणमितिचेन्न, गोदोहनस्य सिद्धरूपस्य क्रियामनिर्वर्तयतः फलं प्रति कारणत्वासम्भवात्, अप्प्रणयनक्रियाकारकस्यैव गोदोहनस्य फलं प्रति करणत्वमिति प्रणयनक्रियाकरणत्वं तृतीययोच्यते, प्रकृते तु उपासनस्य क्रियारूपत्वेन स्वत एव फलभावनाकरणत्वेनान्वयार्हत्वात्, विद्ययेति तृतीयाश्रुतिः वीर्यवत्तरत्वरूपफलं प्रत्येव करणत्वं ब्रवीतीति वैषम्यात्, न चात्रापि 'विद्यया करोती'ति करोत्यर्थं प्रत्येव करणत्वं विद्यायास्तृतीया प्रतिपादयति, नतु वीर्यवत्तरत्वं प्रतीतिवाच्यम् 'ज्योतिष्टोमेन यत्करोति स स्वर्गः' इत्युक्ते स्वर्गं प्रत्येव तृतीयाहेतुत्वं प्रतिपादयति, विद्यया यत्क्रियते तद्वीर्यवत्तरत्वरूपमिति तस्यार्थ इत्यभिप्रायः। ननु असार्वत्रिकीतिपुरुषार्थाधिकरणगुणसूत्रे यदेवेति वाक्यस्य कर्मशेषत्वबोधकत्वं पूर्वपक्ष्युक्तमभ्युपेत्य प्रकृतोद्गीथविद्यापरत्वं समर्थितम्, इह तु तस्यैव वाक्यस्य पुरुषार्थपरत्वमुच्यत इति चेन्न, तस्याभ्यु-

ग्भूतफलसाधनभूता विद्या 'उद्गीथमुपासीत' इति कर्त्त-व्यतया विधीयते। क्रतुफलात् पृथग्भूतफलसाधनतयाऽवगतस्योपासनस्य क्रत्वङ्गभूतोद्गीथाङ्गतया विनियोगो नोपपद्यते। अथ उपासनस्याश्रयापेक्षायां सन्निहित उद्गीथ आश्रयमात्रं भवति। उद्गीथश्च क्रत्वङ्गभूत इति क्रतुप्रयुक्तोद्गीथाद्याश्रये उपासने क्रत्वधिकारिण एव क्रतोर्वीर्यवत्तरत्वेच्छानिमित्तमिदमधिकारान्तरमिति न क्रतुषु तदुपादाननियमः।

---

* श्रुतप्रकाशिका *

न्यतरविलम्बः सूचितः, एवं तत्साम्येन पृथक्फलसाधनतयैव उद्गीथविद्या विहितेत्याह (तेनेति) ततः किमित्यपेक्षायामुपासनस्य क्रत्वङ्गत्वमयुक्तमित्याह (क्रतुफलादिति) 'उद्गीथमुपासीते'त्युपासनस्योद्गीथशेषत्वं प्रतीयते इत्यत्राह (अत उपासनस्येति) (आश्रयमात्रं भवति) न तु शेषीत्यर्थः। यथा गोदोहनं किंसम्बन्धि पशुसाधनमित्यपेक्षायां प्रणयनसम्बन्धीति प्रणयनं सम्बन्धिमात्रतया प्रतीयते, तथा किंविषयमुपासनं वीर्यवत्तरत्वसाधनमित्यपेक्षायामुद्गीथ आश्रयमात्रं भवतीत्यर्थः। उपासनस्य पृथक्फलसाधनत्वे अधिकार्यन्तरानुष्ठेयता स्यादित्यत्राह (उद्गीथश्चेति) यथा क्रत्वधिकारिण एव पशुकामनानिमित्तमधिकारान्तरं भवति गोदोहने, तद्वदत्रापीत्यर्थः। उद्गात्रनुष्ठितमप्युपासनं यजमानस्यैव फलप्रदम्, वीर्यवत्तरत्वस्य

* भावप्रकाशिका *

पगम्यवादत्वेनाऽदोषात् (पर्णताया अक्रियारूपत्वादिति) पर्णताया जुहूसम्बन्धेपि अव्यापाररूपत्वात्फलनिष्पादकत्वं न सम्भवतीति तत्सिद्धये क्रतूपरागेण व्यापाररूपतां सम्पादयितुं जुहूलिङ्गेन क्रतुमुपस्थाप्य तत्सम्बन्धबोधकः शब्दः कल्प्यते, जुहूशब्दस्यैव वा जुहूसम्बन्धिक्रतूपलक्षकत्वमङ्गीक्रियते, इहोपासनायाः स्वयं व्यापाररूपायाः स्वत एव फलपर्यवसाने सम्भवति किमुद्गीथाद्युपस्थापितक्रतुसम्बन्धबोधकशब्दकल्पनादिना तस्यापि क्रत्वर्थत्वमङ्गीक्रियते, नच आधानस्याग्निभिः फल-

वीर्यवत्तरत्वं च क्रतुफलस्य प्रबलकर्मान्तरफलेनाप्रतिबन्ध इत्युक्तम् । क्रतोरविलम्बितफलत्वमित्यर्थः । पर्णतादीनां तु "यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति" इति विद्यायाः फलसाधनत्ववदपापश्लोकश्रवणादिफलं प्रति साक्षात्साधनभावो न श्रुत इति क्रत्वङ्गभूतजुह्वाद्यङ्गतया विनियोगाविरोधात्तदङ्गभूतानां फलान्तरसाधनभावकल्पनानुपपत्तेः

---

* श्रुतप्रकाशिका *

पृथक्फलतां दर्शयति ( वीर्येति ) । पर्णतावाक्यवैषम्यमाह ( पर्णतादीनां त्विति ) फलस्य वाक्यान्तरस्थत्वेन विलम्बः स्पष्टतया न कण्ठोक्तः फलसम्बन्धस्य विलम्बद्वयोपहतत्वेनाविरोधित्वादङ्गतया विनियोगात्, अङ्गत्वे सति पृथक्फलकल्पनायोगात्तत्र फलश्रुतिरर्थवादः, अत्र पुनरन्यतरविलम्बसाम्यात् पृथक्फलसाधनत्वेनोपासनस्य पुरुषार्थतया क्रत्वर्थत्वाभावान्नोपादान-

७ भावप्रकाशिका ७

वत्त्वमस्ति, नतु उपासनानां केनचित् फलवत्त्वमस्ति, अतस्तेषां क्रतुफलत्वेन फलवत्त्वसिद्ध्यर्थं क्रतुसम्बन्धबोधकवाक्यकल्पनापेक्षाऽस्तीति वाच्यम् । उपासनवाक्यशेषस्यैव फलसमर्पकतया विपरिणामसम्भवे फलवत्कर्मान्तरान्वयबोधकवाक्यकल्पनाद्यनपेक्षणात्, तस्माद्वाक्यशेषश्रुताय तस्मै फलाय उद्गीथाद्याश्रयत्वविशिष्टोपासनविधिरित्येव युक्तम्, एवमुद्गीथादिश्रवणस्य उपासनार्थतायामेव दृष्टार्थत्वं लभ्यते, निरालम्बनध्यानासम्भवेन उद्गीथादेरालम्बनस्य उपासनेनापेक्षितत्वात् , उपासनश्रवणस्य उद्गीथाद्यर्थत्वे तु अदृष्टार्थता स्यात् , उपासनेनोद्गीथादिषु उत्पत्तिविकृतिप्राप्तीनामसम्भवेनाऽदृष्टसंस्कारस्यैव वक्तव्यत्वेन दृष्टादृष्टप्रयोजनपर्यवसायी अन्वय एव ग्राह्यः, अत एव 'खलेवाली यूपो भवती'त्यस्य यः खादिरादिप्रकृतिकः प्राप्तो यूपः तदनुवादेन खलेवाल्याकृतिविधाने अदृष्टार्थताप्रसङ्गात् विधेर्दृष्टार्थत्वलिप्सया खलेवाल्या यूपकार्ये विधिराश्रितः , तस्माद्गोदोहनविधिवदाश्रित्य विधिरूपा अङ्गाववद्धोपासना इत्येव युक्तम् , नतु पर्णताविधिवत् क्रत्व-

स्तत्र फलश्रुतिरर्थवादमात्रं स्यात् ॥ ६३ ॥

दर्शनाच्च ॥ ६४ ॥

दर्शयति च श्रुतिरुपासनोपादानानियमम् "एवं विद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति" इति ब्रह्मणो वेदनेन सर्वेषां रक्षणं ब्रुवती। उद्गातृप्रभृतीनां वेदनस्यानियमे सत्येतदुपपद्यते। अनेन लिङ्गेन पूर्वोक्तानां समाहारादिलिङ्गानां प्रायिकत्वमवगम्यते। अतोऽनियम एवेति स्थितम् ॥ ६४ ॥

यथाश्रयभावाधिकरणं समाप्तम् ॥



इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

तृतीयस्याध्यायस्य तृतीयः पादः ॥



---

* श्रुतप्रकाशिका *

नियम इत्यर्थः ॥ ६३ ॥

दर्शनाच्च ॥ ६४ ॥ पूर्वसूत्रे पूर्वपक्षयुक्तिर्निराकृता, अत्र लिङ्गानि प्रतिवक्ष्यन्ते। अनियमस्य प्रदर्शितत्वमुपपादयति ( उद्गातृप्रभृतीति ) 'यजमानं सर्वांश्च ऋत्विजोऽभिरक्षति' इत्यत्र यजमानसंरक्षणं क्रतुफलाप्रतिबन्धकरणादिभिरिति मन्तव्यम्, उद्गातृप्रभृतिवेदनफलं हि क्रतुफलाप्रतिबन्धादि, तस्य ब्रह्माख्यर्त्विग्वेदनेन सिद्धौ सत्यां ह्युद्गातृप्रभृतिवेदनानियमसिद्धिः, ( समाहारादिलिङ्गानां प्रायिकत्वमवगम्यत इति ) आदावेव क्रतुफला-

ꣳ भावप्रकाशिका ꣳ

ङ्गविधिरूपेति भावः ॥ ꣳ ॥

( उद्गातृप्रभृतिवेदनानियमसिद्धिरिति ) ऋत्विक्तु मन्त्रवैकल्ये यजमाने दक्षि

* श्रुतप्रकाशिका *

प्रतिबन्धायोद्गीथोपासनं सङ्कल्पितं चेत्, वेदनविरहितोद्गीथे समाधानं कर्त्तव्यमित्यर्थः, सोपासनप्रणवसहभावनियमदर्शनमपि तथा सङ्कल्पितक्रतावेव । यद्वा तेनेति न सोपासनप्रणवपरामर्शः, अपि तु प्रणवमात्रपरामर्शः, उद्गीथसम्बन्धितयोपासनविधानम्, न तूद्गीथविशेषणतयेत्यनेन शिष्टिश्च परिहृता ।

परे तु किमुद्गीथादिप्रत्ययाः समुच्चीयेरन्, किं यथाकामं स्युरिति विचारयन्ति, पुरुषार्थत्वे यथाकाममनुष्ठेयत्वं 'काम्यास्तु यथाकाम'मिति सिद्धम्, अतः पुरुषार्थत्वतदभावविषयविचारो युक्तः । तत्सहभावाश्रुतेरिति– 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति स्तुतमनुशंसति प्रस्तोतस्सामानि गाय होतरेतद्यज' इत्यादिना स्तोत्रादीनां परस्परसहभावः श्रुतः, इह तथा न श्रूयते इति चाहुः । लिङ्गादीनामप्यङ्गभावे प्रमाणत्वात्सहभावाश्रवणमात्रेण नाङ्गत्वनिवृत्तिः, सहभावाश्रुतिर्विनियोगप्रमाणाभावप्रदर्शनार्थेति चेत्, सहभावशब्देन तन्नियमरूपमङ्गत्वमुपस्थाप्य विनियोजकप्रमाणाभावेन तद्व्युदासपरत्वं सूत्रस्य ततोऽपि वरम् ।— अन्ये तु 'शिष्टेश्च' 'यदेव विद्यया करोति' इत्यङ्गत्वं शिष्यत इत्याहुः, ततोऽपि वरम् 'उद्गीथमुपासीत' इति विधानपरत्वं शिष्टिशब्दस्य विधाने स्वारस्यात्, 'यदेव विद्यया' इत्यत्र विधिपदाश्रवणाच्च । 'दर्शनाच्च' 'तेनोभौ कुरुतः' इत्यनियमदर्शना-

* भावप्रकाशिका *

णादानादिवैकल्ये 'अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्तु ऋत्विजः । आत्मानं दक्षिणाहीनो नास्ति यज्ञसमो रिपुः' इत्युक्तन्यायेन तेषां प्राप्तं दोषं प्रायश्चित्तप्रकाराभिज्ञो ब्रह्मा परिहरतीत्युक्त्या कथं वेदनस्यानियतत्वसिद्धिः, प्रत्युत 'समाहारा'दिति सूत्रोक्तन्यायेन तत्कृतवैगुण्यस्य ब्रह्मवेदनेन समाधानदर्शनात् आवश्यकत्वमेवायातीति चेन्न, ऋत्विग्यजमानयज्ञरक्षा क्रतुफलाप्रतिबन्धरूपैव, एवंरूपरक्षाया एव ऋत्विग्भिः यजमानैश्च आशासनीयत्वात्तस्याश्चोद्गीथमन्तरेण सिद्धेर्दर्शितत्वादनियतत्वं सिद्धमिति । किञ्च सर्वप्रत्ययोपसंहारे सर्वे सर्व-

* श्रुतप्रकाशिका *

दिति व्याचक्षते, तदयुक्तं, तद्दृष्टेरित्यनेन पुनरुक्तत्वात् ।

यथाश्रयभावाधिकरणं समाप्तम् ॥

इति श्रीहारीतकुलतिलकवाग्विजयसूनुना श्रीरङ्गराजदिव्याज्ञालब्ध-
वेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधि-
गतभगवद्रामानुजविरचितशारीरकमीमांसा-
भाष्यहृदयेन श्रीसुदर्शनसूरिणा विलि-
खितायां श्रुतप्रकाशिकायां तृतीय-
स्याध्यायस्य तृतीयः पादः ॥



* भावप्रकाशिका *

विद इति न विज्ञानवता ब्रह्मणा परिपाल्यत्वमितरेषां सङ्कीर्त्येतेति भावः ॥ * ॥

इति यथाश्रयभावाधिकरणम् ॥

इति दशोपनिषद्भाष्यकारैः श्रीरङ्गरामानुज-
मुनिभिर्विरचितायां श्रुतप्रकाशिका-
व्याख्यायां भावप्रकाशिका-
यां तृतीयस्याध्यायस्य
तृतीयः पादः ॥



समुदिताधिकरणसङ्ख्या-१०८-समुदितसूत्रसङ्ख्या-४१७ ।





श्रीमते रामानुजाय नमः ॥

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

## तृतीयाध्याये चतुर्थः पादः ।



### पुरुषार्थोऽतश्शब्दादिति बादरायणः ॥ १ ॥

१ अधिकरणम्

गुणोपसंहारानुपसंहारफला विद्यैकत्वनानात्वचिन्ता कृता । इदानीं विद्यातः पुरुषार्थः? उत विद्याङ्गकात्कर्मणः? इति चिन्त्यते । किं युक्तम्? अतः— विद्यातः पुरुषार्थ इति भगवान्बादरायणो मन्यते, कुतः? शब्दात्, दृश्यते ह्यौपनिषदः शब्दो विद्यातः पुरुषार्थं ब्रुवन् "ब्रह्म-

---

* श्रुतप्रकाशिका *

पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥ पूर्वाधिकरणेनास्याधिकरणस्य सङ्गतिमाह (गुणेति) उपासनचिन्तानन्तरमङ्गचिन्तनं क्रियते इति पादसङ्गतिरर्थसिद्धा, तत्र विद्याया अङ्गित्वे सति हि तदङ्गचिन्तनं कार्यम्, तस्मादङ्गचिन्तनोपयोगित्वेन विद्याया अङ्गित्वं प्रथमाधिकरणे निरूप्यते, किं विद्यातः पुरुषार्थः? उत विद्याङ्गकात् कर्मणः? इति, किं विद्या क्रतुकर्मभूतात्मसंस्कार-

विदाप्नोति परम्" "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेवं विद्वानमृत इह भवति। नान्यः पन्था विद्यतेऽयनाय" "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नाम·

* श्रुतप्रकाशिका *

द्वारेण क्रत्वर्था ? उतापुनरावृत्तिफलसाधनतया पुरुषार्था, किं 'ब्रह्मविदाप्नोति'-इत्यादयः फलविधयः, उतार्थवादाः, परविद्यासु कर्मीभूतो जीवः ? उत तदन्यः परमात्मा, किमाचारदर्शनादिलिङ्गानुगृहीतं तत्त्वमस्यादिसामानाधिकरण्यमुपास्यस्य जीवभावमवगमयति, नेति, किमिदं लिङ्गमनैकान्तिकम्, नेति, अनैकान्तिकत्वाभावे तदनुगृहीतसामानाधिकरण्येनोपास्यस्य जीवत्वावगमात् परविद्यानां स्वकर्मीभूतजीवसंस्कारत्वात् आत्मज्ञानफलश्रुतेरर्थवादतया पृथक्फलसाधनत्वाभावात् विद्या क्रत्वर्थेति तदङ्गकात् कर्मणः पुरुषार्थः स्यात्, लिङ्गस्यानैकान्तिकत्वे तदनुग्रहाभावेन सामानाधिकरण्यस्य जीवानतिरेकानवगमकत्वात् परविद्यानां जीवकर्मकत्वाभावेन तत्संस्कारत्वाभावात् आत्मविद्याफलश्रुतेरर्थवादत्वाभावेन पृथक्फलसाधनतया पुरुषार्थत्वाद्विद्यातः पुरुषार्थ·

ॐ भावप्रकाशिका ॐ

( किमाचारदर्शनादिलिङ्गानुगृहीतमिति ) लिङ्गशब्दः प्रमाणमात्रपरः, आचारदर्शनादिरूपशेषत्वग्राहकप्रमाणानुगृहीतमित्यर्थः, एवमुत्तरत्रापि लिङ्गशब्दः प्रमाणमात्रपरो द्रष्टव्यः, इतरथा 'तच्छ्रुते'रिति सूत्रोक्ततृतीयाश्रुतेरसङ्गृहीतत्वप्रसङ्गात् । केचित्तु– 'यदेव विद्यया करोती'त्यादिरपि वर्तमाननिर्देशतया अन्यार्थदर्शनरूपलिङ्गमेव, नचैवं सति 'तच्छ्रुते'रित्यस्य लिङ्गमिदम्, प्राप्तिरुच्यताम्' इत्यवतारिकाभाष्यतट्टीकाग्रन्थविरोध इति वाच्यम्, अस्याभ्युपेत्यवादत्वादिति वर्णयन्ति ( अनैकान्तिकत्वाभाव इति ) आचारदर्शनादीनां विद्यायाः कर्मशेषत्वानन्यथासिद्धत्वसाधकत्व इत्यर्थः, नन्वाचारदर्शनादीनामनैकान्तिकत्वाभावे विद्या क्रत्वर्थेत्येतावतैव फलफलिभावस्य परिपूर्णतया तदनुगृहीतसामानाधिकरण्येनेत्यादिरुत्तरग्रन्थसन्दर्भो व्यर्थः, शेषत्वसिद्ध्युपजीविनः उपास्यजीवभावावगमस्य कथं शेषत्वसाधकत्वम्, अन्योन्याश्रयप्रसङ्गात्, तथाहि

रूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इत्यादिः॥ १॥

* श्रुतप्रकाशिका *

सिद्धिः स्यात्, इदं च सिद्धान्तोपक्रमम्, विद्यायाः पूर्वपादे प्रस्तुतत्वादतश्शब्देन सोक्ता, 'ब्रह्मविदाप्नोति' इति वाक्ये विद्यया प्राप्यावाप्तिरुक्ता, 'वेदाहम्' इत्यत्र विद्याया ब्रह्मप्राप्तिहेतुत्वं प्रतिबन्धनिवृत्तिद्वारकमित्यर्थः। तत्र ब्रह्मणो

⁂ भावप्रकाशिका ⁂

'आचारदर्शना'दित्यादिपूर्वपक्षसूत्रपञ्चकोक्तन्यायेन विद्यायाः कर्मशेषत्वे सिद्धे पार्वणहोमयोः कालार्थेज्यात्वे आरादुपकारकत्वप्रसङ्गात् सामवायिकत्वलिप्सया कर्मसमुदायेज्यात्वाङ्गीकारवत् सामवायिकाङ्गत्वे सम्भवति आरादुपकारकाङ्गत्वस्याऽन्याय्यत्वादिति न्यायेन कर्तृसंस्कारमुखेन शेषत्वस्योचितत्वात्, 'आत्मा द्रष्टव्यः' 'आत्मानमुपासीत' इति द्वितीयातव्यप्रत्ययादिना आत्मसंस्कारत्वावगमात्, आत्मनः कर्मसु कर्तृतया उपयोगसम्भवे सक्तुन्यायेन विनियोगस्याऽयुक्तत्वात्, कर्तृसंस्कारमुखेन उपासनस्य क्रतुशेषत्वं न्याय्यम्, अतः कर्मकर्तुः वेदान्तविहितोपासनकर्मभूतब्रह्माभिन्नत्वम्, अतश्च 'तत्त्वमसि' इति सामानाधिकरण्यनिर्देशोऽपि अनुगृहीतो भवतीत्येवं शेषत्वसिद्ध्युपजीवित्वात् जीवब्रह्माभेदस्य कथं तस्य शेषित्वोपपादककोटौ निवेशनमिति चेत्—अत्राहुः, नह्याचारदर्शनादीनां लिङ्गत्वसद्भावमात्रे विद्यायाः क्रत्वर्थत्वसिद्धिः, लिङ्गानामनुग्राह्यप्रमाणसापेक्षत्वात्, अनुग्राह्यस्य च 'आत्मानमुपासीत' इत्यादिवाक्यादन्यस्याभावात्, तत्र चात्मानमित्यस्य कर्तृजीवातिरिक्तविषयत्ववाक्यविधया क्रत्वर्थत्वबोधकासम्भवेन तस्य वाक्यस्य लिङ्गानुग्राह्यवाक्यविधया क्रत्वर्थत्वबोधकत्वसिद्धेः जीवस्य ब्रह्माभेदमन्तरेणाऽसम्भवात् उत्तरग्रन्थस्य साफल्यादिति। केचित्तु— सत्यं शेषत्वोपपाद्य एव जीवब्रह्मभेदः, तथापि न तत्साधितेन जीवब्रह्माभेदेन पुनस्तदेव साध्यते, येनान्योन्याश्रयः स्यात्, किन्तु शेषत्वसाधितेन जीवब्रह्माभेदेन कर्मकर्तृसंस्कारमुखेन शेषत्वं साध्यते, तावत्पर्यन्तो हि पूर्वपक्षः, न शेषत्वमात्रपर्यवसितः, 'शेषत्वात्पुरुषार्थवादः' इति सूत्रेऽपि कर्तृसंस्कारद्वारा शेषत्वं विवक्षितमिति भाष्याभिप्रायात् अस्याधिकरणस्य जीवब्रह्माभेदप्रतिपादनपर्यन्ततया तथैव सूत्राभिप्रायस्य वक्तव्यत्वादिति वदन्ति (प्रतिबन्धनिवृत्तिद्वारकमिति) 'अमृत इह

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

शेषत्वात्पुरुषार्थवादो यथाऽन्ये-
ष्विति जैमिनिः ॥ २ ॥

नैतदेवम्– यद्विद्यातः पुरुषार्थावाप्तिः शब्दादव-गम्यते– इति । न ह्येषः "ब्रह्मविदाप्नोति परम्" इत्यादिशब्दो वेदनात्पुरुषार्थावाप्तिमवगमयति, कर्मसु कर्तृभूतस्याऽऽत्मनो याथात्म्यवेदनप्रतिपादनपरत्वात्,

* श्रुतप्रकाशिका *

विग्रहादिविशिष्टत्वमुपायान्तरनिषेधश्च सिद्धः, उभयमप्यभिहितं 'यथा नद्यः' इति वाक्ये ॥ १ ॥

द्वितीयसूत्रप्रभृति पूर्वपक्षविषयम् , तदाह ( अत्रेति ) ।

शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ २ ॥ व्याचष्टे ( नैतदित्या-दिना ) ( न हीत्यादि ) 'आदित्यो यूपः' इत्यादिष्विव न तात्पर्यमित्यर्थः । कुत इत्यत आह ( कर्मस्विति ) व्रीह्यादेः प्रोक्षणादिवत् विद्या आत्मनश्शेषत्वेनावगता 'आत्मा ज्ञातव्यः' इति 'अधीत्य स्नास्यन्नि'ति ज्ञानमपि कर्मशेषत्वेनावगतम् , व्रीह्यादिशेषभूतप्रोक्षणादेः क्रतुशेषत्वं द्वारभूतव्रीह्यादेः क्रतुशेषत्वेनैव यथोपपद्यते, तथाऽऽत्मशेषभूतज्ञानस्य कर्मशेषत्वमात्मनः कर्मशेषत्वेनोपपद्यत इति ज्ञातव्य आत्मा क्रतुशेषभूत एव, कर्मशेषभूतत्वं च कर्मसु कर्तृभूतस्याऽऽत्मनः, स चात्मा जीव एवेति तत्स्वरूपप्रतिपादनपरं वेदान्तवाक्यजातमित्यर्थः ।

ॐ भावप्रकाशिका ॐ

भवती'ति निर्दोषत्वश्रवणादित्यर्थः । ( उभयमप्यभिहितमिति ) प्रतिबन्धनिवृ-त्तिरिष्टप्राप्तिश्चेत्यर्थः ॥ ॐ ॥

( अधीत्य स्नास्यन्निति ज्ञानमपि कर्मशेषत्वेनाऽवगतमिति ) इदमाचारदर्श-नादिति सूत्रपञ्चकोक्तस्योपलक्षणम्, अत्रापि भिन्नक्रमः, कर्मशेषत्वेनाऽप्यवगत-मित्यर्थः, ( तत्स्वरूपप्रतिपादनपरमिति ) तत्स्वरूपोपासनप्रतिपादनपरमित्यर्थः ( पृथक्फलसाधनत्वान्न कर्माङ्गत्वमिति ) यद्यपि क्रत्वर्थस्य श्रुतिलिङ्गादिभिर-

**अतः कर्तुः संस्कारद्वारेण विद्यायाः क्रतुशेषत्वात् तत्र फलश्रुतिरर्थवादमात्रम्, यथाऽन्येषु द्रव्यादिष्विति**

* श्रुतप्रकाशिका *

आत्मज्ञानस्य पृथक् फलसाधनत्वान्न कर्माङ्गत्वमित्यत्राह ( अत इति ) 'आत्मा वा अरे द्रष्टव्यः' इत्यादिषु 'स्वाध्यायोऽध्येतव्यः' इतिवदात्मनः कर्मत्वावगमात् ज्ञानेन संस्कार्यत्वम् । अतो यज्ञादेर्व्रीह्यादिद्वारा प्रोक्षणादिवत् विद्याऽपि कर्तृसंस्काररूपतया कर्मशेषभूता, तस्माद्यथाऽव्यभिचरितक्रतुसम्बन्धिजुहूद्वारा क्रतुशेषभूतपर्णमयत्वस्यापापश्लोकश्रवणमर्थवादः , तद्वदव्यभिचरितक्रतुसम्बन्धिकर्तृद्वारा विद्यायाः क्रतुशेषभूतायाः फलश्रुतिरर्थवाद इत्यर्थः । प्रकरणान्तराधीताया विद्यायाः क्रतुशेषत्वमपि पर्णत्ववदुपपन्नम्,

* भावप्रकाशिका *

वगतत्वादेव नास्याः शङ्काया अवतारः, तथापि विद्यायाः क्रत्वर्थत्वे 'आत्मानमुपासीत' इत्यादिवाक्यमपि प्रमाणयितुमियं शङ्काऽवतारितेति द्रष्टव्यम् । यद्वा तेषां लिङ्गमात्रत्वेन प्रापकप्रमाणत्वासम्भवादित्यत्र तात्पर्यमिति द्रष्टव्यम् । भाष्ये- ननु च कर्तृसंस्कारमुखेनेत्यादिशङ्कापरिहारौ नोपपद्येते, यदि हि 'यस्य पर्णमयी जुहूर्भवति' इत्यादिवत् 'आत्मानमुपासीत' इत्यादिवाक्येन क्रत्वर्थत्वं बोध्येत, तदा आत्मनो जुह्वादिवत् क्रत्वव्यभिचरिततया क्रतूपस्थापनसमर्थत्वात् जुहूपदस्य क्रत्वपूर्वीयजुहूपलक्षकत्ववत् आत्मशब्दस्य क्रत्वपूर्वलक्षकत्वात् क्रत्वर्थत्वमित्येवं क्रत्वर्थत्वे वाक्यं प्रमाणीकृतं स्यात्, तदा चेमौ शङ्कापरिहारौ युज्येते, नहि तथा प्राग्वाक्यं प्रमाणतयोपपादितम्, अपि तु आचारदर्शनादिलिङ्गेन 'यदेव विद्यये'ति श्रुत्या च क्रतुशेषत्वमवगम्यते, 'आत्मा द्रष्टव्यः' इत्यात्मशेषता चावगम्यते , ततश्चोभयसामञ्जस्याय प्रोक्षणस्य प्रकरणावगतक्रत्वङ्गभावस्य द्वितीयाश्रुत्याऽवगतव्रीहिशेषभावनिर्वाहाय व्रीहिसंस्कारद्वारा क्रत्वर्थत्ववत् उपासनस्यापि कर्तृसंस्कारद्वारा कर्मार्थत्वं निर्वोढव्यमित्यस्योपक्षिप्तत्वेन 'आत्मानमुपासीत' इत्यस्य वाक्यविधया कर्मार्थत्वपर्यन्तप्रतिपादकत्वस्याऽनुपक्षिप्तत्वादिति केषांचिन्मन्दाशङ्का पराकृता । अत्र वाक्यस्यापि 'अतः कर्तुः संस्कारद्वारेण विद्यायाः क्रतुशेषत्व'मिति भाष्ये प्रमाणीकरणात् । भाष्ये—द्रव्य-

जैमिनिराचार्यो मन्यते। तदुक्तं "द्रव्यगुणसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्" इति। ननु च कर्मसु कर्तुर्जीवादन्यो मुमुक्षुभिः प्राप्यतया वेदान्तेषु वेद्य उपदिश्यते इति प्रागेवोपपादितम्— "नेतरोऽनुपपत्तेः" "भेदव्यपदेशाच्च" "अनुपपत्तेस्तु न शारीरः" "इतरपरामर्शात्स इति चेन्नासम्भवात्" इत्येवमादिभिः सूत्रैः। तदेव ब्रह्म तत्त्वमस्यादिसामानाधिकरण्येन जीवादनतिरिक्तमित्येतदपि "अधिकं तु भेदनिर्देशात्" इत्येवमादिभिर्निरस्तम्। सामानाधिकरण्यनिर्देशश्च "ऐतदात्म्यमिदं सर्वं" "सर्वं खल्विदं ब्रह्म" इति चेतनाचेतनसाधारणः, "यः पृथिव्यां तिष्ठन्" . "य आत्मनि तिष्ठन्" इत्यादिनाऽवगततच्चदात्मतयाऽवस्थितिनिबन्धन इति "अवस्थितेरिति काशकृत्स्नः" इत्यादिभिरुपपादितम्, तत्कथं कर्मसु कर्तुरात्मनो याथात्म्योपदेश-

---

* श्रुतप्रकाशिका *

आदिशब्दविवरणार्थमाह (तदुक्तमिति)। चोदयति (नन्विति) अचेतनेनेव चेतनेनापि स्वरूपैक्यानुपपत्तिद्योतनार्थम् 'ऐतदात्म्यमिदं सर्वं' 'सर्वं खल्विदं ब्रह्म' इति वाक्यद्वयोपादानम्। एवं जीवविलक्षणस्य प्रतिपाद्यमानत्वेन जीवप्रत्यभिज्ञाभावात्तद्द्वारा विद्यायाः कर्माङ्गत्वमनुपपन्न-

* भावप्रकाशिका *

संस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्— इति, 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते यत्प्रयाजानूयाजा इज्यन्ते, वर्म वा एतद्यज्ञस्य क्रियते, वर्म यजमानाय भ्रातृव्याभिभूत्यै' इत्यादिविधिविधेयेषु वाक्यप्रकरणावगतक्रत्वङ्गभावेषु पर्णतादिद्रव्येषु आज-

परा वेदान्तशब्दा इति विद्यायाः कर्माङ्गत्वं प्रतिपाद्यते। उच्यते— वेदान्तवाक्येष्वेव विद्यायाः कर्मप्राधान्यं सूचयद्भिर्लिङ्गैस्तदुपबृंहितसामानाधिकरण्यनिर्देशेन च वेदान्तशब्दा देहातिरिक्तजीवस्वरूपयाथात्म्योपदेशपरा इति बलादभ्युपगमनीयमिति पूर्वपक्षिणोऽभिप्रायः। ननु च कर्तृसंस्कारमुखेन विद्यायाः क्रत्वनुप्रवेशो न शक्यते वक्तुम्, कर्तुर्लौकिकवैदिकसाधारणत्वेनाव्यभिचरितक्रतुसम्बन्धित्वाभावात्। नैवम्, लौकिकस्य कर्मणः कर्तुर्देहादव्यतिरिक्तत्वेऽप्युपपत्तेर्देहातिरिक्तनित्यात्मस्वरूपस्य क्रतावेवोपयोगात्तत्स्वरूपप्रतिपादनमुखेन क्रत्वनुप्रवेशो न विरुद्ध्यते। अतो विद्यायाः क्रतुशेषत्वान्नातः पुरुषार्थः ॥ २ ॥

---

* श्रुतप्रकाशिका *

मित्यर्थः। परिहरति ( उच्यत इति ) ( वेदान्तवाक्येष्विवेति ) त्वया जीवविलक्षणपरत्वेनोक्तेष्विवेति भावः। लिङ्गानुग्रहात्सामानाधिकरण्यमपि स्वरूपैक्यपरमित्याह ( तदुपबृंहितेति ) चोदयति ( ननु चेति ) न ह्यन्यशेषमन्यशेषं भवति, तदसाधारणमेव हि तदङ्गं, कर्ता च लौकिकवैदिककर्मसाधारणः, अतः कर्तुरव्यभिचरितक्रतुसम्बन्धित्वाभावात् जुहूवत्प्रत्यभिज्ञा नास्तीति न तद्द्वारा क्रत्वङ्गत्वमित्यर्थः। परिहरति ( नैवमिति ) ॥ २ ॥

ॐ भावप्रकाशिका ॐ

नादिसंस्कारेषु प्रयाजादिकर्मसु च फलश्रवणमर्थवाद इति पूर्वतन्त्रे निर्णीतम्। ( न ह्यन्यशेषमन्यशेषं भवतीति ) लौकिकवैदिककर्मसाधारणस्याऽऽत्मनो वैदिककर्माव्यभिचरितत्वं न सम्भवतीत्यर्थः ( तदसाधारणमेव हि तदङ्गमिति ) तत्प्रत्यभिज्ञापकमित्यर्थः ॥ ॐ ॥

कानि पुनस्तानि लिङ्गानि; यदुपबृंहितसामानाधिकरण्यनिर्देशेन वेदान्तशब्दा जीवस्वरूपपरा इति निर्णीयन्ते । तत्राह—

आचारदर्शनात् ॥ ३ ॥

ब्रह्मविदां प्राधान्येन कर्मस्वेवाचारो दृश्यते—अश्वपतिः केकयः किलात्मवित्तमस्तद्विज्ञानायोपगतांस्तानृषीन् प्रत्याह—"यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि" इति । तथा च जनकादयो ब्रह्मविदग्रेसराः कर्मनिष्ठाः स्मृतिषु दृश्यन्ते "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" "इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः" इति । अतो ब्रह्मविदां कर्मप्रधानत्वदर्शनाद्विद्यायाः कर्तृस्वरूपवेदनरूपत्वेन कर्माङ्गत्वमेवेति न विद्यातः पुरुषार्थः ॥ ३ ॥

---

* श्रुतप्रकाशिका *

अनन्तरसूत्रमवतारयति ( कानीति ) ।

आचारदर्शनात् ॥ ३ ॥ गुणमुख्ययोर्विरोधे मुख्यानुगुणं गुणो नेयः, न तु गुणानुगुणं मुख्यो नेयः, तस्मात्कर्मणो विद्यायाश्च प्रसङ्गे कर्मणोऽनुष्ठानं तस्य प्राधान्येनैवोपपद्यते, अतो विद्या कर्माङ्गमित्यर्थः ॥ ३ ॥

छ भावप्रकाशिका छ

( गुणमुख्ययोर्विरोध इति ) अङ्गप्रधानयोः दीक्षणीयासोमयोः 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत्' इत्येकस्मिन् पर्वकाले प्रसक्तौ प्रधानस्यैव पर्वकालकर्तव्यत्वम् , न दीक्षणीयायाः—इति पूर्वतन्त्रे निर्णीतत्वात् सोमयागेषु सुत्याप्रयोगस्य अहोरात्रव्यापित्वात् विद्यायाश्चाऽन्वहं शीलनीयतया विरोधसद्भावात् विद्यायाः प्रधानत्वे तत्त्यागेन कर्मणामनुष्ठानं नोपपद्यत इत्यर्थः । ननु विद्ययेति तृतीयाश्रुतेः न शेषत्वप्रमाणत्वम्, तृतीयया

लिङ्गमिदम्; प्राप्तिरुच्यतामित्यत्राह—

तच्छ्रुतेः ॥ ४ ॥

श्रुतिरेव हि विद्यायाः कर्माङ्गत्वमाह— "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति । नेयं श्रुतिः प्रकरणादुद्गीथमात्र-विषयेति व्यवस्थापयितुं शक्या, यतः प्रकरणाच्छ्रु-तिर्बलीयसी, "यदेव विद्यया करोति" इति विद्या-मात्रविषया हीयं श्रुतिः ॥ ४ ॥

* श्रुतप्रकाशिका *

अनन्तरसूत्रमवतारयति ( लिङ्गमिति ) प्राप्तिः—प्रमाणतः सिद्धिः, अनुग्राहक-मुक्तम्, अनुग्राह्यमभिधीयतामित्यर्थः । आगमप्रमाणस्य श्रुतिलिङ्गादयोऽनुग्राहकाः ।

तच्छ्रुतेः ॥ ४ ॥ विद्ययेति तृतीयाश्रुत्याऽङ्गत्वं गम्यते ( नेयमित्यादि ) ततः किमित्यत्राह ( यदेवेति ) ॥ ४ ॥

७ भावप्रकाशिका ७

साधनत्वमात्रप्रतिपादनेऽपि समाहितसाधनत्वरूपशेषत्वाप्रतिपादनादित्याशङ्कय श्रुतिमात्रस्य तत्राप्रमाणत्वेऽपि श्रुतिलिङ्गादिसहितचोदनायाः प्रमाणत्वं सम्भ-वति 'कर्तुस्समीहितं येन सिद्ध्यत्यङ्गं तदुच्यते । प्रमाणञ्च विधिस्तत्र श्रुतिलि-ङ्गादिसंयुतः' इत्यभियुक्तोक्तेरित्यभिप्रयन्नाह ( आगमप्रमाणस्य श्रुतिलिङ्गाद-योऽनुग्राहका इति ) श्रुतिलिङ्गाद्यनुगृहीतस्य विधेः प्रमाणत्वमित्यर्थः ॥ ७ ॥

( नेयं श्रुतिरिति ) विद्यापदश्रुतिरित्यर्थः, नतु प्रकृता तृतीया श्रुतिरिति भ्रमि-तव्यम्, ( विद्यामात्रविषया हीयं श्रुतिरिति ) य एव वन्हिमान्देशः स एव धूमवान् इतिवत् , यदेवेति सर्वनामावधारणाभ्यां हि व्याप्तिरवगम्यते, यदेव कर्म करोति यद्यत्कर्म करोतीत्यर्थः, ततश्च कर्ममात्रे विद्या साधनत्वेन विधीयते, ततश्च विद्या-याः सर्वकर्माङ्गत्वं विद्याशब्दस्योद्गीथविद्यामात्रविषयत्वेनाऽवकल्पत इति विद्या-शब्दस्य सर्वविद्याविषयकत्वमेव वक्तव्यमिति, अतोऽपि सर्वविषयत्वं विद्याशब्द-स्येति द्रष्टव्यम् ॥ ७ ॥

## समन्वारम्भणात् ॥ ५ ॥

"तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणोः साहित्यं च दृश्यते । साहित्यं चोक्तेन न्यायेन विद्यायाः कर्माङ्गत्वे सत्येव भवति ॥ ५ ॥

## तद्वतो विधानात् ॥ ६ ॥

विद्यावतः कर्मविधानात् विद्या कर्माङ्गमित्यवगम्यते– "आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे"

* श्रुतप्रकाशिका *

समन्वारम्भणात् ॥ ५ ॥ अन्वारम्भणम्–स्पर्शः, तेन सम्बन्धो विवक्षितः, साहित्यं कर्मणो विद्याङ्गत्वेऽप्युपपद्यत इत्यत्राह ( उक्तेन न्यायेनेति ) कर्तुरात्मनः कर्मशेषत्वमाचारदर्शनमित्यादिकं न्यायशब्देन विवक्षितम् ॥ ५ ॥

तद्वतो विधानात् ॥ ६ ॥ अतिशेषेण– निःशेषमित्यर्थः, अध्ययन-

❀ भावप्रकाशिका ❀

'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाऽभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधत्' इति छान्दोग्ये श्रूयते, आचार्यकुलवासी सन् वेदमधीत्य यथाविधानं– स्मृत्युक्तनियमैर्युक्त इत्यर्थः । स्मृत्युक्तनियमेष्वपि गुरुशुश्रूषायाः प्राधान्यमुच्यते— गुरोः कर्मातिशेषेणेति, कर्मानवरुद्धकालेन वेदमधीत्येत्यन्वयः, अभिसमावृत्य–गुरुकुलान्निवृत्येत्यर्थः, कुटुम्बे– गार्हस्थ्याश्रमे स्थित्वा, गार्हस्थ्येऽप्यविस्मरणार्थं वेदाभ्यासं कुर्वन्नेव धार्मिकान्विदधत्– पुत्रशिष्यादीन् धर्मनिरतान् कुर्वन् धर्मोपयुक्तानर्थान् सम्पादयन्निति वा, एवमर्थज्ञानपर्यन्ताध्ययनवतः कर्मसु निरतेर्विधानात् अर्थज्ञानं कर्माङ्गमित्येवं परे वर्णयन्ति । आचार्यास्तु 'भुक्त्वा सानन्दमास्ते' इत्यादौ सानन्दमित्यस्यान्वेतुं योग्यत्वेऽपि न पूर्वनिर्दिष्टेन क्त्वाप्रत्ययान्तेनाऽन्वयः, अपि तु उत्तरेणास्त इत्यनेनैवेत्येवं दर्शनात्, यथाविधानं गुरोः कर्मातिशेषेणेत्यस्य न पूर्वेणाधीत्येत्यनेनाऽन्वयः, व्यवहितान्वयदोष-

इत्यादौ । "वेदमधीत्य" इत्यध्ययनवतः कर्माणि विदध-दर्थावबोधपर्यन्ताध्ययनवत एव विदधाति । अर्थावबोधपर्यन्तं ह्यध्ययनमिति स्थापितम् । अतो

* श्रुतप्रकाशिका *

वतः कर्माणि विदधीत, ततः किं ज्ञानस्य कर्माङ्गत्व इत्यत्राह ( अर्थावबोधपर्यन्ताध्ययनवत एवेति ) अर्थज्ञानपर्यन्तत्वं कथमित्यत्राह ( अर्थावबोधेति ) स्थापितम्— भाट्टैः प्राभाकरैश्च श्रुतेरविवक्षितार्थत्वादिदोषपरिहारा-

छ भावप्रकाशिका छ

प्रसङ्गश्च, अतो 'ब्रह्मचारी वेदमधीत्य उपेत्याऽऽहृत्य गुरवेऽनुज्ञातो दारान्कुर्वीत विद्यान्ते गुरोरर्थेन निमन्त्र्य कृत्वाऽनुज्ञातस्य वा स्नान'मित्यादिस्मृत्यनुसारात् 'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः' इत्यादिश्रुत्यनुसाराच्च गुरोर्यथाविधानमाचार्यस्य नियमनमनतिलङ्घ्य तस्य कर्तव्यं कर्मातिशेषेण— अशेषेणाऽभिसमावृत्य निर्वर्त्य इत्येवार्थो वक्तव्य इत्यभिप्रेत्य निश्शेषमिति व्याचक्रुः, अतिशेषेणेत्यत्र अतिरर्थाभावे वर्तते, अतिमर्यादोऽमर्याद इत्यर्थदर्शनात् । नच 'गुरोः कर्मातिशेषेण जपे'दिति स्मृत्यैकरूप्यात्, तद्वदेव कर्मातिशेषशब्दस्यापि कर्मातिशिष्टकालपरत्वं वक्तव्यमिति वाच्यम्, शेषातिशेषशब्दयोः भिन्नार्थत्वेन तत्प्रत्यभिज्ञाभावात् तस्य नैष्ठिकब्रह्मचारिविषयत्वात् अस्मदुक्तार्थस्य स्मृत्यनुगुणाचार्योक्तार्थत्वमेव वक्तुं युक्तम् ( अविवक्षितार्थत्वादीति ) तात्पर्यासिद्ध्यादिदोषपरिहारार्थमित्यर्थः, अर्थावबोधमुद्दिश्य शब्दोच्चारणे हि लोके वाक्यानां तात्पर्यमवगम्य तन्निर्वाहाय मुख्यार्थासम्भवे लक्षणादिकं कल्प्यते, नतूच्चारणमात्रेण, अत एव गौरश्वः पुरुषो हस्तीति पदानामुच्चारणमात्रेण लक्षणा न कल्प्यते, यदा विशिष्टार्थबोधमुद्दिश्य तेषमुच्चारणमिति तात्पर्यमवगम्यते, तदेव तन्निर्वाहार्थम्, अयं गौर्वलीवर्दः अश्वो वेगवान् पुरुषो नियतचेष्टः हस्ती महाबलः—इत्यश्वादिपदानां लक्षणाध्याहारादिकं कल्प्यते, एवञ्च वेदवाक्यानामर्थावबोधमुद्दिश्य उच्चारणाभावे तात्पर्यासिद्ध्या तन्निर्वाहार्थं लक्षणागौणवृत्त्यध्याहारव्यवधारणकल्पनोच्छेददोषप्रसङ्गाद्वश्यं वेदेऽप्यर्थावबोधमुद्दिश्य उच्चारणस्य वक्तव्यत्वात् वेदे च लोक इव रागप्राप्तस्यार्थावबोधोद्देश्यकोच्चारणस्या-

ब्रह्मविद्याऽपि कर्मसु विनियुक्तेति न पृथक्फलायाः वकल्पते ॥ ६ ॥

नियमात् ॥ ७ ॥

इतश्च न विद्यातः पुरुषार्थः । "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इत्यात्मविदः पुरुषायुषस्य सर्वस्य कर्मसु नियमेन विनियोगात् कर्मण एव फलमित्यवगम्यते, विद्या तु कर्माङ्गम् ॥ ७ ॥

एवं प्राप्ते प्रचक्ष्महे—

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

---

* श्रुतप्रकाशिका *

र्थमित्यर्थः, 'स्नात्वा जुहुया' दित्युक्ते हि होमः स्नानाङ्गकः स्यात् , तथेदमपीति भावः । न हि क्रतुज्ञानस्य तदनुष्ठानमङ्गम्, अपि त्वनुष्ठानस्यानुष्ठेयज्ञानमङ्गं स्यात्, तद्वदिहापि ॥ ६ ॥

नियमात् ॥ ७ ॥ कृत्स्नस्यायुषः क्रतुशेषत्वान्मध्ये प्राप्तमन्यत्सर्वं तच्छेषभूतमित्यर्थः । इमानि पूर्वपक्षसूत्राणि ॥ ७ ॥

उत्तरसूत्रमवतारयति ( एवं प्राप्त इति )

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥ कथं विद्यातः

ॐ भावप्रकाशिका ॐ

भावात् विधिप्रयुक्तमेव तदाश्रयणीयम् , विधिश्चाध्ययनविधेरन्यो न दृश्यत इति तेनैवाऽर्थावबोधमुद्दिश्य गुरुमुखोच्चारणानूच्चारणरूपमध्ययनं विधीयत इत्यकामेनापि स्वीकार्यम्, तत्सगानार्थत्वात् 'आचार्यकुलाद्वेदमधीत्य' इत्यत्रापि तथोक्तमिति भावः ( स्नात्वा जुहुयादिति ) क्त्वाप्रत्ययेन सति सम्भवे कर्तृकारकैक्यावगमात् तस्य च प्रयोगैक्य एव सत्वात् प्रयोगैक्यस्य चाङ्गाङ्गिभावमन्तरेणानुपपत्तेः, कालार्थसंयोगस्य सति गत्यन्तरे अयुक्तत्वाच्चेति भावः । ननु अङ्गाङ्गिभावे सत्यपि औपनिषदब्रह्मविद्याया एवाङ्गित्वे किं न स्यादित्यत आह ( नहि क्रतुज्ञानस्येति ) पूर्वभागार्थज्ञानतुल्यत्वादौपनिषदार्थज्ञानस्येत्यर्थः ॥ ६ ॥

तुशब्दात्पक्षो व्यावृत्तः; विद्यात एव पुरुषार्थः, कुतः? अधिकोपदेशात्- कर्मसु कर्तुर्जीवाद्धेयप्रत्यनीकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरत्वेनाधिकस्यार्थान्तरभूतस्य परस्य ब्रह्मणो वेद्यतयोपदेशात् भगवतो बादरायणस्य विद्यातः फलमित्येवमेव मतम्। लिङ्गानि तिष्ठन्तु, वेद्यतयोपदेशस्तु तावत्कर्तुः प्रत्यगात्मनोऽधिकस्यैव। कथं? तद्दर्शनात्— प्रत्यगात्मन्यशुद्धे शुद्धेऽप्यसम्भावनीयानन्तगुणाकरस्य वेद्यस्य निरस्तनिखिलहेयगन्धस्य स्वसङ्कल्पकृतजगदुदयविभवलयलीलस्य सर्वज्ञस्य सर्वशक्तेर्वाङ्मनसापरिच्छेद्यानन्दस्य जीवाधिपस्य कृत्स्नस्य प्रशासितुः परस्य ब्रह्मणो वेदनोपदेशवाक्येषु दर्शनात्। "अपहतपाप्मा विजरो विमृत्युर्विशोको विजि-

---

* श्रुतप्रकाशिका *

फलम्, विद्यायाः कर्माङ्गत्वे लिङ्गानि दर्शितानि हीत्यत्राह (लिङ्गानितिष्ठन्त्विति) तद्दर्शनादिति सूत्रखण्डोपादानम्, उपासनवाक्योपयोगित्वात् स्वरूपपरवाक्यानां वेदनोपदेशवाक्येष्वित्युक्तम्, स्वरूपपरवाक्योक्तगुणानामुपासनापेक्षितत्वादित्यर्थः, शुद्ध्यशुद्ध्युभयावस्थजीवस्यासम्भावनीयानन्तकल्याणगुणा उच्यन्ते- परस्य ब्रह्मण इत्यन्तेन, उक्तगुणविशिष्टत्वे प्रमाणमाह (अपहतपाप्मेति) जुहूवत्कर्तुरात्मनः प्रत्यभिज्ञाने सति हि तद्द्वारा

ॐ भावप्रकाशिका ॐ

ननु उपात्तेषु वेदान्तवाक्येषु 'यस्सर्वज्ञः' इत्यादीनां स्वरूपोपदेशपराणां सत्वेन वेदनोपदेशपरेष्विति भाष्ये कथमुच्यत इत्यत आह (उपासनवाक्योपयोगित्वादित्यादिना) ॥ ७ ॥

घत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" "यः सर्वज्ञः सर्ववित्" "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" "स एको ब्रह्मण आनन्दः", "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति", "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरणः" "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" ("एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः") "भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चमः" इत्यादिषु। तस्माद्वेदनोपदेशशब्देषु कर्तुः प्रत्यगात्मनः खद्योतकल्पस्याविद्यादिहेयसम्बन्धयोग्यस्य गन्धोऽपि नास्तीति परमपुरुषविषयाया विद्यायास्तत्प्राप्तिरूपप्रभूतत्वं तत्र तत्र श्रूयमाणं फलमिति विद्यातः पुरुषार्थ इति सुष्ठूक्तम्॥ ८॥

---

* श्रुतप्रकाशिका *

विद्यायाः कर्माङ्गत्वम्, वेदनोपदेशवाक्येषु जीवविलक्षणस्य प्रतिपाद्यमानत्वेन जीवप्रत्यभिज्ञानाभावान्न तद्द्वारा विद्यायाः कर्माङ्गत्वमिति श्रूयमाणं फलमपि नार्थवादरूपम्, तस्माद्विद्यायाः पृथक्फलसाधनत्वेन न क्रत्वर्थत्वम्, किन्तु पुरुषार्थत्वमेवेत्यर्थः ॥ ८ ॥

लिङ्गान्यपि निरस्यन्ते—

तुल्यं तु दर्शनम् ॥ ९ ॥

यदुक्तम्—ब्रह्मविदां कर्मानुष्ठानदर्शनाद्विद्या कर्माङ्गमिति, तन्न विद्याया अनङ्गत्वेऽपि तुल्यं दर्शनम्, ब्रह्मविदां कर्मानुष्ठानदर्शनमनैकान्तिकमित्यर्थः। अननुष्ठानस्यापि दर्शनात्। दृश्यते हि ब्रह्मविदां कर्मत्यागः "ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इत्यादौ। अतो ब्रह्मविदां कर्मत्यागदर्शनान्न विद्या कर्माङ्गम्। कथमिदमुपपद्यते— ब्रह्मविदां कर्मानुष्ठानमननुष्ठानञ्च; फलाभिसन्धिरहितस्य यज्ञादिकर्मणो ब्रह्मविद्याङ्गत्वात्। तथाविधस्य कर्मणोऽनुष्ठानदर्शनमुपपद्यते। वक्ष्यति च "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति, फलार्थस्य तस्यैव यज्ञादेः कर्मणो मोक्षैकफलब्रह्म-

* श्रुतप्रकाशिका *

उत्तरसूत्राणां कृत्यमाह— (लिङ्गान्यपीति)।

तुल्यं तु दर्शनम् ॥ ९ ॥ अनैकान्तिकशब्देनानियतत्वमुच्यते, किमर्थाः— किं प्रयोजनाः, अङ्गित्वे ह्यननुष्ठानं नोपपद्यत इति भावः। अनुष्ठानाननुष्ठाने व्याहते— इत्यभिप्रायेणाह (कथमिति) परिहरति (फलाभिसन्धीति) भवत्पक्ष एवेयं व्याहतिरित्याह (विद्याया इति) ब्रह्म-

७ भावप्रकाशिका ७

(अङ्गित्वे ह्यननुष्ठानं नोपपद्यत इति) ननु अङ्गत्वेप्यननुष्ठानं नोपपद्यत एव, यद्विचानभिसंहितफलकर्मण एवाङ्गत्वं न तस्याऽनुष्ठानमिति, तर्हि तस्यैवाङ्गित्वमप्यस्तु इति चेत्, तथा पूर्वपक्षिणोऽनभिप्रेतत्वादिति भावः ॥ ७ ॥

विद्याविरोधित्वात्तस्याननुष्ठानदर्शनमुपपन्नतरम् । विद्यायाः कर्माङ्गत्वे कर्मत्यागः कथमपि नोपपद्यते ॥ ९ ॥

यदुक्तम्– श्रुत्यैव विद्यायाः कर्माङ्गत्वमवगम्यत इति; तत्राह–

असार्वत्रिकी ॥ १० ॥

न सर्वविद्याविषयेयं श्रुतिः, अपि तूद्गीथविद्याविषयैव "यदेव विद्यया करोति" इति यच्छब्दस्यानिर्धारितविशेषस्य "उद्गीथमुपासीत" इति प्रस्तुतोद्गीथविशेषनिष्ठत्वात् । न हि यत्करोति, तद्वि-

---

* श्रुतप्रकाशिका *

विद्याफलानामर्थवादत्वेन मोक्षाख्यफलानभ्युपगमात् मोक्षैकफलं कर्मानुष्ठेयम्, त्रिवर्गफलं त्वननुष्ठेयमिति विभागानुपपत्त्या व्याहतिस्तवैवेत्यर्थः ॥ ९ ॥

अनन्तरसूत्रशङ्कामाह ( यदुक्तमिति )

असार्वत्रिकी ॥ १० ॥ प्रकरणाच्छ्रुतिर्बलीयसीत्युक्तमिति शङ्कायामेकपदसामर्थ्यं हि श्रुतिः, अत्र च सामर्थ्यं नास्तीत्यभिप्रायेणाह ( न हीति ) यत्करोति तद्विद्ययेत्युक्ते विद्याया अङ्गत्वं विहितं स्यात्, न च तथान्वयः, यदेव विद्यया करोति, तदेव वीर्यवत्तरमित्यन्वयः, तथा

* भावप्रकाशिका *

भाष्ये– प्रस्तुतोद्गीथविशेषनिष्ठत्वादिति, विशेष्यत इति विशेषः, उद्गीथशब्दः उद्गीथविद्यापरः, ततश्च यच्छब्दस्य उद्गीथविद्याक्रियमाणसोमयागनिष्ठत्वादित्यर्थः, केचित्तु उद्गीथाख्यकर्मपरत्वेऽपि न दोषः, प्रबलकर्मान्तराप्रतिबद्धफलजनकत्वरूपं वीर्यवत्तरत्वमुद्गीथेन सम्भवति, उद्गीथस्याङ्गत्वेन फलजनकत्वाप्रसक्तेरिति वाच्यम्, करणानुग्रहस्यैवाङ्गकार्यत्वेन तादृशफले वीर्यवत्तरत्वस्य प्रबलकर्मान्तराप्रतिबद्धस्य सम्भवादित्याहुः, ( एकपदसामर्थ्यं हि श्रुतिरिति ) अत्रैकपदमसहायवाचि 'अभिधातुं पदेऽन्यस्मिन् निरपेक्षो रवः श्रुतिः' इत्यभियुक्तोक्तेः स्वत एव निश्चयसमर्थत्वमिति यावत्, इयांस्तु विशेषः, सम-

द्ययेति सम्बध्यते, यदेव विद्यया करोति तदेव वीर्यवत्तरमिति विद्यया क्रियमाणं यच्छब्देन निर्दिश्य तस्य हि वीर्य्यवत्तरत्वमुच्यते ॥ १० ॥

यच्चेदमुक्तं "तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणोः साहित्यदर्शनाद्विद्या कर्माङ्गम्- इति; तत्राह—

विभागः शतवत् ॥ ११ ॥

"तं विद्याकर्मणी समन्वारभेते" इत्यत्रोक्तेन न्यायेन विद्याकर्मणोर्भिन्नफलत्वाद्विद्या स्वस्मै फलाय समन्वारभते, कर्म च स्वस्मै फलायेति विभागो

---

* श्रुतप्रकाशिका *

सति यच्छब्दानूदितस्य विद्यया क्रियमाणस्य प्रापकप्रमाणाकाङ्क्षायां प्रकरणसन्निहितोद्गीथविद्या 'यदेव विद्यया' इति विद्याशब्दं सङ्कोचयति, अतोऽनुवादरूपत्वात् प्रमाणान्तरसापेक्षत्वेन स्वतोऽर्थनिश्चयसामर्थ्याभावात् विद्ययेति पदमेकपदसामर्थ्यरूपा श्रुतिर्न भवतीत्यर्थः ॥ १० ॥

अनन्तरसूत्रस्य शङ्कामाह ( यच्चेदमिति )

विभागः शतवत् ॥ ११ ॥ समन्वारम्भणश्रुतिः सांसारिकफलविद्या कर्मविषया, विद्या स्वफलप्रदानायाऽन्वेति कर्म च स्वफलप्रदानायेत्यर्थः, ब्रह्मविद्यातदङ्गकर्मविषया वा स्यादियं श्रुतिः, विद्या 'नेहाभिक्रमनाशोऽस्ती'ति

* भावप्रकाशिका *

भिव्याहृतपदान्तरसापेक्षत्वेन श्रुतित्वमित्यध्वरमीमांसकाः, सङ्कोचकाभावात् प्रापकप्रमाणान्तरनैरपेक्ष्यमपि श्रुतिकोटौ निविशत इत्याचार्याणामभिप्रायः, अत एवानुवादस्सन्निहितपरामर्शीति वाचोयुक्तिर्युक्तिमती, अनुवादस्याऽपि श्रुतिरूपत्वे सन्निध्यनुरोधेन सङ्कोचस्य क्लेशेन निर्वाह्यत्वात्। केचित्तु श्रुतिर्न सम्भवतीत्यर्थ इत्यस्य सति सम्भवे अनुवादस्य सन्निहितगामित्वात् प्रकृताप्रकृतग्राहिणी श्रुतिर्न सम्भवतीत्यर्थ इति व्याचक्षते ॥ ९ ॥

द्रष्टव्यः । शतवत्- यथा चैत्ररत्नविक्रयिणं शतद्वयमन्वेतीत्युक्ते चैत्रार्थं शतम्, रत्नार्थं शतमिति विभागः प्रतीयते ; तथेहापि ॥ ११ ॥

अध्ययनमात्रवतः ॥ १२ ॥

यदुक्तं-विद्यावतः कर्मविधानाद्विद्या कर्माङ्गमिति, नैतद्युक्तम्, 'वेदमधीत्य' इति अध्ययनमात्रवतो विधानात् । न चाध्ययनविधिरेवार्थावबोधे प्रवर्त्तयति, आधानवदध्ययनस्याक्षरराशिग्रहणमात्रे पर्य्यवसानात् । गृहीतस्य च स्वाध्यायस्य फलवत्क-

* श्रुतप्रकाशिका *

न्यायात् प्रारब्धावसाने मुक्तिदानायान्वेति, कर्म च जन्मान्तरेऽपि विद्योत्पादनायाऽन्वेतीत्यर्थः ॥ ११ ॥

अध्ययनमात्रवतः ॥ १२ ॥ ( आधानवदिति ) 'अग्नीनादधीते'त्यत्राधानेनाग्नेस्सम्पाद्यत्वमात्रमुक्तं न तूत्तरक्रतुविनियोगः, अग्निशब्दस्य तावन्मात्रे प्रसिद्धिस्वारस्यात्, तथाऽत्रापीत्यर्थः, एवं शब्दस्वारस्यमुपपादितम् । अथार्थानुपपत्तिः परिह्रियते ( गृहीतस्य चेति ) प्रवर्त्तकाभावान्मीमांसाया

छ भावप्रकाशिका छ

( अग्निशब्दस्य तावन्मात्रे प्रसिद्धिस्वारस्यादिति ) जुह्वादिशब्दवत् क्रत्वपूर्वीयत्वस्यानादरणीयत्वात्, अयम्भावः, क्रत्वपूर्वीयत्वं हि न शक्त्या उपस्थाप्यम्, अपि तु लक्षणया, सा च मुख्यार्थानुपपत्तौ सत्यामवकल्पते, 'यस्य पर्णमयी जुहूर्भवति' इत्यत्र तु जुहूशब्दस्य जुह्वाकृतिमात्रे पर्यवसायित्वेन तस्याः पर्णतामन्तरेणापि सम्भवात् जुहूस्वरूपमात्रपर्यवसितपर्णतया आनर्थक्यप्रसङ्गेन जुहूपदस्य क्रत्वपूर्वीयलक्षणाश्रयणेऽपि अग्निशब्दस्य 'नक्तं गार्हपत्यमादधाति' इत्यादिवाक्यपर्यालोचनया संस्कारविशेषविशिष्टवचनतया तावन्मात्रपर्यवसितत्वेपि आनर्थक्यप्रसङ्गेन जुह्वादिवत् क्रत्वपूर्वीयलक्षणाया अनावश्यकतया क्रतुपर्यन्तत्वाभावादित्यर्थः ( शब्दस्वारस्यमिति ) तव्यप्रत्ययस्वारस्यमित्यर्थः,

र्मावबोधित्वदर्शनात्तन्निर्णयफले तदर्थविचारे पुरुषः स्वयमेव प्रवर्त्तते । ततः कर्मार्थी कर्मज्ञाने प्रवर्त्तते, मोक्षार्थी च ब्रह्मज्ञाने–इति न विद्या कर्मा-

* श्रुतप्रकाशिका *

अनारम्भणीयत्वं ह्यनुपपत्तिः , साऽपि रागतः प्रवृत्त्या परिह्रियत इत्यर्थः, श्रुतेरविवक्षितार्थत्वमपि परिहृतं भवति, अध्ययनविधेः प्रयोजनपर्यवसायित्वमपि परम्परयोपपद्यते, अर्थज्ञानपर्यन्तत्वपक्षवदिति कर्मावबोधित्वदर्शनादित्यापातप्रतीतिरुच्यते, तत्र कर्मोपक्रमत्वात् प्रथमं कर्मविचार उपपद्यते, आपातप्रतीत्या प्रवृत्तावपि 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इत्यादिभिर्व्याकुलतया न केवलं ब्रह्मविचार एव, कर्मविचारोऽपि कर्त्तव्य एव, अध्ययनविधेरर्थज्ञानपर्यन्तत्वे 'वेदमधीत्य स्नास्य' न्नित्यध्ययनानन्तरं समावर्त्तनस्मृतेर्बाधितत्वान्मीमांसाश्रवणस्यावसरः स्यात्, रागतः प्राप्तौ नावसर इति चेत्–न, क्त्वाप्रत्ययः समानकर्तृकत्वपूर्वकालत्वमात्रपरः , न त्वानन्तर्यपरः, अतो न विरोधः, आनन्तर्येऽपि स्वोपयोग्यर्थज्ञानस्यावसरप्रद एव विधिः, यथा क्रतुविधिरर्थार्जनादेः, न केवलं स्मृतिसिद्धा समावृत्तिः, श्रुतिसिद्धा

ॐ भावप्रकाशिका ॐ

तव्यप्रत्ययेन स्वाध्यायशब्दवाच्यवेदाख्याक्षरराशेः शेषित्वावगमादिति भावः । ( वेदमधीत्य स्नास्यन्निति ) यद्यपि समावर्तनाङ्गकलापस्यैव अध्ययनानन्तर्यं शब्दार्थः, ननु समावर्तनस्य, यदि क्त्वाप्रत्ययेन स्नानस्याऽध्ययनानन्तर्यं प्रतिपिपादयिषितं स्यात्, तदा पक्त्वा भोक्ष्यमाणः स्नाति– इत्यादौ स्नानस्य पाकपूर्वभावित्ववत् गोष्ठप्रवेशादीनामध्ययनप्राग्भावित्वस्याऽपि प्रसङ्गात्, तथापि समावर्तनाङ्गानामानन्तर्ये समावर्तनस्याऽप्यानन्तर्यमिति भावः ( स्वोपयोग्यर्थज्ञानस्येति ) स्नानोपयोग्यर्थज्ञानस्येत्यर्थः , नच तावन्मात्रस्यैवाऽवसरप्रदः स्यात्, नान्यस्येति वाच्यम्, तुल्यन्यायतया स्नानानन्तरमेव दारपरिग्रहस्य कर्तव्यत्वेन दारपरिग्रहमारभ्य चाग्निहोत्रादेर्नैरन्तर्येण अनुष्ठेयतया तस्याप्यवसरप्रदत्वसम्भवादित्यर्थः, ननु समावर्तनदारपरिग्रहादेरप्यर्थज्ञानसाध्यतया तस्य

ङ्गम् । यद्यप्यध्ययनविधिरेवार्थावबोधे प्रवर्त्तयति, तथाऽपि न विद्या कर्माङ्गम्, अर्थज्ञानादर्थान्तर-

* श्रुतप्रकाशिका *

च 'अधीत्याभिसमावृत्य' इति हि श्रूयते, अतो नाध्ययनविधिर्बाधते । किञ्च श्रुतिस्मृत्योर्विरोध एव नास्ति, येन बाध्यबाधकभावः स्यात्, उभयत्राप्यध्ययनशब्दस्यार्थज्ञानपर्यन्तत्वे वा अक्षरराशिग्रहणपर्यन्तत्वे वा तुल्यार्थत्वात्, समावृत्तस्यापि मीमांसाश्रवणावसरः श्रावयितुरिव स्यादेव, यावदर्थज्ञानं हितैषिवचनादनुष्ठानमप्युपपद्यते, यथा ब्रह्मचर्ये, न च तावता मीमांसानैरपेक्ष्यं हितैषिणामाप्तत्वनिश्चयार्थं स्वयं शिष्याणामुपपादनार्थं च श्रवणोपपत्तेः, न चाध्ययनजन्यज्ञाननिरपेक्षं हितैषिवचनादनुष्ठानेऽपशूद्राधिकरणविरोधः, हितैषिवचनादनुष्ठानेऽपि मन्त्रब्राह्मणविशेषाणां कृत्स्नवेदस्य च जप्यत्वात् तस्य चाध्ययनेनैव सम्पाद्यत्वात्, अध्ययनस्य चोपनयनाङ्गकत्वादुपनयनस्य च त्रैवर्णिकाधिकारत्वाच्च शूद्रादेरुपनयनानधिकारादनुष्ठानानुपपत्तेः, 'न शूद्राय मतिं दद्यात्' 'न चास्योपादिशेद्धर्मम्' इति निषेधाच्च शूद्रादेर्नोपदिशन्ति, अतोऽध्ययनविधेरर्थज्ञानपर्यन्तत्वाभावादध्ययनवतः कर्मविधानेऽप्यर्थज्ञानस्य कर्मविधिशेषत्वाभावान्न विद्या कर्माङ्गमित्यर्थः । अर्थज्ञानपर्यन्तत्वं विधेरभ्युपगम्य परिहरति ( यद्यपीति ) अर्थज्ञानादर्थान्तरत्वात्— अध्ययन-

* भावप्रकाशिका *

च मीमांसामन्तरेण असाध्यत्वात्, अध्ययनशब्दस्य अर्थज्ञानपरत्वाभावे समावर्तनदारपरिग्रहादेरप्यनिष्पत्तिप्रसङ्गादित्यत आह ( यावदर्थज्ञानमिति ) 'न शूद्राय मतिं दद्यात्' इत्यध्ययनस्यार्थज्ञानपर्यन्तत्वपक्षेऽपि 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययननियमस्य स्वशाखामात्रविषयतया स्वीयेतरशाखाविहिताङ्गजाते तदध्ययनविधिमन्तरेणैव तत्तदध्येतृभ्यो गृहीत्वानुष्ठानं युक्तमिति त्रैवर्णिकेष्वभ्युपेतत्वात्, शूद्रं प्रति सर्वासामपि शाखानां स्वीयेतरत्वात् तदध्ययनाभावेपि तदध्येतृभ्यो गृहीत्वा कर्मानुष्ठानं को वारयेत्, ननु शूद्रस्य क्रत्वनुष्ठानापेक्षितं ज्ञानं कात्स्न्र्येनाक्षेप्यम्, त्रैवर्णिकानान्तु स्वशाखेतरशाखाविहिताङ्गमात्रविषयमित्याक्षेपलाघवात् क्रतुविषयस्तानेवाऽधिकुर्वन्ति, न शूद्र-

त्वाद्विद्यायाः । यथा ज्योतिष्टोमादिकर्मस्वरूपविज्ञाना-त्फलसाधनभूतं कर्मानुष्ठानमर्थान्तरम्, तथाऽर्थ-ज्ञानरूपाद्ब्रह्मस्वरूपविज्ञानादर्थान्तरमेव ध्यानोपा-सनादिशब्दवाच्या पुरुषार्थसाधनभूता विद्येति न तस्याः कर्मसम्बन्धगन्धो विद्यते ॥ १२ ॥

नाविशेषात् ॥ १३ ॥

यच्चोक्तं "कुर्वन्नेवेह कर्माणि" इत्यात्मविदं ज्ञाना-

---

* श्रुतप्रकाशिका *

शब्दवाच्यव्यतिरिक्तत्वाद्विद्याया इत्यर्थः । न ह्यर्थज्ञानस्य ज्योतिष्टोमादिकर्म शेषभूतं, विपरीतं हि तत्, एवं शास्त्रजन्यज्ञानमुपासनाख्याया विद्याया शेषभूत-मित्यर्थः ॥ १२ ॥

नाविशेषात् ॥ १३ ॥ पूर्वपक्षिणोक्तस्य कर्मण्येवेत्यादिवचनस्यापि विद्या-

ঌ भावप्रकाशिका ঌ

गिति चेत्, एवं तर्हि यस्य कर्मणो यस्यां शाखायां विधानं 'भूयस्त्वेनोभय-श्रुति' इति न्यायेन प्रधानस्याऽपि विधानम्, शाखान्तरे तु किञ्चिदङ्गविधानम्, तत्र कर्मणि तच्छाखाध्यायिनामेवाऽधिकारः स्यात् ज्ञानाक्षेपलाघवात्, नतु शाखान्तराध्यायिनाम्, यस्य कर्मणः तदङ्गस्य कस्यचित् यस्यां शाखायां विधानं नास्ति, किन्तु शाखान्तर एव साङ्गस्य तस्य विधानम्, तत्र कर्मणि तच्छाखाध्यायिनामधिकारो न स्यात्, शूद्रवत्तेषां तदनुष्ठानोपयोगिज्ञानस्य कार्त्स्न्येनाऽऽक्षेप्यत्वात्, तस्मात् त्रैवर्णिकानामपि ज्ञानाक्षेपस्य सम्प्रतिपन्न-तया तद्वदेव शूद्रस्यापि कर्मानुष्ठानोपयोगिज्ञानाक्षेपसम्भवात् तत्तद्वेद-विद्भ्योऽवगत्य कर्मानुष्ठानमुपपद्यत एवेति अध्ययनस्य अर्थज्ञानपर्यन्तत्वे शूद्राधिकारस्य अनिवार्यतया 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इत्यादिनिषेध-विधिरेव शरणीकरणीय इति भावः, (अध्ययनशब्दवाच्यव्यतिरिक्तत्वाद्वि-द्येति) अध्ययनफलव्यतिरिक्तत्वात् विद्याया इत्यर्थः ॥ ঌ ॥

इत्यावृत्त्य यावज्जीवं कर्मानुष्ठाने नियमयतीति; तन्नोपपद्यते, अविशेषात्— न ह्ययं नियमः फलसाधनभूतस्वतन्त्रकर्मविषय इति विशेषहेतुरस्ति, विद्याङ्गभूतकर्मविषयतयाऽप्युपपत्तेः । "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इति च विदुषस्त्वाश्रयाणादुपासनस्यानुवर्त्तमानत्वात् ॥ १३ ॥

एवमर्थस्वाभाव्येन चोद्यं परिहृत्य "कुर्वन्नेवेह कर्माणि" इत्यस्यार्थमाह—

स्तुतये ऽनुमतिर्वा ॥ १४ ॥

वाशब्दोऽवधारणार्थः, "ईशा वास्यमिदं सर्वम्" इति विद्याप्रकरणाद्विद्यास्तुतये सर्वदा कर्मानुष्ठानानुमतिरियम् । विद्यामाहात्म्यात् सर्वदा कर्म कुर्वन्नपि न लिप्यते कर्मभिरिति हि विद्या स्तुता भवति । वाक्यशेषश्चैवमेव दर्शयति— "एवं त्वयि

---

* श्रुतप्रकाशिका *

ङ्गभूतकर्मविषयत्वमभिप्रेत्याह ( कर्मणैव हीति ) तस्य यावज्जीवमनुवृत्तिरङ्गिन उपासनस्यानुवर्त्तमानत्वादुपपन्नेत्याह ( विदुषस्त्विति ) ॥ १३ ॥

उत्तरसूत्रसङ्गतिमाह ( एवमिति ) अर्थस्वाभाव्यं—विद्याया अर्थज्ञानादर्थान्तरत्वं कर्मेतिकर्त्तव्यताकत्वं च ।

स्तुतयोऽनुमतिर्वा ॥ १४ ॥ 'ईशा वास्य'मिति ईट्छब्दस्तृतीयान्तः— ईशा, तेन वास्यम् । यद्वा— ईशेन आवास्यम्, ईश्वरपरतन्त्रमित्यर्थः । नरे— न रमत इति नरः, निस्सङ्गः, तस्मिन् इतोऽन्यथा नास्ति— नरे त्वयि न कर्म लिप्यत इतीतोऽन्यथा नास्ति, इदमेव तत्त्वं न स्तुतिमात्रमित्यर्थः ॥ १४ ॥

* भावप्रकाशिका *

( अर्थज्ञानादर्थान्तरत्वं कर्मेतिकर्तव्यताकत्वञ्चेति ) कर्माङ्गत्वानर्हवाक्या-

नान्यथेतोऽस्ति न कर्म लिप्यते नरे" इति। अतो न कर्माङ्गं विद्या ॥ १४ ॥

कामकारेण चैके ॥ १५ ॥

अपि चैवमेके शाखिनः कामकारेण ब्रह्मविद्यानिष्ठस्य गार्हस्थ्यत्यागमधीयते [1]"किं प्रजया करिष्यामो येषां नोयमात्माऽयं लोकः" इति विदुषो विरक्तस्य कामकारेण गार्हस्थ्यकर्मत्यागं ब्रुवदिदं वचनं ब्रह्मविद्यायाः कर्मानङ्गत्वं दर्शयति। यज्ञादिकर्माङ्गत्वे हि विद्याया विद्यानिष्ठस्य कामकारेण गार्हस्थ्यत्यागो न सम्भवति। अतो न विद्या कर्माङ्गम् ॥ १५ ॥

उपमर्दं च ॥ १६ ॥

पुण्यापुण्यरूपस्य समस्तसांसारिकदुःखमूलस्य

* श्रुतप्रकाशिका *

कामकारेण चैके ॥ १५ ॥ गार्हस्थ्यत्यागमधीयत इत्यध्याहारः, (यज्ञादीति) न ह्यङ्गमवलम्ब्याङ्गिनस्त्याग उपपद्यते, तस्मात् त्याज्यस्य कर्मणोऽङ्गित्वं नास्तीत्यर्थः ॥ १५ ॥

उपमर्दं च ॥ १६ ॥ (तस्मिन् दृष्टे परावर इत्यादिकामिति) अर्थप्रधाना निर्देशः, इत्याद्युक्तार्थरूपमुपमर्दमित्यर्थः। (तद्विद्याया इति) न ह्यङ्गेनाङ्गिन उप-

* भावप्रकाशिका *

र्थज्ञानादर्थान्तरभूतायाः कर्माङ्गत्वस्वभाववत्तया 'कुर्वन्नेव' इतिवाक्यस्य अङ्गभूतकर्मविषयत्वेनाऽप्युपपत्तिरस्तीत्युक्तमित्यर्थः ॥ * ॥

भाष्ये— येषां नोयमात्माऽयं लोकः— इति, लोक इव प्रत्यक्ष इत्यर्थः, एके— वाजसनेयिन इत्यर्थः ॥ * ॥

(नह्यङ्गेनाऽङ्गिन इति) नन्वेवं सति कर्मणो विद्याङ्गत्वमपि न स्यात्

१. बृ० ६-४-२२ ॥

कर्मणो ब्रह्मविद्ययोपमर्दं च प्रतिवेदान्तमधीयते— "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्यादिकम् । तद्विद्यायाः कर्माङ्गत्वे न सङ्गच्छते ॥ १६ ॥

ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥

ऊर्ध्वरेतस्स्वाश्रमेषु ब्रह्मविद्यादर्शनात्तेष्वग्निहोत्रदर्शपूर्णमासादिकर्माभावाच्च न विद्या कर्माङ्गम् । नन्वूर्ध्वरेतस आश्रमा न सन्त्येव "यावज्जीवमग्निहोत्रं जुहोति" इत्यादिनाऽग्निहोत्रदर्शपूर्णमासादीनां यावज्जीवाधिकारश्रुतेः । श्रुतिविरुद्धानां स्मृतीनां चाप्रामाण्यात् । अत आह—शब्दे हि—इति । वैदिके एव हि शब्दे ते दृश्यन्ते "त्रयो धर्मस्कन्धाः" ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इत्यादौ । यावज्जीवश्रुतिस्त्वविरक्तविषया ॥ १७ ॥

* श्रुतप्रकाशिका *

मर्दं उपपद्यते, तस्मादुपमर्दिका विद्योपमर्दनीयस्य कर्मणो नाङ्गमित्यर्थः ॥ १६ ॥

उर्द्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥ स्मृतिष्वाश्रमाः प्रतीयन्त इत्यत्राह (श्रुतिविरुद्धानामिति) धर्मस्कन्धा धर्माश्रया आश्रमाः ॥ १७ ॥

छ भावप्रकाशिका छ

अङ्गिना अङ्गोपमर्दस्याऽप्ययोगादिति चेन्न, येषां कर्मणां निवर्त्यत्वं तेषां विद्याङ्गत्वानभ्युपगमात्, नचैतत्परेणाऽपि कर्मभेदाभ्युपगमेन सुवचमिति वाच्यम्, जैमिनिना उपनिषदां जीवातिरिक्तब्रह्मपरत्वमपह्नुत्य देहातिरिक्तात्मपरत्वमभ्युपगम्य तद्वेदनं पारलौकिकसर्वकर्माङ्गमित्यङ्गीकृतत्वात्, तन्मते विद्यानिवर्त्यकर्मणामपि पारलौकिकात्मवेदनसाध्यत्वाविशेषेण विद्यां प्रत्यप्यङ्गित्वस्य वक्तव्यत्वात्, अङ्गेनाऽङ्गिन उपमर्दो न सम्भवतीति भावः ॥ छ ॥

परामर्शं जैमिनिरचोदनाच्चाप-
वदति हि ॥ १८ ॥

यदिदम् "त्रयो धर्मस्कन्धाः" इत्यादौ वैदिके शब्दे ऊर्ध्वरेतस आश्रमा दृश्यन्ते, अतस्ते सन्त्येवेति, नैतदुपपद्यते, यतः [1]"त्रयो धर्मस्कन्धाः" इत्यादिषु वाक्येषु तेषामाश्रमाणां परामर्शमात्रं क्रियते, अनुवादमात्रमित्यर्थः । कुत एतत्? अचोदनात्— अविधानादित्यर्थः । न ह्यत्र विधिशब्दः श्रूयते; "त्रयो धर्मस्कन्धाः" इत्यादिना हि प्रकृतं प्रणवेन ब्रह्मोपासनं स्तूयते, "ब्रह्मसंस्थोऽमृतत्वमेति" इत्युपसंहारात् । अतोऽन्यार्थमनुवादमात्रमत्र क्रियते तेषामाश्रमाणाम् । [2]"ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इति च देवयानविधिपरत्वात्तत्रापि नाश्रमान्तरविधिसम्भवः । अपि चापवदति हि श्रुति-

* श्रुतप्रकाशिका *

परामर्शं जैमिनिरचोदनाच्चापवदति हि ॥ १८ ॥ अन्यार्थं— ब्रह्मोपासनस्तुत्यर्थम् ॥ १८ ॥

७ भावप्रकाशिका ७

भाष्ये— प्रकृतं प्रणवेन ब्रह्मोपासनं स्तूयते—इति, प्रकरिष्यमाणमित्यर्थः, 'ओङ्कारेण सर्वा वाक् संतृण्णा ओङ्कार एवेदं सर्वम्' इत्युत्तरत्र प्रणवोपासनस्य विधित्सितत्वादिति भावः । भाष्ये— तेषामाश्रमाणामिति च्छेदः, ननु परामर्शेऽपि आश्रमा गम्यन्त एव, सत्यं गम्यन्ते, स्मृत्याचाराभ्यां तु तेषां प्रसिद्धिः; न प्रत्यक्षया श्रुत्या, प्रत्यक्षश्रुतिविरोधे च 'विरोधे त्वनपेक्ष्यं स्यात्' इति नयेन सिद्धम्, अथवा अन्धपङ्ग्वादिकर्मानधिकृतविषया स्यात्,

1. छा० २-२३.१ ॥ | 1. छा० ५-१०-१ ॥

राश्रमान्तरं "वीरहा वा एष देवानां योऽग्निमुद्वासयते" इत्यादिका । अत ऊर्ध्वरेतस आश्रमा न सन्तीति जैमिनिराचार्यो मन्यते ॥ १८ ॥

अनुष्ठेयं बादरायणस्साम्यश्रुतेः ॥ १९ ॥

गृहस्थाश्रमवदाश्रमान्तरमप्यनुष्ठेयं भगवान् बादरायणो मन्यते । कुतः ? साम्यश्रुतेः— उपादेयतयाऽभिमतगृहस्थाश्रमसाम्यं हि तेषामप्याश्रमाणां श्रूयते "त्रयो धर्मस्कन्धाः" इत्यारभ्य ब्रह्मसंस्थस्तुत्यर्थतया सङ्कीर्तनं गृहस्थाश्रमस्येतरेषां च समानम् । अथ गृहस्थाश्रमस्यानुवादः प्राप्तौ सत्यामेव सम्भ-

---

* श्रुतप्रकाशिका *

अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥ आश्रमशब्दो धर्मपरः, स्तुत्यर्थतयाऽनुवादसाम्यं प्रमाणान्तरप्राप्तिसाम्यं चोभयं सूत्राभिप्रेतम् । आश्रमान्तरकीर्तने सति हि साम्यं वक्तव्यम्, तदेव नास्ति, गार्हस्थ्यधर्माणामेव कीर्तना-

* भावप्रकाशिका *

ननु गार्हस्थ्यस्यापि परामर्शमात्रम्, 'यज्ञोऽध्ययनं दान'मिति, ततश्च तदपि न सिद्ध्येदिति चेत्— सत्यम्, एवं गृहस्थं प्रत्येव सर्वकर्मणां श्रुतिषु विधानात् श्रुतिप्रसिद्धमेव तदस्तित्वम् । भाष्ये— 'ये चेमेऽरण्ये' इति देवयानविधिपरत्वादिति , 'तद्य इत्थं विदुः ये चेमेऽरण्ये श्रद्धा तप' इत्युपासते तेऽर्चिषमभिसम्भवन्ति' इति देवयानविधिपरत्वादित्यर्थः, 'एतदेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इत्ययन्तु लोकसंस्तवः, न पारिव्राज्यविधिरिति भावः । भाष्ये— योऽग्निमुद्वासयते'— इत्यादिकेति, आदिशब्देन 'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं माव्यवच्छेत्सीः नापुत्रस्य लोकोऽस्ति' इत्यादि गृह्यते ॥ ७ ॥

भाष्ये—अथ गृहस्थाश्रमस्यानुवादः—इति, अन्यतः प्राप्तेरभावेन अनुवादत्वासम्भवेन यद्यस्यैव विधिपरत्वमभ्युपेयते, तदितरेषामपि समानमिति भावः । परामर्शपक्षे

तीति तस्य प्राप्तिरवश्याभ्युपेत्येति मतम्, तदितरेषामपि समानम्, अन्यत्राऽभिनिवेशात् । न च गार्हस्थ्यधर्म एव "यज्ञोऽध्ययनं दानं तपो ब्रह्मचर्य" मिति सर्वैः शब्दैरभिधीयते, ब्रह्मचर्यतपसोर्गृहस्थस्यैव सम्भवादिति युक्तम्, "त्रयो धर्मस्कन्धाः" इति त्रित्वेन संगृह्य "प्रथमो द्वितीयस्तृतीयः" इति विभागवचनानुपपत्तेः । अतो "यज्ञो-

---

* श्रुतप्रकाशिका *

दित्याशङ्क्य ( न च गार्हस्थ्येति ) परिहरति । ( त्रय इति ) व्याख्यानान्तरव्यावृत्यर्थं च व्याचष्टे ( अतो यज्ञ इति ) ब्रह्मसंस्थशब्दः संन्यासाश्रम-

* भावप्रकाशिका *

विधानपक्षे तुल्यमित्याद्युपसंहारभाष्यानुसारात्, नच स्तुत्यर्थतयाऽनुवादसाम्यं प्रमाणान्तरप्राप्तिसाम्यं चोभयं सूत्राभिप्रेतमिति टीकाविरोध इति वाच्यम्, वर्षकृतं दुर्भिक्षमितिवत् प्रमाणान्तरप्राप्त्यभावकृतं साम्यमिति तदर्थात् इहैव विधिपक्षाश्रयणमिति पर्यवसितोऽर्थः । केचित्तु परामर्शपक्षे विधानपक्षे चेति भाष्यस्य मानान्तराप्राप्तपरामर्शपक्षे मानान्तरविहितपरामर्शपक्षे चेत्यर्थः, नत्वत्रैव विधित्वपक्ष इत्यर्थः, तस्य पक्षस्योत्तरसूत्रप्रतिपाद्यत्वाभावात् । नचास्मिन् सूत्रे पक्षद्वयस्याप्यनुपक्षेपे 'विधिर्वा धारणव'दित्यत्र वाशब्दस्याऽवधारणार्थत्वप्रतिपादकभाष्यासाङ्गत्यम्, पूर्वत्र पक्षद्वयोपक्षेप एव अवधारणस्वारस्यादिति वाच्यम्, अप्रयोजकत्वादिति वदन्ति । भाष्ये— तपो ब्रह्मचर्यमिति सर्वैश्शब्दैरिति, यद्यपि श्रुतौ 'ब्रह्मचार्याचार्यकुलवासी' इति ब्रह्मचारिशब्द एव श्रूयते, तथापि ब्रह्मचारिधर्म एव ब्रह्मचर्यशब्देनाभिधीयते इत्युत्तरभाष्यानुरोधात् ब्रह्मचारिशब्दस्य ब्रह्मचर्यपरत्वात् ब्रह्मचर्यमित्युक्तमिति द्रष्टव्यम् । भाष्ये— ब्रह्मचर्यतपसोः गृहस्थस्यैव सम्भवादिति, 'यज्ञोऽध्ययन'मिति निर्दिष्टस्य गृहस्थस्य सम्भवादित्यर्थः । अत उपकुर्वाणेऽपि सम्भवात् गृहस्थस्यैवेत्येवकारोऽनुपपन्न इति चोद्यं निरस्तम्, एवकारस्येतरव्यवच्छेदकत्वाभावात् । भाष्ये— त्रित्वेन सङ्गृह्येति, अत्र स्कन्ध-

ऽध्ययनं दान"मिति गृहस्थाश्रम उच्यते । अध्ययनशब्दो वेदाभ्यासपरः । तपःशब्देन वैखानसपारिव्राज्ययोर्ग्रहणम्, उभयोस्तपःप्रधानत्वात् । तपःशब्दो हि कायक्लेशे रूढः, स च द्वयोरपि समानः । ब्रह्मचारिधर्म एव ब्रह्मचर्यशब्देनाभिधीयते, "ब्रह्मसंस्थोऽमृतत्वमेति" इति परत्र श्रूयमाणो ब्रह्मसंस्थशब्दो यौगिकः सर्वाश्रमसाधारणः, सर्वेषामाश्रमिणां ब्रह्मसंस्थासम्भवात् । ब्रह्मणि संस्था-संस्थितिर्ब्रह्मसंस्थत्वं, तच्च सर्वेषां सम्भवत्येव । ब्रह्मनिष्ठाविकलाः केवलाश्रमिणः पुण्यलोकभाजः; तेष्वेव ब्रह्मनिष्ठोऽमृतत्वमाप्नोति । तदेतद्विस्पष्टमुक्तं भगवता पराशरेण "प्राजापत्यं ब्राह्मणाना"मित्यारभ्य "ब्राह्मं संन्यासिनां स्मृत" मित्यन्तेन वर्णानामाश्रमाणां च केवलानां ब्रह्मलोकप्राप्त्यन्तं फल-

* श्रुतप्रकाशिका *

विषयः परैर्व्याख्यातः, तद्व्यावृत्त्यर्थमाह ( ब्रह्मसंस्थ इति ) यौगिकः— यौगिकत्वात्, अनेन 'क्लृप्तावयवशक्त्यैवे'त्याद्युक्तनयात् ब्रह्मसंस्थशब्दस्य चतुर्थाश्रमपरत्वानुपपत्तिरुक्ता, उक्तार्थानुपपत्त्याऽपि न तथाऽर्थो वर्णनीय इत्याह ( सर्वेषामिति ) तस्यामेव श्रुतौ 'पुण्यलोकभाजः' इत्युक्तम्, तद्व्याचष्टे ( ब्रह्मनिष्ठाविकला इति ) ( तदेतदित्यादि ) अभिदधता पराशरेणेत्यन्वयः, 'ये चेमेऽरण्ये' इत्यादिवाक्यस्य देवयानविधिपरत्वादाश्रमविधिपरत्वाभाव उक्तः पूर्वप-

७ भावप्रकाशिका ७

शब्दो यद्याश्रमपरो न स्यात् ततो यज्ञादीनां प्रातिस्विकोत्पत्तीनां किमपेक्ष्य त्रित्वसङ्ख्या व्यवस्थाप्यते, एकैकाश्रमोपगृहीतत्वे स्वाश्रमधर्माणां त्रित्वाच्छ्रुक्यं

मभिधाय "एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये। तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः" इति तेष्वेव ब्रह्मनिष्ठानां ब्रह्मप्राप्तिमभिदधता। अतो गृहस्थाश्रमतुल्या ऊर्ध्वरेतस आश्रमा अपि दृश्यन्त इति तेऽप्यनुष्ठेयाः। "ये चेमेऽरण्ये श्रद्धा तपः इत्युपासते" इति च अरण्ये- इति तपःप्रधानाश्रमप्राप्त्यपेक्षत्वाद् देवयानविधानस्य तत्रापि तत्प्राप्तिरङ्गीकरणीया ॥ १९ ॥

परामर्शपक्षे विधानपक्षे च गृहस्थाश्रमतुल्यमेषामप्यनुष्ठेयत्वमित्युपपाद्य विधिरेवायमाश्रमाणां सर्वेषां नानुवाद इत्युपपादयितुमाह—

विधिर्वा धारणवत् ॥ २० ॥

वाशब्दोऽवधारणार्थः। विधिरेवायमाश्रमाणाम्, धारणवत्; यथा दिष्टाग्निहोत्रे "अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति" इत्यत्रानु-

* श्रुतप्रकाशिका *

क्षिणा, तत्परिहरति (ये चेमेरण्य इति) देवयानविधानार्थं कृतोऽप्यनुवादो वानप्रस्थपारिव्राज्ययोः प्रमाणान्तरप्राप्तिसापेक्ष इति तत्रापि विधिरस्त्येवेत्यर्थः ॥१९॥

उत्तरसूत्रशङ्कामाह ( परामर्शपक्ष इति )।

विधिर्वा धारणवत् ॥ २० ॥ इयमस्मिन् सूत्रे कृत्वा चिन्तेत्याह ( ब्रह्मचर्य

७ भावप्रकाशिका ७

त्रित्वे व्यवस्थापयितुमिति, आश्रमप्रतिज्ञोपपत्तिरिति भावः ॥ ७ ॥

भाष्ये- दिष्टाग्निहोत्रे- इति, मृताग्निहोत्र इत्यर्थः, दिष्टाग्निहोत्रे श्रूयते

वादसरूपादपि वाक्यादुपरि धारणस्याप्राप्तत्वाद्विधि-राश्रीयते; तदुक्तं शेषलक्षणे [1]"विधिस्तु धारणेऽ-पूर्वत्वात्" इति ; तथा अत्राप्यप्राप्तत्वाद्विधिरेवाश्रय-णीयः [2]"ब्रह्मचर्यं समाप्य गृही भवेद् गृहाद् वनी भूत्वा प्रव्रजेत् यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वना-द्वा यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इति जाबाला-नामाश्रमविधिमसन्तमिव कृत्वा एतेष्वन्यपरेष्वपि वाक्येष्वाश्रमप्राप्तिरवश्याश्रयणीयेत्युपपादितम् । एव-माश्रमान्तरविधानादृणश्रुतिर्यावज्जीवश्रुतिरपवादश्रु-तिश्चाविरक्तविषया एवेति वेदितव्याः । अन्याश्च

* श्रुतप्रकाशिका *

समाप्येत्यादिना ) ऋणश्रुतिः 'त्रिभि ऋणवान् जायते' इत्यादिका, अपवाद-श्रुतिः 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इत्येषा 'स खल्वेवं वर्त्त-यन् यावदायुष'मित्यादिका आश्रमविशेषधर्मानुवृत्तिपराः श्रुतयोपि तत्तदा-श्रमाणां तत्तद्धर्मानुवृत्तिपराः, न त्वाश्रमान्तरधर्माणां ब्रह्मविद्याङ्गत्वविरो-धिन्य इत्याह ( अन्याश्चेति ) । अधिकरणार्थमुपसंहरति ( अत इति ) ऊर्ध्वरेतसां ब्रह्मविद्याविधानेन विद्याया गृहस्थाश्रमधर्मं प्रत्यङ्गत्वाभावेन पृथक्-

छ भावप्रकाशिका छ

'उपरि हि देवेभ्यो धारयति' इत्येषोऽनुवादः, वर्तमानोपदेशात् हिशब्दा-च्चाचाराच्च उपरिधारणप्राप्तेः हविषोऽभ्यर्हितद्रव्यत्वात् प्रच्छादनं येन केन-चित्प्राप्नोति, ततः 'स्रुक्दण्डे समिधमुपसङ्गृह्यानुद्रवति' इतिवाक्यान्तरप्रति-पत्तौ समिन्नियम्यते, तस्मादनुवाद इति प्राप्ते समिधो हविराच्छादनासमर्थ-त्वात् स्रुक्दण्ड इत्यनेन हविषः प्राक्देशस्य प्राप्तत्वेऽपि हविष ऊर्ध्व-प्राप्तत्वात् विधिरिति स्थितं तृतीये । 'वीरहा वा एष देवानां योग्निमु-द्वासयते' इति, एषेति च्छेदः, भाष्ये— अविरक्तविषया एवेति, गृहस्थस्य

१. पूर्वमी० ३-४-१५ ॥ | २. जाबालो० ४-ख० ॥

**ब्रह्मविदः कर्मणामाप्रयाणादवश्यकर्तव्यताविधायिन्यः श्रुतयः स्मृतयश्च स्वस्वाश्रमधर्मविषयाः । अत ऊर्ध्वरेतस्सु च ब्रह्मविद्याविधानाद्विद्यातः पुरुषार्थ इति सिद्धम् ॥ २० ॥**

पुरुषार्थाधिकरणं समाप्तम् ॥



* श्रुतप्रकाशिका *

फलसाधनत्वात् विद्यातः पुरुषार्थसिद्धिरित्यर्थः ।

इतरे त्रयोऽपि 'विभागः शतवत्' इत्येतत्पुरुषभेदेन विभागपरमाहुः, 'आभ्यां शतं देय'मित्युक्ते पञ्चाशदेकस्य पञ्चाशदन्यस्येति विभागवदिति, तदयुक्तं 'तं विद्याकर्मणी समन्वारभेते' इत्येकस्मिन्नेव पुरुषे द्वयोरन्वारम्भणप्रतीतेस्तदविरोधेन विभागस्य दर्शनीयत्वात् ।

परे चापरे चाध्ययनस्यार्थावबोधपर्यन्ततामिच्छन्तो मात्रशब्दस्य वेदान्तसिद्धमात्मज्ञानव्यवच्छेद्यमिति तस्य न कर्मशेषतेत्याहुः, तच्चायुक्तं, सूत्रास्वारस्यादर्थावबोधपर्यन्तायाः शब्दस्वारस्यार्थानुपपत्तिविरहविध्वस्तत्वाच्च, त्रयेऽपि 'नाविशेषा'दिति सूत्रं विदुष एवायं नियम इति विशेषाभावादविद्वद्विषयोऽयं 'कुर्वन्नेवे'ति नियमः— इति व्याचक्षते, तदप्ययुक्तं ब्रह्मविदः प्रकृतत्वात्, अतः स्वतन्त्रकर्मविषयत्वे विशेषाभावाद्विद्याङ्गकर्मविषयत्वेनापि नियमोपपत्तिरूपतया व्याख्यानं युक्तम् । अन्ये तु— 'परामर्शं जैमिनि'रित्याद्यधिकरणान्तरं वर्ण-

ध भावप्रकाशिका ध

उत्सर्गेष्टिपूर्वकत्यागे दोषादर्शनात् अविहितत्यागविषयैव दोषश्रुतिः, ततश्च प्रविव्रजिषोर्विरक्तस्य त्यागविधिसद्भावात् विहितस्त्यागो न दोषावहः, नच कर्माधिकृतान्धपङ्गुबधिरादिविषया पारिव्राज्यश्रुतिरिति वक्तुं शक्यम्, अविशेषश्रवणात्, जाबालश्रुतौ 'व्रती वा अव्रती वा स्नातको वा अस्नातको वा उत्सन्नाग्निरनग्निको वा' इति पृथग्विधानात् । अतः प्रतिपन्नं गार्हस्थ्यं 'प्रमादादज्ञानाद्वा उद्वासयितुं प्रवृत्तं प्रति वा अविरक्तं प्रति वा वीरहा वा' इतिश्रुति-

* श्रुतप्रकाशिका *

यन्ति, तदपि तादर्थ्यनैरन्तर्याभ्यामयुक्तम् । परे त्वैकाधिकरण्यमिच्छन्त एव 'विधिर्वा धारणव' दित्यत्र 'त्रयो धर्मस्कन्धाः' इत्यादौ विषये तपःशब्दो वनस्थमात्रपरः, ब्रह्मसंस्थशब्दः परिव्राजकवाची, त्रयाणां पुण्यलोकभाक्त्वमुक्त्वा ब्रह्मसंस्थस्यामृतत्वप्राप्तिवचनात्, यथा देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ अन्यतरो महाप्राज्ञ इत्युक्ते विष्णुमित्रो महाप्राज्ञ इत्युक्तं स्यात्, न तु यज्ञदत्तस्तद्वदिति, तदनुपपन्नम्, तपश्शब्दस्य वनस्थमात्रपरत्वेऽपि ब्रह्मसंस्थशब्दस्य यौगिकत्वसम्भवेन प्रोक्षणीन्यायात् परिव्राजि रूढिकल्पनानुपपत्तेः प्रकृताश्रमत्रयमात्रावलम्बनत्वेनास्य वचनस्य परिव्राजाममृतत्वप्राप्तौ प्रमाणत्वाभावप्रसङ्गात्, अतस्तेषां खल्वेषां सतां भूतानां त्रीण्येव बीजान्यण्डजं जीवजमुद्भिज्ज'मित्यवधारणे सत्यपि स्वेदजोद्भिज्जयोरिवानवधारणस्थले तपश्शब्देनाश्रमद्वयस्य तन्त्रेणोपादानोपपत्तेः, पुण्यलोकभाक्त्वामृतत्वयोस्तेष्वेवाश्रमेषु

* भावप्रकाशिका *

रुपपन्नेति भावः । ( परे त्वित्यादि ) ( ऐकाधिकरण्यमित्यादि ) यद्यपि कल्पतरावधिकरणभेदः सूचितः, तथापि भाष्यभामत्योरनुक्तत्वादेवमुक्तमिति द्रष्टव्यम् ( इत्यादौ विषय इति ) विषयवाक्य इत्यर्थः, ( देवदत्तयज्ञदत्तौ मन्दप्रज्ञाविन्त्यादि ) अन्यतरः कश्चिदित्यर्थः, ननु च शाङ्करभाष्ये— नह्येवं भवति देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ, अन्यतरस्तु तयोर्महाप्राज्ञ इति, भवति त्वेवं देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ विष्णुमित्रस्तु महाप्राज्ञ इतीदृशोक्त्यसम्भवपरतैव प्रतीयते, नत्वीदृशीमुक्तिमभ्युपगम्य यज्ञदत्तस्योच्यमानत्वनिषेधपरत्वमिति चेन्न, न ह्येवं भवति, वह्निस्सेककरणमित्युक्ते वह्नेस्सेककरणत्वमित्युच्यमानत्वं न सम्भवतीत्यस्याऽर्थस्य फलितत्वदर्शनात् फलितार्थमादायाऽनुवादोपपत्तेः । किञ्च दार्ष्टान्तिके 'त्रय एते पुण्यलोका भवन्ति' 'ब्रह्मसंस्थोऽमृतत्वमेति' इति श्रुतावुक्तेस्सिद्धतया उक्तिं सिद्धवत्कृत्यैवेदृश्योक्त्या उच्यमानत्वं न प्राङ्निर्दिष्टानाम् । अपि तु ततोऽन्यस्य परिव्राज इत्यस्मिन्नर्थ एव दृष्टान्तस्योपन्यसनीयतया दृष्टान्तेऽप्युक्तिं सिद्धवत्कृत्यैव प्राङ्निर्दिष्टानां नोच्यमानत्वं दृष्टम्, अपि तु ततोन्यस्यैवेति, एवमुपन्यासस्योचितत्वेन तत्रैव शाङ्करभाष्यस्यापि तात्पर्यमभिप्रेत्य तथाऽनूदितमिति द्रष्टव्यम् ( प्रकृताश्रमत्रयेति ) केवलयौ-

* श्रुतप्रकाशिका *

विद्वदविद्वद्विषयत्वेनोपपत्तेः, प्राजापत्यं गृहस्थानामित्यादिस्मृत्यैकार्थ्याच्चाश्रमचतुष्टयविधिः । न च कर्माविरुद्धत्वेनाश्रमान्तराणामात्मानुसन्धानानवकाशः कर्मानवरुद्धकालबाहुल्यात्, न हि सर्वस्मिन्नहोरात्रे उपासीतेति विधिः, अन्यथा जनकादीनामात्मवेदनादपवर्गप्राप्तिवचनानुपपत्तेः, उभयभावनानिष्ठगोचरशास्त्रवैयर्थ्यं च स्यात् । यत्तु देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ अन्यतरो महाबुद्धिरिति निदर्शनं तत्रापि कालभेदेन यज्ञदत्तादिविषयत्वं युज्यते, दृष्टान्तवैघर्म्यं च, तत्र धर्म्यन्तरोपस्थापकान्यतरशब्दसमभिव्याहारात् यौगिकस्य महाबुद्धिशब्दस्य धर्म्यन्तरनिष्ठत्वं युक्तम्, इह तु ब्रह्मसंस्थशब्दातिरेकेण विशेष्यसमर्पकपदाभावात् प्रकृतविषयत्वमेव स्यात् ॥ २० ॥

पुरुषार्थाधिकरणं समाप्तम् ॥



ॐ भावप्रकाशिका ॐ

गिकानाम् आग्नेयीन्यायेन सन्निहितगामित्वादिति भावः (कालभेदेनेति) पूर्वं मन्दप्रज्ञस्यैव इदानीं शास्त्राभ्यासपाटववशेन महाप्राज्ञत्वसम्भवादिति भावः (धर्म्यन्तरोपस्थापकेति) अन्यतरश्चासौ शब्दश्च अन्यतरशब्दः, नत्वन्यतर इत्ययं शब्द इति भ्रमितव्यम्, ततश्च निर्दिष्टमन्दप्रज्ञापेक्षया धर्म्यन्तरोपस्थापकस्तव कथनिर्दिष्टपदद्वयान्यतरभूतमहत्पदसमभिव्याहारादित्यर्थः, (यौगिकस्येति) यौगिकस्यापीत्यर्थः (इह तु ब्रह्मसंस्थशब्दातिरेकेणेति) त्रिष्वेवाश्रमेषु ब्रह्मसंस्थश्चेदमृतत्वभाग्भवतीत्यर्थकत्वेपि विरोधाभावादित्यर्थः । किञ्च ब्रह्मसंस्थपदस्य चतुर्थाश्रमपरत्वे उर्ध्वरेतस आश्रमा न सन्ति 'त्रयो धर्मस्कन्धाः' इति तु विधेयब्रह्मसंस्थतास्तुतये अनुवादमात्रमित्येवमर्थकतया प्रयुक्तस्य 'परामर्शं जैमिनिरचोदना'दिति सूत्रस्य व्याहतार्थत्वप्रसङ्गः, तथा हि सति ब्रह्मसंस्थताविधिरेव संन्यासविधिरूपत्वेन उर्ध्वरेतसामाश्रमस्य सिद्धत्वेन पूर्वपक्षसिद्धान्तयोरप्रवृत्तेरिति द्रष्टव्यम् । अत्र परमहंसस्य शिखोपवीताद्यावश्यकत्वं शतदूषण्यामाचार्यैरेव प्रपञ्चितमिति नात्र प्रयत्यते ॥ ७ ॥

इति पुरुषार्थाधिकरणम् ।



## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

२ अधिकरणम्

इदमिदानीं चिन्त्यते,– [1]"स एष रसानां रसतमः परमः परार्थ्योऽष्टमो य उद्गीथः" इति एवंजातीयकानि वाक्यानि क्रत्ववयवभूतोद्गीथादिस्तुतिमात्रपराणि ? आहोस्विदुद्गीथादिषु रसतमादिदृष्टिविधानार्थानि– इति । अत्र प्रतिपादितमुपासनपरत्वमङ्गीकृत्योपासनस्य पुरुषार्थत्वेन क्रतुषूपादा- 3-3-41

* श्रुतप्रकाशिका *

स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥ अनन्तराधिकरणद्वयं प्रासङ्गिकम्, ब्रह्मसंस्थस्तुत्यर्थमनूदितत्वं पूर्वपक्षीकृत्याश्रमद्वयस्य विधानमुक्तम्, एवं स्तुतिप्रसङ्गात् रसतमत्वप्रतिपादकवाक्यानि स्तुतिपराणि, उत नेति शङ्का जायत इति प्रासङ्गिकी सङ्गतिः, पूर्वं सप्तानां रसानां प्रतिपादितत्वादुद्गीथस्याष्टमरसत्वम्, 'स एष रसाना' मित्यादिवाक्यानि किमुद्गीथादिस्तुतिमात्रपराणि ? उतोद्गीथादिषु रसतमत्वादिदृष्टिविधिपराणि, किमेषामर्थवादत्वसमाश्रयणं न्याय्यम्, उत विधिपरत्वम्, अपूर्वत्वं किं विधित्वमव-

* भावप्रकाशिका *

( अनन्तराधिकरणद्वयमिति ) पुरुषार्थाधिकरणापेक्षयेति शेषः । भाष्ये– परमः परार्थ्य इति, परमात्मप्रतीकत्वात्परमः परस्य ब्रह्मणः अर्थं स्थानमर्हतीति परार्थ्यः । ( पूर्वं सप्तानां रसानामिति ) 'एषां भूतानां पृथिवी रसः पृथिव्या आपो रसोऽपामोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाच ऋग्रस ऋचस्साम रसः साम्न उद्गीथरसः' इति पृथिव्यादीनां सप्तानां पूर्वं रसानां कीर्तितत्वादित्यर्थः । भाष्ये– अत्र प्रतिपादितमुपासनपरत्वमित्यादि, नन्वस्मिन्नधिकरणे 'स एष रसानां रसतमः' इत्या-

१. छा० ॥ 1-1-3.

नानियम उक्तः । किं युक्तं ? स्तुतिमात्रपराणीति । कुतः ? उद्गीथाद्युपादानात् । क्रत्वङ्गभूतानि ह्युद्गीथादीन्युपादाय तेषां रसतमादित्वं प्रतिपादितम्, यथा जुह्वादीनां पृथिव्यादित्वं प्रतिपादयतो वचनस्य "इयमेव जुहूः स्वर्गो लोक आहवनीयः" इत्यादिकस्य तत्स्तुतिमात्रपरत्वम्, तथेहापि । तदिदमाशङ्कते—स्तुतिमात्रमुपादानादिति चेत्—इति । उद्गीथाद्युपादानात्तत्स्तुतिमात्रमेवैषां वाक्यानां विवक्षितमिति चेत्—

* श्रुतप्रकाशिका *

गमयति, नेति, न चेदर्थवादत्वस्य न्याय्यत्वात् स्तुतिपराणि, अवगमयति चेद् विधिपरत्वस्य न्याय्यत्वात् रसतमत्वादिदृष्टिविधिपराणि, उद्गीथाद्युपासनानां पुरुषार्थत्वं प्रागुक्तं तत्कथमुपासने संशय इत्यत्राह ( अत्र प्रतिपादितमिति ) उद्गीथाद्युपादानादित्येतद्विवृणोति ( क्रत्वङ्गेति ) ततः किमित्यत्राह ( यथेति ) ननु क्रत्वङ्गोपादानपूर्वकप्रतिपादनं स्तुतिश्चेत् , क्रत्वङ्गजुहूपादानपूर्वकपर्णताप्रतिपादनमपि स्तुतिः स्यात्, नैवं क्रत्वङ्गोपादानपूर्वकस्य पुरुषणा साधयितुमशक्यगुणप्रतिपादनस्यैव स्तुतिरूपत्वात् । शङ्काया अनुत्सूत्रतामाह ( तदिदमिति ) उक्तमर्थं सूत्राक्षरेषु दर्शयति ( उद्गीथादीति ) ।

* भावप्रकाशिका *

दिवाक्यानामुपास्यविशेषसमर्पकत्वम् , उत स्तुतिपरत्वमित्येव चिन्ता प्रक्रियते, नतु 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादिवाक्यानामपि उपासनविधिपरत्वमस्ति, नेति विचारः प्रवर्तते, तेषां वाक्यानामनुदाहृतत्वादिति चेत्—नैवम्, रसतमादिवाक्यानामपि स्तावकत्वमिति पूर्वपक्षिणो द्वेधाभिप्रायः, अत्र 'उद्गीथमुपासीत' इति नोपासनं विधीयते, उद्गीथविधिसिद्धानुष्ठानौपयिकज्ञानसामान्यवाची उपासनशब्दः, अतोऽनुवाद एव । अतश्च रसतमादिवाक्ये समभिव्याहृतविध्यभावेन तदेकवाक्यतया स्तावकत्वाभावेन उद्गीथपदोपस्थापितक्रतुप्रकरणगतोद्गीथविध्येकवाक्यतयैव रसतमादिवाक्यानां स्तावकत्वम् ।

अत्रोत्तरं–नापूर्वत्वादिति। न स्तुतिमात्रत्वमुपपद्यते; कुतः अपूर्वत्वात्–अप्राप्तत्वात्। न ह्युद्गीथादयो रसतमादितया प्रमाणान्तरेण प्रतिपन्नाः, येन तत्प्राशस्त्य-

* श्रुतप्रकाशिका *

(अत्रोत्तरमित्यादि) अपूर्वत्वादित्येतद्व्याचष्टे (अप्राप्तत्वादिति) तदुपपादयति (नहीति) स्तुतिर्हि प्रमाणान्तरप्राप्तगुणानुवादेन वा–अप्राप्तगुणविधानेन वा–मुख्यवृत्त्युपस्थापितगुणासम्भवे वृत्त्यन्तरोपनीतगुणान्वयेन वा क्रियते, तत्र प्रमाणान्तरप्राप्तगुणानुवादरूपस्तुत्यनुपपत्तौ हेतु सूत्रे कण्ठोक्तः, तर्ह्यप्राप्तगुणविधानेन स्तुतिरियं स्यात्, यद्रसतमत्वादिकथनमिति चेन्न, उद्गीथादेः रसतमत्वादिकत्वस्यायोग्यत्वादयोग्यार्थस्य च विधातुमशक्यत्वात्, तद्विधानेन स्तुत्यनुपपत्तेरिति परिहारः सूत्रे भाष्ये चाभिप्रेतः। ननु मुख्यार्थायोग्यत्वे सति 'इयमेव जुहू'रित्यादाविव वृत्त्यन्तरोपनीतगुणान्वयेन स्तुतिः स्यात्, यदि स्वरूपेणान्वयायोग्यस्यापि रसतमत्वादेरारोपणस्य शक्यत्वात् दृष्टिविधिः, तर्हि 'इय-

* भावप्रकाशिका *

नच स्तावकवाक्यानां स्तुतिविधिसमभिव्याहारनियमोऽस्ति 'एतद्ब्राह्मणान्येव पञ्च हवींषि यद्ब्राह्मणानीतराणि' इत्यतिदिष्टेष्वर्थवादेषु व्यभिचारादित्येकः पक्षः, 'उद्गीथमुपासीत' इत्युपासनाविधिमभ्युपेत्य तदेकवाक्यतया तत्स्तावकत्वम् नोपासनाविषयसमर्पकत्वम्। 'ओमित्येतदक्षर'मित्यनेनैव उपासनविषयसमर्पणादिति द्वितीयः पक्षः, तत्र द्वितीयपक्षे उपासनानां सद्भावेपि प्रथमपक्षे उपसनाविध्यभावात् अत्र प्रतिपादितमुपासनाविधिपरत्वमित्येतत्तदभिप्रायेणेति द्रष्टव्यम् (स्तुतिर्हि प्रमाणान्तरप्राप्तेति) 'विरोधे गुणवादः स्यादनुवादोऽवधारिते। भूतार्थवादस्तद्धानात् अर्थवादस्त्रिधा मतः' इति वाक्यविद्भिरुक्तत्वात्, मानान्तरविरोधे गुणवादो यथा 'यजमानः प्रस्तरः' 'ग्रावाणः प्लवन्ते' इत्यादौ। मानान्तरावधारिते अनुवादो यथा 'अग्निर्हिमस्य भेषज'मिति। साधकबाधकप्रमाणाभावे भूतार्थवादो यथा– 'वज्रहस्तः पुरन्दरः' इत्यादौ। (अप्राप्तगुणविधानेन वेति) अप्राप्तधर्मोपदेशेन भूतार्थवादेनेत्यर्थः। अतश्च कथं गुणविधायकस्यार्थवादान्तर्भाव इति शङ्का न कार्या

बुद्ध्युत्पत्त्यर्थं रसतमादित्वेनानूद्येरन् । न चोद्गीथादि-विधिरत्र सन्निहितः, येन "इयमेव जुहूः स्वर्गो लोक आहवनीयः" इत्यादिवत्तदेकवाक्यत्वेन यया कयाचन विधया तत्स्तुतिपरत्वमाश्रीयेत । अतः क्रतुवीर्यवत्त्वादिफलसिद्ध्यर्थमुद्गीथादिषु रसतमादिदृष्टिविधानमेव न्याय्यम् ॥ २१ ॥

भावशब्दाच्च ॥ २२ ॥

उपासीतेत्यादिभावशब्दाच्च विधिपरत्वमेव न्याय्यम्,

---

* श्रुतप्रकाशिका *

मेव जुहू'रित्यादिष्वपि दृष्टिविधिः स्यादित्यत्राह ( न चोद्गीथादिविधिरिति ) आदिशब्देन पञ्चविधसामविध्यादिकं गृह्यते ( यया कयाचन विधया ) अमुख्यवृत्त्येत्यर्थः । इयमेवेत्यादिवाक्यस्य कर्मविधिप्रकरणसन्निधानात् "सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते" इति न्यायादेकवाक्यत्वसिद्ध्यर्थममुख्यवृत्त्या स्तुतित्वमाश्रितम्, अत्र तु तथा सन्निहितत्वाभावेनैकवाक्यत्वाभावात् स्तुतित्वानुपपत्तिरित्यर्थः । सूत्रव्याख्यानमधिकरणार्थेन निगमयति ( अत इति ) ॥ २१ ॥

पूर्वं पूर्वपक्षयुक्तिः परिहृता, स्वपक्षसाधकहेतुरनन्तरसूत्रेणाभिधीयते । भावशब्दाच्च ॥ २२ ॥ उद्गीथादिविधेरत्राभाव उक्तः पूर्वसूत्रे, अत्र

* भावप्रकाशिका *

(अत्र तु तथा सन्निहितत्वाभावेनेति) 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इत्यादिवचनबलात् पञ्चसञ्चरविध्येकवाक्यत्वमिति भावः ॥ * ॥

भाष्ये— विधिपरत्वमेव न्याय्यमिति, विस्पष्टविधिविभक्तिश्रवणात् ध्यानपर्यायस्योपासनस्याऽप्राप्तत्वाच्च उपासनविधिपरत्वमेव न्याय्यम् । ततश्च समभिव्याहृतोपासनविध्येकवाक्यत्वे सति नासमभिव्याहृतोद्गीथविध्येकवाक्यत्वं युक्तमित्यर्थः । नन्वस्तु समभिव्याहृतोपासनविध्येकवाक्यत्वं, तथापि स्तुत्यर्थत्वेनान्वयः किन्न स्यादिति शङ्कामुपसंहारव्याजेन निरस्यति, भाष्ये— तस्मादु-

विधिप्रत्ययुक्तो हि क्रियाशब्दो विधेयमेव स्वार्थमवगमयति । तस्मादुपासनविधानार्था एताः श्रुतयः ॥२२॥

स्तुतिमात्राधिकरणं समाप्तम् ॥

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

३ आधिकरणम्

[1]"प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम [2]"श्वेतकेतुर्हारुणेय आस" इत्ये-

* श्रुतप्रकाशिका *

तूपासनविधेः सद्भाव उच्यते, भावः—क्रिया, विधिप्रत्ययुक्तो भावशब्दोऽत्र विवक्षितः ॥ २२ ॥ स्तुतिमात्राधिकरणं समाप्तम् ॥

पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥ इदमपि प्रासङ्गिकमधिकरणम्, रसतमादिवाक्यानां स्तुत्यर्थत्वं पूर्वपक्षीकृत्योपासनपरत्वं स्थापितम्, एवं प्रातर्दनादीन्याख्यानानि किं स्तुत्यर्थानि ? उत पारिप्लवार्थानीति शङ्कया सङ्गतिः, पारिप्लवाः— आख्यानानि, इह पारिप्लवशब्देनाख्यानशंसनं विवक्षितं 'श्वेतकेतु-

छ भावप्रकाशिका छ

पासनविधानार्था एताश्श्रुतय इति, उपास्यत इत्युपासनम्, कर्मणि बहुवचनात् ल्युट्, उपास्यविधानार्था इत्यर्थः, यद्वा उपासने विषयविधानार्था इत्यर्थः, उपासनविषयसमर्पकतया प्रवृत्तिविशेषपरत्वे सम्भवति व्यर्थप्रयासस्तुत्यर्थत्वकल्पनायोगादिति भावः ॥ छ ॥

इति स्तुतिमात्राधिकरणम् ।

( शङ्कया सङ्गतिरिति ) विचारणात्सङ्गतिरित्यर्थः, ननु 'दक्षिणत आहवनीयस्य हिरण्यकशिपावासीनोऽभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे पारिप्लवमाचक्षीत प्रथमेऽहनि 'मनुर्वैवस्वतो राजा' इति पारिप्लवशब्दस्याऽऽख्यानाभिधायकत्वदर्शनात् कथमाख्यानानां पारिप्लवनामकशस्त्रार्थत्वपूर्वपक्ष इत्यत आह ( पारिप्लवा आख्यानानि इह पारिप्लवशब्देन आख्यानशंसनं विवक्षितमिति )

१. कौ० ३-१ ॥ | २. छा ६-१-१ ॥

वमादीनि वेदान्तेष्वाख्यानानि किं पारिप्लवप्रयोगार्थानि, उत विद्याविशेषप्रतिपादनार्थनीति चिन्तायाम् "आख्यानानि शंसन्ति" इत्याख्यानानां पारिप्लवे विनियोगान्न विद्याप्रधानत्वं न्याय्यमिति चेत्—न सर्वाण्याख्यानानि पारिप्लवप्रयोगे विनियोग-

* श्रुतप्रकाशिका *

हारुणेयः' इत्यादिवाक्यानि किं पारिप्लवप्रयोगार्थानि ? उत विद्याविधानार्थानि, किं पारिप्लवे सर्वाख्यानानां विनियोगः ? उत मन्वाद्याख्यानानामेवेति, किम् 'आख्यानानि शंसन्ती'त्याख्यानशब्दः सर्वाख्यानपरः, उत मन्वाद्याख्यानपरः, किमाख्यानविशेषाम्नानमाख्यानशब्दस्य विशेषपरतामवगमयति, नेति, न चेदाख्यानशब्दस्य सर्वाख्यानपरतया सर्वेषां तत्र विनियुक्तत्वात् सर्वाख्यानानि पारिप्लवार्थानि स्युः, विशेषपरतामवगमयति चेदाख्यानशब्दस्य मन्वाद्याख्यानविशेषविषयतया तेषामेव पारिप्लवे विनियोगात् श्वेतके-

* भावप्रकाशिका *

शंसनं शस्त्रम्, आख्यानसाध्यं शस्त्रमित्यर्थः । परिप्लुत्य परिप्लुत्य शंसनमिति पारिप्लवशब्दस्य शस्त्रेपि वृत्त्युपपत्तेरिति भावः, भाष्ये— विद्याविशेषप्रतिपादनार्थानीति 'ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमांसांचक्रुः' इत्याख्यायिकया विद्यायाः परमात्मविषयत्वरूपविशेषप्रतिपत्तेः 'मटचीहतेषु कुरुष्वाटक्या सह जायया' इत्याख्यायिकया विद्यायां भक्ष्यनियमनादिरूपविशेषप्रतिपत्तेर्दर्शनात् तदर्थानीत्यर्थः, तथा आख्यायिकाश्रवणे अनवहितानामपि अवधानसम्पादनेन प्रतिपत्तिसौकर्यार्थानीत्यर्थः, ननु पारिप्लवे वाक्येन विनियुक्तानामपि सन्निधेर्विद्यार्थत्वमपि स्यादिति शङ्कां निरस्यति, भाष्ये— न विद्याप्राधान्यं न्याय्यमिति, 'वेधाद्यर्थभेदा'दिति न्यायविरुद्धमिति भावः । ननु 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः तस्मादेतेनेष्ट्वा अथान्येन यजेत' इत्यत्राऽन्यशब्दस्य ज्योतिष्टोमेतरसर्वक्रतुपरामर्शिनः 'यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति यः पञ्चदशम्' इत्यादिवाक्यशेषगतत्रिवृदादिस्तोमकक्रतुसङ्कीर्तना-

मर्हन्ति । कुतः? विशेषितत्वात् विनियोगस्य । "आख्यानानि शंसन्ति" इत्युक्त्वा तत्रैव "मनुर्वैवस्वतो राजा" इत्यादिना मन्वादीनामाख्यानानि विशेष्यन्ते । अतस्तेषामेव तत्र विनियोग इति गम्यते। तस्मान्न सर्वा वेदान्तेष्वाख्यानश्रुतयः पारिप्लवप्रयोगार्थाः, अपि तु विद्याविध्यर्थाः ॥ २३ ॥

---

* श्रुतप्रकाशिका *

तूपाख्यानादीनि विद्याविधानार्थानि स्युः, ( विद्याविशेषप्रतिपादनार्थानि ) स्तावकत्वेन प्रतिपादनार्थानीत्यर्थः । ( विद्याविध्यर्था इति ) विद्याविधेः स्तावकतया शेषभूता इत्यर्थः । प्रकरणोपात्तमात्रानभ्युपगमे आख्यानानन्त्यात्

ॐ भावप्रकाशिका ॐ

नुसारेण तावन्मात्रे सङ्कुचितवृत्तित्वापत्त्या अनेकस्तोमकानां क्रतूनां ज्योतिष्टोमात् प्रागप्यनुष्ठानं स्यादिति, ततश्च 'एकस्तोमे वा क्रतुसंयोगात्' 'सर्वेषां वा चोदनाविशेषात् प्रशंसा स्तोमानाम्' इति पूर्वपक्षसिद्धान्तसूत्राभ्यां प्रवर्तितेन पाञ्चमिकाधिकरणेन विरोधः स्यात्, तस्मादुपक्रमगतसर्वश्रुत्या विद्याप्रकरणगताख्यानानामपि कर्मसु विनियोगात् पारिप्लवार्थत्वमेव स्यात्, न विद्यार्थत्वमित्यस्वरसादाह ( प्रकरणोपात्तेति ) उपक्रमानुसारेण उपसंहारनयनस्यौत्सर्गिकत्वेऽप्यत्रानन्तशाखागतशंसनस्य अशक्यत्वेन स्वत एव उपक्रमगतसर्वश्रुतेः सङ्कोचकापेक्षासत्वात् वाक्यशेषेण चापेक्षितसमर्पणात् वाक्यशेषगतेष्वाख्यानेषु सङ्कोचः, यथा– 'अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते' इत्यत्र सर्वशब्दस्याऽसङ्कुचितसर्वपरत्वासम्भवेन सङ्कोचकापेक्षायां ज्योतिष्टोमे प्रकृतेषु ऋत्विक्ष्वेव सङ्कोचः, न सर्वेषाम्। किञ्च यद्युपक्रमगतसर्वश्रुत्या आख्यानानां सर्वेषां गृहीतिस्स्यात्, तदा 'मनुर्वैवस्वतो राजा' इत्यादिवाक्यशेषविशेषणमनर्थकमेव स्यात्, नचार्थवत्वे सम्भवति आनर्थक्यं युक्तम्, अतः सङ्कोचः । 'यो वै त्रिवृदन्यम्' इत्यादिवाक्यशेषस्तु संयोगमात्रेणैवोपपद्यते, अन्यशब्देन चाविशेषः प्रतीयते, त्रिवृदादीनामनेकस्तोमकेष्वपि विनापि व्याप्त्या संयो-

## तथा चैकवाक्योपबन्धात् ॥ २४ ॥

"आत्मा वा अरे द्रष्टव्यः" इत्यादिविधिनैकवाक्यतयोपबन्धाच्चाख्यानानां विद्याविध्यर्थान्येव तानीति गम्यते; यथा "सोऽरोदीत्" इत्येवमादेः कर्मविध्यर्थत्वम्; न पारिप्लवार्थत्वम् ॥ २४ ॥

पारिप्लवार्थाधिकरणं समाप्तम् ॥



## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥




स्तुतिप्रसङ्गादवान्तरसङ्गतिविशेषेणार्थद्वयं चिन्तितम् । विद्यावन्त ऊर्ध्वरेतस आश्रमिणः सन्तीत्युक्तम् "ऊर्ध्वरेतस्सु च शब्दे हि" इत्यादिभिः सूत्रैः । इदानीमूर्ध्वरेतसो यज्ञाद्यभावात्तद-

* श्रुतप्रकाशिका *

अशक्यत्वं च स्यात् ॥ २३ ॥

तथा चैकवाक्योपबन्धात् ॥ २४ ॥ उपबन्धः— अन्वयः, (यथेति) हिरण्यदक्षिरण्यत्ववाक्येनैकवाक्यतयोपबन्धात्, सोऽरोदीदित्येवमादेः कर्मविध्यर्थत्वमित्यर्थः ॥ २४ ॥ पारिप्लवार्थाधिकरणं समाप्तम् ।

अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥ व्याख्यातयोरधिकरणयोः प्रासङ्गिकत्वमाह ( स्तुतिप्रसङ्गादिति ) अस्याधिकरणस्य प्रथमाधिकरणेन सङ्ग-

७ भावप्रकाशिका ७

गमात्रेण दीपकत्वं सम्भवतीति वैषम्यमस्तीति द्रष्टव्यम् ॥ ७ ॥

( हिरण्यदक्षिरण्यत्ववाक्येनेति ) रजतहिरण्यस्येत्यर्थः, तस्माद्धिरण्यमिति श्रुतेरिति भावः ॥ ७ ॥

इति पारिप्लवार्थाधिकरणम् ।

भाष्ये— ऊर्ध्वरेतसो यज्ञाद्यभावादिति, 'ये चेमेऽरण्ये श्रद्धा तप इत्युपा-

ङ्गिका विद्या न सम्भवतीत्याशङ्कयाह—अत एव चाग्नीन्धनाद्यनपेक्षा—इति। यत ऊर्ध्वरेतस आश्रमिणो विद्यासम्बन्धित्वेन श्रुत्या परिगृह्यन्ते [1]"ब्रह्मसंस्थोऽमृतत्वमेति" [2]"ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" [3]"एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" [4]"यदिच्छन्तो ब्रह्मचर्यं चरन्ति" इत्यादिकया।

* श्रुतप्रकाशिका *

तिमाह (विद्यावन्त इति) (आशङ्कयाहेति) सूत्रे चशब्दः शङ्काद्योतक इति भावः। किं परिव्राजां ब्रह्मविद्याधिकारोऽस्ति ? नेति, किं यज्ञाङ्गिकैव विद्या, उताश्रमप्रयुक्तधर्माङ्गिका, किमूर्द्ध्वरेतसां विद्यासम्बन्धप्रतिपादकवाक्यानि विद्याया आश्रमधर्माङ्गकत्वमवगमयन्ति, नेति, न चेद्यज्ञाद्यङ्गकत्वाद्विद्यायां परिव्राजामनधिकारः, अवगमयन्ति चेदाश्रमधर्माङ्गतया परिव्राजां ब्रह्मविद्याधिकारः। अतश्शब्दार्थमाह (यत इति)।

छ भावप्रकाशिका छ

सते' इति विद्यासम्बन्धबोधकवाक्यानामान्यपर्यमाश्रयणीयमिति भावः, यदि च अवश्यमूर्ध्वरेतसां विद्यासम्बन्धो वक्तव्यः, तर्हि अङ्गानुप्रकृतविद्यायाः फलानवाप्तेः अङ्गभूतयज्ञाद्यनुष्ठानस्य आवश्यकत्वात् तदर्थं दारान्तरं परिगृह्याधानं कर्तव्यम्। नच दारपरिग्रहे सति उर्ध्वरेतस्त्वविरोधापत्तिः, विद्याङ्गकर्मार्थं दारपरिग्रहेपि भीष्मवदूर्ध्वरेतस्त्वोपपत्तेः, 'सोयमुपनयन्नादधीत होमसंयोगात्' इति पूर्वतन्त्राधिकरणपूर्वपक्षरीत्या पूर्वपक्षः, तत्र हि उपनयनाङ्गहोम आहवनीये कर्तव्यः, अस्मिन्दारपरिग्रहे सति उपनयनविधिपूर्वकविद्याग्रहणोत्तरकालविहितो दारपरिग्रहः प्रजार्थो भविष्यतीति पूर्वपक्षः प्रवर्तितः, तद्वदत्रापि, नचाश्रमधर्मैरेव विद्याङ्गसिद्धेः यज्ञाद्यनुष्ठानार्थम् आधानदारसङ्ग्रहयोराक्षेपो न प्राप्नोतीति वाच्यम्, यज्ञेनेत्यादितृतीयाश्रुत्या विशिष्य यज्ञादीनामपि विद्याङ्गत्वविधानात्, कर्मत्यागश्रुतिस्तु विद्यानङ्गकर्मविषया। सिद्धान्तस्तु केवलपु-

१. छा. २-२३-१ ॥ २. छा. ५-१०-१ ॥ ३. बृ. ६-४-२२ ॥ ४. कठ. १-२-१५ ॥

अत एवोर्ध्वरेतस्सु विद्याऽग्नीन्धनाद्यनपेक्षा, अग्नीन्धनम्–अग्न्याधानम्, आधानपूर्विकाग्निहोत्रदर्शपूर्णमासादिकर्मानपेक्षा तेषु विद्या । केवलस्वाश्रमविहितकर्मापेक्षेत्यर्थः ॥ २५ ॥ अग्नीन्धनाद्यधिकरणं समाप्तम् ॥



## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥



यदि विद्या यज्ञाद्यनपेक्षैवामृतत्वं

* श्रुतप्रकाशिका *

परे त्विदं सूत्रमाद्यधिकरणफलनिगमनपरमाहुः, अत एव– विद्यातः पुरुषार्थत्वाद्विद्यया फलोत्पत्तौ न कर्मापेक्षेति, इदं च निगमनमुत्पत्तावेव कर्मापेक्षेत्यनन्तरसूत्रे वक्तुं युक्तमिति, तदिदं मन्दफलत्वादनादरणीयं, पूर्वपक्षे युक्त्यन्तरे सम्भवति सङ्गते च सति तन्निरासपरत्वं हि सप्रयोजनम्, ऊर्ध्वरेतस आश्रमसद्भाव आसन्नत्वादत इति परामर्शयोग्यश्च ॥ २५ ॥

अग्नीन्धनाद्यधिकरणं समाप्तम् ।

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥ सङ्गतिः स्फुटा, किं

* भावप्रकाशिका *

न्नार्थमिव केवलधर्मार्थं दारसङ्ग्रहायोगात् 'धर्मे चार्थे च नातिचरितव्ये'ति स्मृतेः, भीष्मस्य तु धर्मप्रजोभयार्थे दारपरिग्रहे निर्वृत्त एव पितृप्रीत्यर्थमूर्ध्वरेतस्त्वप्रतिज्ञया पुत्रोत्पादनानिवृत्तौ सत्यां दाराणां धर्मार्थत्वमात्रमवशिष्टमिति तेन यज्ञाद्यनुष्ठानम्, नतु ऊर्ध्वरेतस्त्वप्रतिज्ञानन्तरं केवलधर्मार्थदारसङ्ग्रहः, श्रुतिस्मृतिसिद्धनिकेतनत्वादिसंन्यासधर्मपर्यालोचनया न संन्यासिनो दारपरिग्रहादिकमुपपद्यत इति भावः ( विद्यया फलोत्पत्तौ न कर्मापेक्षेति ) क्रत्वर्थत्वाभावेन स्वशेषिभूतकर्मापेक्षा नास्तीत्यर्थः, निगमनप्रयोजनमाह ( इदञ्च निगमनमिति ) ॥ * ॥ इति अग्नीन्धनाद्यधिकरणम् ।

यज्ञादिश्रुतेरश्ववत्, यज्ञादीनां ज्ञानसाधनत्वे सत्येव– इत्यादिभाष्यम-

साधयति; तर्हि गृहस्थेष्वपि तदनपेक्षैव साधयितु-मर्हति, यज्ञादिश्रुतिरपि 'विविदिषन्ति' इति शब्दात् कर्मणो वेदनाङ्गतां न प्रतिपादयतीति–अत आह–सर्वापेक्षा–इति। यज्ञादिसर्वकर्मापेक्षैव विद्या कर्मवत्सु गृहस्थेषु, कुतः ? यज्ञादिश्रुतेः, "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इत्यादिना यज्ञादयो हि विद्याङ्गत्वेन श्रूयन्ते । यज्ञादिना विविदिषन्ति वेदितु-

* श्रुतप्रकाशिका *

गृहस्थस्य यज्ञादिकर्मवतो विद्यायामधिकारः ? उत तद्रहितस्येति, यज्ञादिकर्म विद्याङ्गं, नेति, यज्ञेनेत्यादिश्रुतिर्विद्याङ्गतया यज्ञादिकर्म विनियुङ्क्ते, नेति, किं कर्मणो विद्योत्पादकत्वं सम्भवति, नेति, असम्भवे– विनियोगाभावात् यज्ञादेर्विद्याङ्गत्वाभावात्तद्रहितस्य गृहस्थस्य विद्याधिकारः सम्भवेत्, सम्भवति चेत्– विनियोगाद् यज्ञादेर्विद्याङ्गतया तद्वतो गृहस्थस्य विद्याधिकारः, ( यज्ञादिश्रुतिरपीति ) इच्छासाधनत्वं वदतीति भावः । ( यज्ञादिसर्व-

* भावप्रकाशिका *

युक्तम्, प्रकृतिप्रत्यययोर्मध्ये प्रत्ययार्थप्राधान्येन इच्छायामेव तृतीयया साधनत्वप्रतीतेरित्यत्राह ( परमसाध्येच्छया विनेत्यादि ) नन्वन्नद्वेषेण कार्श्यं प्राप्तस्य तत्परिहारायान्यविषयौन्मुख्यलक्षणायामिच्छायां सत्यामपि उत्कटाजीर्णादिप्रयुक्तधातुवैषम्यदोषात् तत्र प्रवृत्तिपर्यन्ता रुचिर्न जायत इति तद्रोचकौषधवत् निरतिशयानन्दं ब्रह्म तत्प्राप्तौ विद्यासाधनमित्यर्थे प्राचीनबहुजन्मानुष्ठितानभिसंहितनित्यनैमित्तिककर्मोपसञ्जातचित्तप्रसादमहिम्ना सम्पन्नविश्वासस्य पुरुषस्य ब्रह्मावाप्तौ तत्साधनविद्यायाञ्च औन्मुख्यलक्षणायामिच्छायां सत्यामपि अनादिभवसञ्चितानेकदुरितदोषेण आस्तिककामुकस्य हेयकर्मणीव विषयभोगप्रावण्यं सम्पादयता प्रतिबन्धाद्विद्यासाधने श्रवणादौ प्रवृत्तिपर्यन्ता रुचिर्न जायत इति प्रतिबन्धादिनिरासपूर्वकमिच्छासम्पादकयज्ञादिविधानमुपपन्नतरमिति

मिच्छन्ति, यज्ञादिभिर्वेदनं प्राप्तुमिच्छन्तीत्यर्थः । यज्ञादीनां ज्ञानसाधनत्वे सत्येव यज्ञादिभिर्ज्ञानं प्राप्तुमिच्छन्तीति व्यपदेश उपपद्यते; यथाऽसेर्हननसाधनत्वे सत्यसिना जिघांसतीति व्यपदेशः । अतो यज्ञादीनां ज्ञानसाधनत्वमवगम्यते । ज्ञानं च वाक्यार्थज्ञानादर्थान्तरभूतं ध्यानोपासनादिशब्दवाच्यं विशदतमप्रत्यक्षतापन्नस्मृतिरूपं निरतिशयप्रियमहरहरभ्यासाधेयातिशयमाप्रयाणादनुवर्तमानं मोक्षसाधनमित्युक्तमस्माभिः पूर्वमेव; वक्ष्यति च

* श्रुतप्रकाशिका *

कर्मापेक्षैवेति ) सूत्रे प्रतिज्ञापदानन्तरश्चशब्दोऽवधारणार्थ इति भावः । ( ज्ञानसाधनत्वे सत्येवेति ) परमसाध्येच्छया विनाऽवान्तरसाध्येषु प्रवृत्तिर्नोपपद्यते, यथा स्वर्गेच्छया विना स्वर्गार्थयज्ञादौ प्रवृत्त्यनुपपत्तिः, एवं ज्ञानेच्छया विना तदर्थेच्छासिद्ध्यर्थप्रवृत्त्यनुपपत्तेः, सञ्जातज्ञानेच्छस्य चेच्छासिद्ध्यर्थप्रवृत्तिनैरपेक्ष्याच्च यज्ञादेरिच्छासाधनत्वं नोपपद्यत इति भावः । ज्ञानस्य न यज्ञाद्यपेक्षा, वाक्यादेव तदुत्पत्तेरित्यत्राह ( ज्ञानं चेति ) ( आप्रयाणादनुवर्तमानमिति ) अङ्गिनोऽनुवृत्त्या तदङ्गस्य कर्मणोऽनुवृत्तिरपेक्षितेति भावः । यज्ञादिषु प्रवृत्तिर्मनोवधानविरोधिनी स्यात् प्रवृत्तिरूपत्वादित्यत्राह

& भावप्रकाशिका &

चेन्न, सत्यम्, यद्यनेन वाक्येन कर्मणामिच्छादिसंयोगः प्रतिपाद्यते, तदा श्रुतनिर्वाहाय कथञ्चिदियं प्रणाड्याश्रीयेत, नत्वेतदस्ति, प्रकृतिप्रत्ययार्थयोर्मध्ये प्रत्ययार्थस्य प्राधान्यमित्यौपगवादिदृष्टसामान्यन्यायापेक्षया इच्छाविषयतया शब्दबोध्य एव शब्दसाधनान्वय इति स्वर्गकामादिवाक्ये वस्तुतविशेषन्यायस्य बलीयस्त्वात्, 'अश्वेन जिगमिषति' 'असिना जिघांसति' इत्यादिलौकिकप्रयोगे च अश्वादिरूपसाधनस्य 'तद्विजिज्ञासितव्यं' 'निदि-

[1]"आवृत्तिरसकृदुपदेशात्" इत्यादिना । एवंरूपं ध्यानमहरहरनुष्ठीयमानैर्नित्यैर्नैमित्तिकैः कर्मभिः परमपुरुषाराधनरूपैः परमपुरुषप्रसादद्वारेण जायते— इति यज्ञादिना विविदिषन्तीति शास्त्रेण प्रतिपाद्यते । अतः कर्मवत्सु गृहस्थेषु यज्ञादिनित्यनैमित्तिकसर्वकर्मापेक्षा विद्या । अश्ववत्— यथा पुरुषगमनसाधनभूतोऽश्वः स्वपरिकरबन्धपरिकर्मापेक्षः, एवं मोक्षसाधनभूताऽपि विद्या नित्यनैमित्तिककर्म-

* श्रुतप्रकाशिका *

( एवंरूपं चेति ) अदृष्टद्वारोपकारकत्वान्न दोष इत्यर्थः ।

अश्ववत्— रथचर्यायोग्योऽश्वो न लाङ्गलाकर्षणे युज्यते, तथा फलोत्पत्तौ न कर्मापेक्षत इति परे व्याचक्षते, फलोत्पत्तावनपेक्षत्वे प्रामाणिकेऽपि उत्पत्तावपेक्षैव सूत्रप्रतिपाद्या 'सर्वापेक्षे'ति प्रतिज्ञातत्वात्, अतः परोक्तव्याख्यानं क्लिष्टम् ।— अपरे तु विद्यायाः फलोत्पत्तावनुग्राहकत्वेन यज्ञाद्यपेक्षाऽस्ति नेति विचार्योऽस्तीति सिद्धान्तयन्ति, यज्ञादिवाक्ये फलसिद्धावपेक्षाप्रतीत्यभावात् वेदनसाधनत्वमात्रं हि तत्रावगम्यते, तेन न विद्यायाः फलसिद्धावुपकारकत्वम् अशाब्दत्वात् 'निचाय्य' 'तस्मिन् दृष्टे' 'तमेवं

* भावप्रकाशिका *

ध्यासितव्यम्' इत्यादिवैदिकप्रयोगे च तव्यप्रत्ययार्थीभूतविधेश्च सन्प्रत्ययाभिहितेच्छाविषय एव गमनान्वयस्य क्लृप्तत्वाच्च प्रकृत्यभिहितायां विद्यायामेवाऽन्वयस्य क्लृप्तत्वादिति भावः ( उत्पत्तावपेक्षैव सूत्रप्रतिपाद्येति ) यद्यपि परैः पूर्वसूत्रे फलोत्पत्तावनपेक्षत्वमस्मिन्सूत्रे विद्योत्पत्तौ कर्मापेक्षितत्वमित्येवोक्तम्, तथाप्यश्ववदित्यत्र यथाऽश्वो न लाङ्गलाकर्षणे विनियुज्यते, रथचर्यायान्तु युज्यते, एवमाश्रमकर्माणि विद्यया फलोत्पत्तौ नापेक्ष्यन्ते, उत्पत्तौ

1. शा० ४-१-१ ॥

परिकरापेक्षा । तदिदमाह स्वयमेव भगवान् "यज्ञ दानतपः कर्म न त्याज्यं कार्यमेव तत् । यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्" "यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति ॥ २६ ॥

सर्वापेक्षाधिकरणं समाप्तम् ॥



* श्रुतप्रकाशिका *

विद्वान्' इत्यादिभिरुत्पन्नस्य वेदनस्य मोक्षसाधनत्वेऽन्यानपेक्षत्वप्रतीतिस्वारस्याच्च तदनुपपन्नम् ।— अन्ये तु विद्याया यज्ञाद्यपेक्षत्वे परिव्राजां विद्यानधिकारप्रसङ्गात् गृहस्थेष्वपि यज्ञाद्यनपेक्षेति पूर्वपक्षं कृत्वा गृहिणां परिव्राजां चाचारे समानेऽपि सङ्गतिनिवृत्तिरूपपारिव्राज्यस्य गार्हस्थ्यस्थाननिविष्टत्वात् कर्मतन्निवृत्तिरूपयोर्गार्हस्थ्यपारिव्राज्ययोर्ग्रहणाग्रहणवद्विकल्पोपपत्तेः परिव्राजकेषु विद्यायामनपेक्षितस्य यज्ञादिकर्मणो गृहिष्वपेक्षा युज्यत इति सूत्रद्वयमेकाधिकरणं वर्णयन्ति, तदयुक्तम्— अधिकरणभेदस्यैव युक्तत्वात्, तथा हि किमुभयं सिद्धान्तसूत्रं, तर्हि यतिष्वनपेक्षाया गृहिष्वपेक्षायाश्च परस्परतादर्थ्याभावात्साध्यद्वयं स्यात्, तदानीमेकाधिकरण्यमयुक्तम्, यद्युच्येत, आद्यं सूत्रं पूर्वपक्षविषयं यतिष्वनपेक्षत्वात्, गृहिष्वनपेक्षेत्येवमर्थपरमिति, तन्न यतिषु यज्ञानपेक्षविद्याधिकारस्याधिकरणान्तरसाध्यत्वात्, तस्य च तन्मूलपूर्वपक्षस्य चैकसूत्रप्रतिपाद्यत्वे वाक्यभेदप्रसङ्गाच्च, 'ऊर्ध्वरेतस्सु च शब्दे हि' इत्यत्रैव तत्समर्थनमाभिप्रायिकमिति च वाच्यं, विद्यानङ्गत्वसमर्थनोपक्षीणस्य सूत्रस्य विद्याधिकारसमर्थनेऽपि तात्पर्यकल्पने गौरवप्रसङ्गात् । अत आद्यसूत्रस्याधिकरणान्तरत्वं युक्तं, तथा सत्यनन्तराधिकरणपूर्वपक्षहेतुरर्थसिद्धः स्यात्

* भावप्रकाशिका *

त्युपेद्यन्त इति, भाष्योक्तत्वात् फलोत्पत्तावनपेक्षाप्यस्मिन्नधिकरणे प्रतिपाद्यत इत्यभिप्रेत्य दूषणमुक्तमिति द्रष्टव्यम् ( अनन्तराधिकरणपूर्वपक्षहेतुरिति )

शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्ग-
तया तेषामप्यवश्यानुष्ठेयत्वात् ॥ २७ ॥

६ अधिकरणम् गृहस्थस्य शमदमादीन्यप्यनुष्ठेयानि ? उत नेति चिन्तायाम्— आन्तरबाह्यकरण-व्यापाररूपत्वात्कर्मानुष्ठानस्य शमदमादीनां तद्विपरीतरूपत्वाच्चाननुष्ठेयानि—

इति प्राप्ते उच्यते— यद्यपि गृहस्थः करणव्यापाररूपकर्मसु प्रवृत्तः, तथाऽपि स विद्वान् शमदमाद्युपेतः स्यात्; कुतः ? तदङ्गतया तद्विधेः— विद्याङ्गतया तेषां विधेः, "तस्मादेवंविच्छान्तो दान्त

* श्रुतप्रकाशिका *

अतोऽधिकरणभेदः स्वारसिकप्राप्तः ॥ २६ ॥

सर्वापेक्षाधिकरणं समाप्तम् ॥

शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥ सङ्गतिः पूर्वपक्षोत्थानमुखेन स्फुटा, किं विद्यानिष्ठस्य गृहस्थस्य शमादीन्युपादेयानि, उत नेति, किं यज्ञादीनां शमादीनां च विरोधोऽस्ति नेति, किमत्र विधीयमाना करणव्यापारोपरतिरूपा शान्तिर्यज्ञादिव्यतिरिक्त-व्यापारशान्तिः, उत सर्वव्यापारशान्तिः, सर्वशान्तिश्चेद्विरोधादनुपादेयानि, न चेदविरोधात् गृहस्थस्याप्युपादेयानि । ( यद्यपीत्यादि ) विहितत्वाद् दृष्ट-

७ भावप्रकाशिका ७

आद्यसूत्रापेक्षया अनन्तराधिकरणे इत्यर्थः ॥ ७ ॥

इति सर्वापेक्षाधिकरणम् ।

किञ्चनानन्नं भवति" इति प्राणविदः सर्वान्नानुमतिः सङ्कीर्त्यते । किमियं प्राणविद्यानिष्ठस्य सर्वान्नानुमतिः सर्वदा, उत प्राणात्ययापत्ताविति विशये विशेषानुपादानात्सर्वदा—

इति प्राप्त उच्यते—प्राणात्यये इति । चशब्दोऽवधारणे, प्राणात्ययापत्तावेवेत्यर्थः । कुतः? तद्दर्शनात्—दृश्यते ह्यन्यत्र ब्रह्मविदामपि प्राणात्ययापत्तावेव सर्वान्नाभ्यनुज्ञा, किं पुनः प्राणविदः । उषस्तः किल चाक्रा-

* श्रुतप्रकाशिका *

र्यत इति सङ्गतिः, प्राणविदः सर्वान्नानुमतिः किं सर्वदा ? उत प्राणसंशयापत्तौ, किं ब्रह्मविद उषस्तस्य प्राणसंशये सत्युच्छिष्टानुमतिदर्शनं प्राणविदः सर्वान्नानुमतेरापद्विषयत्वमवगमयति, नेति, न चेत्सर्वदानुमतिः स्यात्, ब्रह्मविदोऽपि प्राणसंशयेऽनुमतिमवगमयति चेत्, कैमुत्यनीत्या प्राणविदः सर्वान्नानुमतिः प्राणसंशयापत्तावेव स्यात्, प्राणविद्यानिष्ठस्यापि सर्वान्नानुमतेर्दर्शनात् ब्रह्मविदः किं पुनर्न्यायसिद्धा सर्वान्नानुमतिरिति पूर्वपक्षः, सूत्रं प्राण-

* भावप्रकाशिका *

निष्ठस्यापीति ) ननु वामदेव्योपासननिष्ठस्य 'न काञ्चन परिहरेत्तद्व्रत'मिति सर्वस्त्र्यपरिहारानुमतिदर्शनात्, किं पुनर्न्यायेन ब्रह्मविदामपि सर्वस्त्र्यपरिहारप्रसङ्गः । यदि च विद्यान्तरप्रकरणे श्रुतस्य विद्यान्तरान्वये प्रमाणाभावात् वामदेव्योपासनाङ्गस्य सर्वस्त्र्यपरिहारस्य न ब्रह्मविदः प्रसक्तिरस्तीति, तर्हि प्राणविद्याङ्गभूतस्य सर्वान्नीनत्वस्य न ब्रह्मविदि प्रसक्तिरस्तीति चेन्न, वामदेव्योपासने 'न काञ्चन परिहरेत्तद्व्रत'मिति सर्वस्त्र्यपरिहरणे विस्पष्टविधिविभक्तिश्रवणेन विधेयत्वावगमेपीह तादृशविधिप्रत्ययाभावेन सर्वान्नीनत्वस्याऽङ्गत्वेन विधानाभावेन 'एवंविदि पापं कर्म न श्लिष्यते' इत्यादिवत् 'न ह वा एवंविदि किञ्चनाऽनन्नं भवति' इत्यत्रापि अभक्ष्यभक्षणकृतदोषाभावमात्रप्रतिपादनपरत्वे सिद्धे किमिदं कामकृतेप्यभक्षणे दोषाभावप्रतिपा-

षणो ब्रह्मविदग्रेसरो मटचीहतेषु कुरुषु दुर्भिक्षदूषिते-
ष्विभ्यग्रामे वसन्ननशनेन प्राणसंशयमापन्नो ब्रह्मवि-
द्यानिष्पत्तये प्राणानामनवसादमाकाङ्क्षमाण इभ्यं
कुल्माषान् खादन्तं भिक्षमाणस्तेन चोच्छिष्टेभ्यो-
ऽन्ये न विद्यन्त इति प्रत्युक्तः पुनरपि "एतेषां मे
देहि" इत्युक्त्वा तेन चेभ्येनोच्छिष्टेभ्य आदाय दत्ता-
न्कुल्माषान् प्रतिगृह्यानुपानप्रतिग्रहमिभ्येनार्थितः
"उच्छिष्टं वै मे पीतं स्यात्" इति वदंश्चाक्रायणः किमेते
कुल्माषा अनुच्छिष्टा इतीभ्येन पर्यनुयुक्तो "न वा
अजीविष्यमिमानखादन्.... कामो म उदपानम्" इति

* श्रुतप्रकाशिका *

विद्यामात्रविषयम्, तथाऽपि ब्रह्मविदन्नानुमतिः पूर्वपक्षेऽभिप्रेता ।
मटची—अश्मवृष्टिः, इभमर्हतीति इभ्यो हस्तिपः, कुल्माषः— माषविशेषः,
ब्रह्मविदामपि सर्वान्नानुमतिः प्राणात्यये— किं पुनर्दुर्बलप्राणविद्यानिष्ठस्येति

* भावप्रकाशिका *

दनपरम्, उत प्रामादिक एवेति चिन्ताया एवास्मिन्नधिकरणे प्रवृत्ततया
तत्र च प्राणविद्यायाः कामकारस्थलेऽपि अन्नदोषास्पर्शरूपफलसामर्थ्ये
पूर्वपक्षिणोपक्षिप्ते सति यदि प्राणविद्याया अपि ईदृशं सामर्थ्यम्, तर्हि सर्व-
विद्याश्रेष्ठाया ब्रह्मविद्याया अपि कामकृताभक्ष्यभक्षणकृतदोषासंस्पर्शहेतुत्वं
किन्न स्यादिति यदि कश्चिच्चोदयेत्, सम्प्रति तदपि पूर्वपक्षिणो नानिष्ट-
मित्येवं परत्वादस्य ग्रन्थस्य न दोषगन्ध इति ध्येयम् ( पूर्वपक्षेऽभिप्रे-
तेति ) यद्यपि प्राणविद्याविषयविचारे न ब्रह्मविद्यायाः सङ्गतिरस्ति, तन्मात्र-
पर्यवसितत्वादस्य विचारस्य, नहि ब्रह्मविदः सर्वान्नीनत्वसदसद्भावयोः पूर्वो-
त्तरपक्षफलत्वमिति शक्यते वक्तुम्, सिद्धान्ते ब्रह्मविदः सर्वान्नीनत्वाभावस्य
प्राणविदः सर्वान्नीनत्वाभावे साधकत्वोपन्यासेन फलत्वासम्भवात् ( ब्रह्मविदा-

कुल्माषाखादने स्वस्य प्राणसंशयापत्तेस्तावन्मात्रखादनेन धृतप्राणस्य स्वस्योच्छिष्टोदकपानं कामकारितं निषिद्धं स्यादित्युक्त्वा स्वखादितशेषं जायायै दत्त्वा तया च रक्षितानपरेद्युर्याजनेनार्जिजीषया जिगमिषुः पुनरपि प्राणसंशयमापन्नस्तानेवेभ्योच्छिष्टान् स्वोच्छिष्टभूतान् पर्युषितांश्चखाद । अतो ब्रह्मविदामपि प्राणसंशय एव सर्वान्नानुमतिदर्शनादत्राविशेषेण कीर्तितमपि प्राणविदः सर्वान्नीनत्वं प्राणात्ययापत्तावेवेति निश्चीयते ॥ २८ ॥

---

* श्रुतप्रकाशिका *

कैमुत्यन्यायात् सिद्धान्तः ॥ २८ ॥

* भावप्रकाशिका *

मपीति ) ननु ब्रह्मविदां दोषसत्त्वेऽपि 'न ह वा एवंविदि किञ्चनाऽनन्नं भवति' इति प्राणविदां दोषाभावकीर्तनान्नाभक्ष्यभक्षणदोष इति चेन्न, 'एवंविदि पापं कर्म न श्लिष्यते' इति ब्रह्मविद्विषयेपि दोषाभावदर्शनसाम्यात्, यदि च 'नाविरतो दुश्चरितात्' इति दुश्चरितस्य निषिद्धतया तद्वचनं प्रामादिकविषयमिति, तर्हि 'प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' इति तस्मात् 'ब्राह्मणः सुरां न पिबेत्' इत्यादिक्लृप्तसामान्यशास्त्राविरोधेनैव 'न ह वा एवंविदी'ति, शास्त्रस्य कल्प्यविधिभावस्य निर्वाह्यत्वात्, यद्वा नायं फलविधिः, क्लृप्तो हि विशेषविधिः सामान्यविधिं बाधते, अत्र क्लृप्तसामान्यविधिविरोधे 'न ह वा एवंविदि किञ्चनानन्नं भवति' इत्यस्य फलविधिकल्पनायोगेन अर्थवादत्वस्यैव युक्तत्वात्, न चैवं 'एवंविदि पापं कर्म न श्लिष्यते' इत्यादेरपि स्तुतिमात्रत्वप्रसङ्गः, पाप्मनामश्लेषाभावे अनिर्मोक्षप्रसङ्गेन सकलपापाश्लेषस्य मोक्षविधिशास्त्रापेक्षितत्वेन फलविधित्वस्य वक्तव्यत्वात्, प्राणविद्यायाश्च ज्येष्ठत्वश्रेष्ठत्वादिफलकत्वेन फलाकाङ्क्षाया अभावात्, 'स होवाच किम्मेऽन्नं भवि-

## अबाधाच्च ॥ २९ ॥

[1]"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति ब्रह्मविद्योत्पत्तावाहारशुद्धिविधानाबाधादपि ब्रह्मविदां सर्वान्नीनत्वमापद्विषयमवगम्यते । एवं ब्रह्मविदामतिशयितशक्तीनामपि सर्वान्नीनत्वस्यापद्विषयत्वात् प्राणविदोऽल्पशक्तेः सर्वान्नानुमतिरापद्विषयैव ॥ २९ ॥

## अपि स्मर्यते ॥ ३० ॥

अपि चापद्विषयमेव सर्वान्नीनत्वं ब्रह्मविदामन्येषां च स्मर्यते— [2]"प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" इति ॥ ३० ॥

---

* श्रुतप्रकाशिका *

अबाधाच्च ॥ २९ ॥ पूर्वसूत्रे ब्रह्मविदनुष्ठानदर्शनात्कैमुतिकन्याय उपपादितः, अत्र ब्रह्मविद्विषयवचनेन स एव कैमुतिकन्याय उपपादितः ॥ २९ ॥

अपि स्मर्यते ॥ ३० ॥ न केवलं सर्वान्नानुमतेर्ब्रह्मविद आपद्विषयत्वात् प्राणविद आपद्विषयत्वं कल्प्यम्, सर्वेषामपि स्मृतौ कण्ठोक्तमेवेति भावः ॥ ३० ॥

* भावप्रकाशिका *

ष्यतीति यत्किञ्चिदिदमाश्वभ्य आशकुनिभ्य इति होचुः तद्वा एतदनस्यान्नम्' इति श्वपर्यन्तप्राणिजाते विहितस्य प्राणविद्याङ्गस्य प्राणान्नत्वचिन्तनस्य स्तुतिः क्रियते 'न ह वा एवंविदि किञ्चनानन्नं भवति' इति, अतः फलविधित्वाभावात् प्राणविदः प्राणात्यय एव सर्वान्नानुमतिः, 'अनाविष्कुर्वन्नन्वया'दित्यत्र क्लृप्तस्यैव विशेषविधेः 'नाविरतो दुश्चरिता'दिति विशेषशास्त्रेण सङ्कुचितविषयत्वम्, इह तु क्लृप्तसामान्यशास्त्रानुरोधेन 'न ह वा एवंविदि' इत्यस्य विधिकल्पनाभङ्ग इति विवेकः, केचित्तु परमतवद्वामदव्यां-

---

1. छा० ७-२६-२ ॥

## शब्दश्चातोऽकामकारे ॥ ३१ ॥

यतो ब्रह्मविदामन्येषां च सर्वान्नीनत्वमापद्विषयमेव; अत एव सर्वेषामकामकारे शब्दः— कामकारस्य प्रतिषेधकः शब्दो वर्तते, अस्ति हि कठानां संहितायां कामकारस्य प्रतिषेधकः शब्दः, "तस्माद्ब्राह्मणः सुरां न पिबति पाप्मना नोत्सृजा इति" इति । पाप्मना संस्पृष्टो न भवानीति मत्वा ब्राह्मणः सुरां न पिबतीत्यर्थः ॥ ३१ ॥

सर्वान्नानुमत्यधिकरणं समाप्तम् ॥



* श्रुतप्रकाशिका *

शब्दाश्चातोऽकामकारे ॥ ३१ ॥ ब्राह्मणशब्दस्यासङ्कुचितवृत्तित्वात् ब्रह्मविद्विषयमपि इदं वाक्यं साधारणं, किं पुनः प्राणविद इति भावः ।

परे चापरे च सर्वान्नानुज्ञानं किं शमादिवद्विद्याङ्गं विधीयते ? उत स्तुत्यर्थं सङ्कीर्त्यत इति विचार्य उपदेशस्य प्रवृत्तिकरत्वोपपत्तेः प्राणविद्यासन्निधानादङ्गविधिः, भक्ष्याभक्ष्यशास्त्रं 'न हिंस्या'दितिवद्विशेषशास्त्रबाध्यमिति पूर्वपक्षं कृत्वा विधायकाभावान्न सर्वान्नानुज्ञाविधिः, किन्तु सर्वं प्राणस्यान्नमिति विज्ञानप्रशंसार्थोऽर्थवादः, प्राणात्यये हि सर्वान्नानुज्ञा दृश्यते न सर्वदेति व्याचक्षते, तदयुक्तं— सूत्रेऽर्थवादशब्दाध्याहारेण प्रतिज्ञाया वर्णनीयत्वात्, भाष्योक्तयोजनायां हि प्राणात्ययशब्देनैव प्रतिज्ञा पूर्णा ।

अन्ये तु किं सर्वान्नानुमतिः क्रियते ? उतार्थवाद इत्युपोद्घातविचारं

* भावप्रकाशिका *

पासकस्य सर्वस्त्र्यपरिहारवत् प्राणविद्यानिष्ठस्य तदङ्गतया सर्वान्नानुमतिर्विधीयत इति पूर्वपक्षं कृत्वा सिद्धान्तमपि तथैव वर्णयन्ति, परापरमतदूषणपरस्य टीकाग्रन्थस्य च परापरोक्तसूत्राक्षरयोजनामात्रदूषणपरतया विरोधप्रसङ्गो नास्तीति

## विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

८ अधिकरणम्

यज्ञादिकर्माङ्गिका ब्रह्मविद्येत्युक्तम्, तानि च यज्ञादीनि कर्माण्यमुमुक्षुणा केवलाश्र-

* श्रुतप्रकाशिका *

कृत्वा ज्यैष्ठ्यश्रैष्ठ्यगुणकप्राणविद्याङ्गभूतस्य सर्वं प्राणस्यान्नमिति ज्ञानस्य फलत्वात्तदुक्तिरर्थवादमात्रमिति पूर्वपक्षं कृत्वा सर्वमिदं प्राणस्यान्नमिति वाक्यसामर्थ्याद्विधेः कल्प्यत्वात् अप्रतीतविज्ञानतद्विधिकल्पनायोगात् येन केनचिदन्नेन प्राणो रक्षितव्य इति विधिरिति निश्चित्य पश्चात्साक्षाद्विचारमाहुः, किमियं सर्वान्नानुमतिः सर्वदा ? उत प्राणात्यये ? इति, अविशेषात् सर्वदेति पूर्वपक्षः, अप्रतिषिद्धान्नेनान्यदा रक्षणसिद्धेः प्राणात्यय इति सिद्धान्तः कृतः, तत्रोपोद्धातचिन्तायाम् अप्रतीतविज्ञानतद्विधिकल्पनगौरवं तदुक्तमयुक्तं 'स होवाच किं मेऽन्नं भविष्यति' इत्युक्ते 'यत्किञ्चिदिदमाश्वभ्य आशकुनिभ्यस्तत्तेऽन्न'मित्युक्त्वा 'न ह वा एवंविदि किञ्चनानन्न'मित्येवंविच्छब्देन वेदनस्याभिहितत्वात् , अत एवाश्रुतस्य प्राणरक्षणस्य तद्विधेश्च कल्पनमप्ययुक्तम् ॥ ३१ ॥

सर्वान्नानुमत्यधिकरणं समाप्तम् ॥



विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥ अवान्तरसङ्गतिमाह ( यज्ञादीति ) परमप्रकृतेन सङ्गतिरित्यर्थः । किं विद्याङ्गभूतान्याश्रमकर्माणि

ঌ भावप्रकाशिका ঌ

प्रतिपादयन्ति ( ज्ञानस्य फलत्वादिति ) अङ्गभूतज्ञानस्य फलत्वेन कीर्तनादपापश्लोकश्रवणवदर्थवाद इत्यर्थः ॥ ঌ ॥

इति सर्वान्नानुमत्यधिकरणम् ।



( किं विद्याङ्गभूतानीति ) विद्याङ्गभूतान्याश्रमकर्माणि नवेति विचारः, आश्रमकर्माणीत्यस्य विवरणं, केवलाश्रमिणोपीति नतु विद्याङ्गभूतान्याश्र-

मिणाऽप्यनुष्ठेयानि, उत नेति चिन्तायां, विद्याङ्गानां सतां केवलाश्रमिशेषत्वे नित्यानित्यसंयोगविरोधः प्रसज्यत इति यज्ञादीनां केवलाश्रमधर्मत्वं न सम्भवति—

इति प्राप्त उच्यते— "आश्रमकर्मापि- इति ।

* श्रुतप्रकाशिका *

केवलाश्रमिणोऽप्यनुष्ठेयानि, नेति, किमेषां विद्याङ्गत्वे केवलाश्रमाङ्गत्वं सम्भवति, नेति, किं केवलाश्रमाङ्गत्वे नित्यानित्यसंयोगविरोधः प्रसज्यते, नेति, आश्रमाङ्गत्वे विद्याङ्गत्वे च कर्मान्तरत्वमस्ति, नेति च, कर्मान्तरत्वे सत्यनेकस्य कर्मणो विनियोगपृथक्त्वभावेन नित्यानित्यसंयोगविरोधप्रसङ्गेन केवलाश्रमाङ्गत्वासम्भवादमुमुक्षोरननुष्ठेयानि, कर्मान्तरत्वं नास्ति चेद्विनियोगपृथक्त्वेन नित्यानित्यसंयोगविरोधाभावात् केवलाश्रमाङ्गत्वसम्भवात् केवलाश्रमिणोऽप्यनुष्ठेयानि, (नित्यानित्यसंयोगविरोध इति) यावज्जीवमनुष्ठानं मोक्षेच्छानुगुणमनुष्ठानं च विरुद्धमित्यर्थः । केवलाश्रमधर्मत्वं— मुमुक्षारहिताश्रमधर्मत्वम् । आश्रमीति पाठो दृष्टश्चेत् केवलशब्दोऽमुमुक्षुपरः,

७ भावप्रकाशिका ७

कर्माणीति पक्षनिर्देश इति मन्तव्यम्, विद्याङ्गभूतानामाश्रमकर्मत्वस्यैवाऽस्मिन्नधिकरणे सिषाधयिषितत्वादिति द्रष्टव्यम्, (केवलाश्रमाङ्गत्वमिति) आश्रमशब्देन तद्वान् पुरुष उच्यते, आश्रमनिष्ठपुरुषार्थत्वमित्यर्थः, अथवा केवल आश्रमो यस्येति बहुव्रीहिः, पुरुषा अन्यपदार्थः (कर्मान्तरत्वे सतीत्यादि) अयमत्रान्वयः— नित्यानित्यसंयोगविरोधप्रसङ्गेन एकस्य कर्मणो विनियोगपृथक्त्वस्याप्यभावेन च कर्मान्तरत्वे सति विद्याङ्गभूतानां केवलाश्रमाङ्गत्वासम्भवात् तान्यमुमुक्षोर्नानुष्ठेयानि, विनियोगपृथक्त्वेन नित्यानित्यसंयोगविरोधाभावात्, कर्मान्तरत्वं नास्ति चेत्, विद्याङ्गानामेव तेषां केवलाश्रमाङ्गत्वसम्भवात् केवलाश्रमिणोऽप्यनुष्ठेयानीति, (अनुष्ठानञ्च विरुद्धमिति) वास्तवस्य विरोधस्य न वाक्यसहस्रेणापि निवृत्तिर्युक्तेत्यर्थः, एतेन 'एकस्य तूभयत्वे

आश्रमस्य कर्माणि भवन्ति; केवलाश्रमिणामप्यनुष्ठेयानीत्यर्थः । कुतः? "यावज्जीवमग्निहोत्रं जुहोति" इत्यादिना विहितत्वात्— जीवननिमित्ततया नित्यवद्विहितत्वादित्यर्थः ॥ ३२ ॥

तथा विद्याङ्गतया च "तमेतं वेदानुवचनेन" इत्यादिना विहितत्वाद्विद्याशेषतयाऽप्यनुष्ठेयानीत्याह—

सहकारित्वेन च ॥ ३३ ॥

विद्योत्पत्तिद्वारेण विद्यासहकारितयाऽप्यनुष्ठेयानि; अग्निहोत्रादीनामिव जीवनाधिकारस्वर्गाधिकारवद्वि-

---

* श्रुतप्रकाशिका *

( अनुष्ठेयानीत्यर्थ इति ) यज्ञादीनि कर्माणि इत्यध्याहारः ॥ ३२ ॥

अनेन सङ्गतमुत्तरसूत्रार्थमाह ( तथाचेति ) ।

सहकारित्वेन च ॥ ३३ ॥ समुच्चयव्यावृत्त्यर्थं विद्योत्पत्तिद्वारेणेत्युक्तम्, नित्यानित्यसंयोगविरोधमाशङ्क्याह ( अग्निहोत्रादीनामिवेति ) विनियोगपृथक्त्वेन विनियोगः—शेषत्वज्ञापकविधिः, विनियोगपृथक्त्वदर्शनेन नित्यानित्यसंयोगविरोधपरि-

* भावप्रकाशिका *

संयोगपृथक्त्वम्' इति पूर्वतन्त्राधिकरणमपि आक्षिप्तं द्रष्टव्यम् ॥ ७ ॥

( नित्यानित्यसंयोगविरोधपरिहारः सूत्रद्वयफलमिति ) अयम्भावः— सिद्धरूपे वस्तुनि नित्यत्वानित्यत्वादेरिव नित्यत्वकाम्यत्वयोर्न वस्तुतो विरोधः, षोडशिग्रहणे कर्तव्यत्वाकर्तव्यत्वयोरिव सम्भवात्, अपितु एकस्य वाक्यस्य उभयबोधकत्वासम्भवात्, विध्यैकावसेये च प्रमाणान्तराप्रवृत्तेः विरोधो वक्तव्य, अत्र तु विनियोजकप्रमाणद्वयमप्यस्ति, तत्र प्रमाणद्वयवशादुभयार्थत्वेन विरोधः, ननु विद्याया नित्यसमीहितफलत्वाभावात्तदङ्गत्वेनाऽनुष्ठीयमानस्य नित्यत्वं न स्यात्, ततश्च विद्यार्थत्वेन कर्म कुर्वतः प्रत्यवायपरिहाराय नित्यप्रयोगोऽपि पृथक्कर्तव्यः, न चैवं नित्यप्रयोगस्यैवाऽनित्यत्वं स्यादिति चेन्न, यथा स्वर्गार्थो ह्यग्निहोत्रप्रयोगः काम्यो नैमित्तिको वा नित्यमधिकृत्यैव निविशत इति न्यायात् नित्य-

नियोगपृथक्त्वेनोभयार्थत्वं न विरुद्ध्यत इत्यर्थः ॥ ३३ ॥

तद्वदेव कर्मान्तरत्वमपि नास्तीत्याह—

सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३४ ॥

सर्वथा विद्यार्थत्वे आश्रमार्थत्वेऽपि त एव यज्ञादय इति प्रतिपत्तव्यम्, न कर्मस्वरूपभेद इत्यर्थः । कुतः ? उभयलिङ्गात्– उभयत्र श्रुतौ यज्ञादिशब्दैः प्रत्यभिज्ञाप्य विनियोगात्, कर्मस्वरूपभेदे प्रमाणाभावाच्च ॥ ३४ ॥

* श्रुतप्रकाशिका *

हारः सूत्रद्वयफलम्, न त्वेकस्य–विनियोगद्वैधस्यैकेनादर्शितत्वात् ॥ ३३ ॥

उत्तरसूत्रकृत्यमाह ( तद्वदिति ) ।

सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३४ ॥ अग्निहोत्रशब्दस्य तुल्यत्वेऽपि कुण्डपायिनामयनाग्निहोत्रे 'मासमग्निहोत्रं जुहोति' इति विहिते स्वरूपभेदो दृश्यत इत्यत्राह (. कर्मस्वरूपभेदे प्रमाणाभावाच्चेति ) कर्मान्तरत्वव्युदासस्य तन्त्रेणानुष्ठानं फलम् ॥ ३४ ॥

७ भावप्रकाशिका ७

प्रयोगं विकृत्य प्रयोगस्य उभयत्राप्यविशेषात् नित्यविधेः प्रयोजकत्वमात्रं बाधित्वा निविशते; यथा 'यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिष्येत् न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दध्न्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्' इति नित्यं सोमं विकृत्यैव निविशते, न तावता नित्यप्रयोगस्याऽनित्यतापत्तिः, एवमिहापि न विरोध इति भावः ( न त्वेकस्येति ) फलमिति शेषः ॥ ७ ॥

भाष्ये– कर्मस्वरूपभेदे प्रमाणाभावाच्चेति, मासाग्निहोत्रे सन्निहिताग्निहोत्रहोमासम्भवेनाऽनुवादत्वासम्भवेन विधित्वे सिद्धे विहितस्य विधानायोगेन विहितासिद्धाग्निहोत्रहोमात् अस्य होमस्याऽन्यत्वसिद्धौ तत्र वर्तमानमाख्यातप्रत्ययमग्निहोत्रमिति नाम्ना प्रसिद्धाग्निहोत्रप्रत्यभिज्ञापनसमर्थमिति तत्र प्रकरण-

# अनभिभवं च दर्शयति ॥ ३५ ॥

"धर्मेण पापमपनुदति" इत्यादिभिश्च तानेव यज्ञादिधर्म्मान्निर्दिश्य तैर्विद्याया अनभिभवं पापकर्मभिरुत्पत्तिप्रतिबन्धाभावं दर्शयति । अहरहरनुष्ठीय-

---

* श्रुतप्रकाशिका *

अनभिभवं च दर्शयति ॥ ३५ ॥ आदिशब्दो यज्ञादिवाक्यपरः, अङ्गत्वं वदता 'यज्ञेन दानेन' इत्यादिना यज्ञादिधर्मा निर्दिष्टाः, अङ्गत्वेन किञ्चित्कारं वदद्वाक्यमपि यज्ञादिपर्यायशब्देन निर्दिशतीत्यर्थः, दर्शयति श्रुतिरिति शेषः । किञ्चित्कारं विवृणोति ( अहरहरिति ) ।

७ भावप्रकाशिका ७

भेदात् कर्मान्तरत्वमस्तु नाम, इह तु यज्ञादिषु विधेरश्रवणात् विद्यायामेव विधिश्रवणेन न प्रसिद्धयज्ञापेक्षयैषा भेदः, नन्विहापीष्यमाणविद्योद्देशेन यज्ञादिकमेव विधेयम्, नतु विद्या, तस्याः फलत्वेन विधेयत्वायोगात् अग्निहोत्रतुल्यत्वमेव, नच प्रसिद्धस्यैव यज्ञादेः फलसम्बन्धितया विधानमस्त्विति वाच्यम्, तर्हि प्रसिद्धस्यैवाग्निहोत्रस्य माससम्बन्धितया विधानप्रसङ्गात् । अतो मासाग्निहोत्रवत् प्रकरणान्तरात् भेद एव स्यादिति चेन्न, मासाग्निहोत्रस्य प्रसिद्धाग्निहोत्रभेदवत् इह यज्ञादिशब्दोपात्तस्य प्रसिद्धयज्ञादेरनन्यत्वे प्रसिद्धयज्ञादीनां मध्ये कस्य रूपमतिदिश्यत इति दुर्ज्ञानत्वात्, यज्ञादिनाम्ना द्रव्यदेवताद्यतिदेशे देवतोद्देश्यकद्रव्यत्यागत्वादिरूपयज्ञादिशब्दप्रवृत्तिनिमित्तप्राप्तरनिवार्यत्वेन विधेयस्य कर्मणो यज्ञादिभिन्नत्वासम्भवाच्च, 'यज्ञोऽध्ययनं दानमिति प्रथमः' 'यज्ञानां जपयज्ञोऽस्मि 'भोक्तारं यज्ञतपसाम्' इत्यादिष्विव प्रसिद्धयज्ञादिपरत्वमेव युक्तमिति भावः ॥ ७ ॥

( आदिशब्दो यज्ञादिवाक्यपर इति ) यज्ञादीनां प्रतिपादकं वाक्यं यज्ञादिवाक्यं 'कषाये कर्मभिः पक्के' इत्यादिकं गृह्यते, ( अङ्गत्वं वदतेति ) अयमिहान्वयः—अङ्गत्वं वदता 'यज्ञेन दानेने'त्यादिना ये निर्दिष्टाः तानेवाङ्गत्वेन किञ्चित्कारं वदद्वाक्यमपि यज्ञादिपर्यायधर्मकर्मादिशब्देन निर्दिशतीत्यर्थ इति । ततश्च

मानैर्हि यज्ञादिभिर्विशुद्धेऽन्तःकरणे प्रत्यहं प्रकृष्यमाणा विद्योत्पद्यते, अतस्त एवोभयत्र यज्ञादयः ॥ ३५ ॥ विहितत्वाधिकरणं समाप्तम् ॥



## अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥

९ अधिकरणम्

चतुर्णामाश्रमिणां ब्रह्मविद्यायामधिकारोऽस्ति; विद्यासहकारिण आश्रमधर्मा इति

* श्रुतप्रकाशिका *

सर्वापेक्षेति विद्याङ्गत्वमुक्तम्, 'सहकारित्वेन च' इति फलविरोधिनिरसनेन समसमुच्चय उक्त इत्यन्ये । विद्याया एव प्रतिबन्धकनिवर्त्तनशास्त्रवशात् ब्रह्मप्राप्तेर्नित्यतया साध्यत्वानुपपत्तेः, सहभावश्रवणस्याऽङ्गभावविषयतया अन्यथासिद्धत्वात्तथा विभागकल्पनमयुक्तम्, सूत्रभेदस्तु शङ्काभेदनिबन्धनः, 'उभयलिङ्गा'दिति 'तमेतं वेदानुवचनेन' 'अनाश्रितः कर्मफल' मित्यादि श्रुतिलिङ्गात् स्मृतिलिङ्गाच्च सिद्धवज्ज्ञानरूपादित्याहुः, ततोऽपि श्रुतावेव वाक्यद्वये प्रत्यभिज्ञापनपरत्वं युक्तम् अनन्यत्वस्य साध्यत्वात् ॥ ३५ ॥

विहितत्वाधिकरणं समाप्तम् ॥

अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥ अवान्तरसङ्गतिमाह ( चतुर्णामिति ) किं विधुरादीनां ब्रह्मविद्याधिकारोऽस्ति, नेति, किं तेषां साङ्गब्रह्मविद्योपसंहारसामर्थ्यमस्ति, नेति, किमाश्रमाणां साधारणधर्माङ्गिका विद्या भवति, नेति, तपसा ब्रह्मचर्येणेत्यादिविनियोगोपबृंहितं रैक्वादीनां विद्यानि-

ॐ भावप्रकाशिका ॐ

तत्रापि वाक्ये प्रसिद्धविलक्षणधर्मभ्रान्तिः कार्येति भावः ( सिद्धवदिति ) सिद्धवन्निर्देशरूपादित्यर्थः । 'अग्निहोत्रं जुहोति' इत्यादौ हि साध्यावस्थार्थाभिधायित्वस्वभावेनाऽऽख्यातेनापूर्वम् रूपमुत्पाद्यते, नैवं कृदन्तेषु यज्ञादिशब्देष्विस्यर्थः ॥ ७ ॥ इति विहितत्वाधिकरणम् ॥

चोक्तम् । ये पुनराश्रमानन्तरा वर्तन्ते विधुरादयः; तेषां ब्रह्मविद्यायामधिकारोऽस्ति नवेति विशये—आश्रमधर्मैतिकर्त्तव्यताकत्वाद्विद्यायाः, अनाश्रमिणां चाश्रमधर्माभावान्नास्त्यधिकारः—

इति प्राप्त उच्यते—अन्तरा चापि तु—इति । तुशब्दः पक्षव्यावृत्त्यर्थः, चशब्दोऽवधारणे । अन्तरा वर्त्तमानानाम्—अनाश्रमिणामपि विद्यायामधिकारोऽस्त्येव । कुतः ? तद्दृष्टेः—दृश्यते हि रैक्वभीष्मसंवर्तादीनामनाश्रमिणामपि ब्रह्मविद्यानिष्ठत्वम् । न चाश्रमधर्मैरेव विद्यानुग्रह इति शक्यं वक्तुम् "यज्ञेन दानेन तपसाऽनाशकेन" इति दानादीनामाश्रमेष्वनैकान्तिकानामप्यनुग्राहकत्वदर्शनात् । यथोर्ध्वरेतस्सु विद्यानिष्ठत्वदर्शनादग्निहोत्रादिव्यतिरिक्तैरेव विद्यानुग्रहः क्रियते, तथाऽनाश्रमिष्वपि विद्यादर्शनादाश्रमानियतैर्जपोपवासदानदेवताराधनादिभिर्विद्यानुग्रहः शक्यते कर्त्तुम् ॥ ३६ ॥

---

* श्रुतप्रकाशिका *

ष्ठत्वदर्शनं विद्यायाः साधारणकर्माङ्गकत्वमवगमयति, नेति, न चेत्साधारणधर्माङ्गकत्वासम्भवात्सा‌ङ्गविद्योपसंहारासामर्थ्येन विधुरादीनामनधिकारः, अवगमयति चेत्साधारणधर्माङ्गकत्वेन विद्यायास्तदुपसंहारसामर्थ्याद्विधुरादीनां ब्रह्मविद्याधिकारः, विधुरः— मृतदारः, आदिशब्दोपात्तोऽकृतदारः । (न चेति) आश्रमधर्मानुपपत्तौ वर्णधर्मैरनुग्रह उपपद्यत इत्यर्थः, अनैकान्तिकानाम्— अनियतानाम् ॥ ३६ ॥

ø भावप्रकाशिका ø

(अकृतदार इति) समावृत्य अकृतविवाह इत्यर्थः ॥ ø ॥

## अपि स्मर्यते ॥ ३७ ॥

अपि चानाश्रमिणामपि जपादिभिरेव विद्यानुग्रहः स्मर्यते [1]"जप्येनापि च संसिद्ध्येद्ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते" इति; संसिद्ध्येत्—जपाद्यनुगृहीतया विद्यया सिद्धो भवतीत्यर्थः ॥ ३७ ॥

## विशेषानुग्रहश्च ॥ ३८ ॥

न केवलं न्यायस्मृतिभ्यामयमर्थः साधनीयः। श्रूयते चानाश्रमानियतैर्धर्मविशेषैर्विद्यानुग्रहः [2]"तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्येत्" इति ॥ ३८ ॥

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

तुशब्दोऽवधारणे। अतः—अनाश्रमित्वात्, इतरत्-आश्रमित्वमेव ज्यायः; अनाश्रमित्वमापद्विषयम्; शक्तस्य चाश्रमित्वमेवोपादेयमित्यर्थः। भूयोधर्म-

---

* श्रुतप्रकाशिका *

अपि स्मर्यते ॥ ३७ ॥ ब्राह्मणः—ब्रह्मविद्यानिष्ठः, अत्र जपादिना विद्यानुग्रहः कथं ज्ञायत इत्यत्राह (जपाद्यनुग्रहीतयेति) ॥ ३७ ॥

विशेषानुग्रहश्च ॥ ३८ ॥ विशेषशब्दं समासं च व्याचष्टे (धर्मविशेषैर्विद्यानुग्रह इति) ॥ ३८ ॥

आश्रमानियतधर्मैरेवानुग्रह उपपद्यते चेदाश्रमप्राप्तिद्धर्मैरप्याश्रमा उपेक्ष्येरन्, ततश्च यज्ञादिश्रुतिवैयर्थ्यं स्यादित्यत्राह—

अतस्त्वितरज् ज्यायो लिङ्गाच्च ॥ ३९ ॥ (भूयोधर्मकाल्पधर्मकयोर-

---

१. मनु० २-८७ ॥ | २. प्रश्नोप० १-१० ॥

कालपधर्म्मकयोरतुल्यकार्य्यत्वात्, लिङ्गाच्च-स्मृतेरित्यर्थः । स्मर्य्यते च शक्तं प्रत्याश्रमस्योपादेयत्वम् "अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः" इत्यादिना । निवृत्तब्रह्मचर्यस्य मृतभार्य्यस्य चावैराग्ये सति दारालाभ आपत् ॥ ३६ ॥

विधुराधिकरणं समाप्तम् ॥

* श्रुतप्रकाशिका *

तुल्यकार्यत्वादिति ) शक्तं प्रत्यतुल्यकार्यत्वादित्यर्थः । श्रुतेरनुमापकत्वात् स्मृतिर्लिङ्गशब्देनोच्यते, आपच्छब्दार्थमाह ( निवृत्तब्रह्मचर्यस्येति ) पारिव्राज्यव्यावृत्त्यर्थमाह ( अवैराग्ये सतीति ) ब्रह्मनिष्ठेष्वनुयायिवैराग्यं नाम लोकान्तरजन्मान्तरभोगनैरपेक्ष्यम्, अतः इदमवैराग्यमविरुद्धम् । यद्वा गार्हस्थ्यधर्मश्रद्धा अवैराग्यम् ।

परे चापरे च 'अपि स्मर्यते' इतिसूत्रं संवर्त्तादीनामाश्रमबहिष्ठनग्नचर्यास्मरणपरं व्याचक्षते, 'विशेषानुग्रहश्च' इत्येतत् 'जप्येनैव तु संसिध्ये'दित्यनेन साधारणधर्मविशेषैर्विद्यानुग्रहसम्भवपरम् 'अनेकजन्मसंसिद्धः' इति पूर्वकृतसुकृतैर्विद्यानुग्रहपरं च व्याचक्षते, तदयुक्तं—विद्यायाः साधारणधर्मानुग्राह्यत्वे नग्नचरणस्य विरुद्धत्वात् , न हि नग्नचर्या नाम सर्वाश्रमसाधारणो धर्मः, नतु क्वचि-

७ भावप्रकाशिका ७

भूयोधर्माल्पधर्मकयोः भक्तिप्रपत्त्योर्व्यभिचारादाह ( शक्तमिति ) ( पारिव्राज्यव्यावृत्त्यर्थमिति) ननु मृतभार्यस्याकृतदारस्य वा दारालाभेन दारसाध्याश्रमासम्भवेऽपि संन्यासाश्रमस्य सम्भवात् किमित्यनाश्रमित्वं सोढव्यमिति शङ्काव्यावृत्त्यर्थम् अवैराग्ये सतीत्युक्तमित्यर्थः ।

( परे चेत्यादि ) ( आश्रमबहिष्ठनग्नचर्यास्मरणपरमिति ) आश्रमासाधारणधर्मबहिर्भूतनग्नचर्यास्मरणपरमित्यर्थः , यद्यपि शाङ्करभाष्ये संवर्तकप्रभृतीनाञ्च नग्नचर्यादियोगात् अनपेक्षिताश्रमकर्मणामपि महा-

* श्रुतप्रकाशिका *

चोदितः, अतः सूत्रद्वयस्य साधारणधर्मानुग्रहपरश्रुतिस्मृतिविषयत्वं युक्तम्, उन्मत्तचर्यास्मरणेनाश्रमानपेक्षत्वं सिध्यतीति चेत्— न, उन्मत्तचर्यायाः 'जनेनावमतो योगी योगसिद्धिं च विन्दति' इति जनावमानजनितयोगसिद्धये स्वप्रकर्षाच्छादनार्थत्वाद्, दृष्टे सम्भवत्यदृष्टकल्पनस्यान्याय्यत्वाद्विध्यन्तरादर्शनाच्छादनार्थतयाऽप्युपपन्नेनोन्मत्ताचरणेन विद्याया आश्रमनैरपेक्ष्यकल्पनायोगात्, तत्कल्पनस्य 'अतस्त्वितरज्ज्यायः' इत्यनन्तरसूत्रविरोधादनाश्रमित्वनिषेधकवचनान्तरविरोधाच्च, 'लिङ्गाच्च' इत्येतस्य 'अग्ने गृहपते सुगृहपतिस्तेने'ति ब्रह्मवित्पुण्यकृत्तैजसश्चेति गार्हस्थ्यस्य प्राशस्त्यगमकश्रौतलिङ्गादनाश्रमनिन्दापरस्मृतिलिङ्गाच्चेत्यर्थमाहुः, तत्र ज्यायस्त्वप्रतीतेरस्फुटत्वाच्छ्रौतलिङ्गानादरः ॥ ३६ ॥

विधुराधिकरणं समाप्तम् ॥

योगित्वं स्मर्यत इति महायोगित्वस्यैव स्मर्यमाणत्वमुक्तम्, नतु नग्नचर्यायाः, तथापि नग्नचर्यावतो महायोगित्वं स्मर्यत इत्युक्ते महायोगिनो नग्नचर्या स्मर्यत इत्युक्तप्रायत्वात् तथोक्तमिति द्रष्टव्यम्, ननु नग्नचर्यायोगात् अनपेक्षिताश्रमकर्मणां महायोगित्वं स्मर्यत इति किमभिप्रेतम्, नग्नचर्यायोगात् महायोगित्वं स्मर्यत इत्यन्वयोऽभिप्रेतः, ततश्च 'अपि स्मर्यते' इति सूत्रस्य 'विशेषानुग्रहश्च' इतिसूत्रस्य चासाधारणधर्मानुग्राह्यत्वपरत्वम्, उत नग्नचर्यायोगादनपेक्षिताश्रमकर्मणामित्यन्वयोऽभिप्रेतः, ततश्च 'अन्तरा चापि तु तद्दृष्टेः' इतिसूत्रस्य च 'अपि स्मर्यत' इति सूत्रस्य चाश्रमकर्मानपेक्षत्वपरत्वमिति विकल्पमभिप्रेत्य प्रथमं दूषयति ( विद्यायास्साधारणधर्मानुग्राह्यत्व इति ) ( अतस्सूत्रद्वयस्येति ) साधारणधर्मानुग्रहपरत्वमिति शेषः, द्वितीयं दूषयति ( उन्मत्तचर्यास्मरणेनेति ) ( दृष्टे सम्भवतीति ) आश्रमकर्मसाध्यस्यादृष्टस्यानेनानुत्पत्तेः माहात्म्याच्छादनं दृष्टमेव प्रयोजनमिति भावः ( विध्यन्तरादर्शनादिति ) 'तपसा ब्रह्मचर्येण श्रद्धया विद्यया आत्मानमन्विष्ये'दिति भावः ॥ ७ ॥

इति विधुराधिकरणम् ।

तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥

१० अधिकरणम्

नैष्ठिकवैखानसपरिव्राजकाश्रमेभ्यः प्रच्युतानामपि ब्रह्मविद्यायामधिकारोऽस्ति, नेति चिन्तायां विधुरादिवदनाश्रमैकान्तैर्दानादिभिर्विद्यानुग्रहसम्भवादस्त्यधिकारः—

इति प्राप्त उच्यते— तद्भूतस्य तु नातद्भावः— इति । तुशब्दः पक्षव्यावृत्त्यर्थः । तद्भूतस्य— नैष्ठिकाद्याश्रमनिष्ठस्य, नातद्भावः— अतथाभावः, अनाश्रमित्वेनावस्थानं न सम्भवति ; कुतः ? तद्रूपाभावेभ्यो नियमात्— तद्रूपाणि— तेषां नैष्ठिकादीनां रूपाणि— वेषाः धर्मा इत्यर्थः, तेषामभावाः— तद्रूपाभावाः; तेभ्यः शास्त्रैर्नियमात् । नैष्ठिकाद्याश्रमप्रविष्टान्स्वाश्रमधर्मनिवृत्तिभ्यो नियच्छन्ति हि शास्त्राणि [1]"ब्रह्मचार्याचार्यकुलवासी तृती-

---

* श्रुतप्रकाशिका *

तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥ विधुरादेर्विद्याधिकार उक्तः, अनाश्रमित्वसाम्यादाश्रमभ्रष्टानामपि विद्याधिकार इति शङ्कया सङ्गतिः, वैखानसः—वानप्रस्थः । किं नैष्ठिकाद्याश्रमभ्रष्टानां ब्रह्मविद्याधिकारोस्ति, नेति, किमेषां साङ्गविद्योपसंहारसामर्थ्यमस्ति, नेति, किमेषां प्रायश्चित्ताच्छुचित्वं सम्भवति, नेति, किं 'यो ब्रह्मचारी स्त्रियमुपेया' दिति विहितं प्रायश्चित्तं सर्वब्रह्मचारिविषयम्, उत नैष्ठिकादिव्यतिरिक्तविषयम्, 'प्रायश्चित्तं न पश्यामि' इति प्रायश्चित्ताभावस्मरणं किं प्राय-

---

१. छा० २-२३-१ ॥

योऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्" इति । "अरण्यमियात्ततो न पुनरेयात्" इति "संन्यस्याग्निं न पुनरावर्त्तयेत्" इति च । अतो विधुरादिवन्नैष्ठिकादीनामनाश्रमित्वेनाऽवस्थानासम्भवान्न तानधिकरोति ब्रह्मविद्या । जैमिनेरपीत्यविगानं दर्शयन्नुक्तं स्वाभिमतं द्रढयति ॥ ४० ॥

अथ स्यात्— नैष्ठिकादीनां ब्रह्मचर्य्यात् प्रच्युतानां प्रायश्चित्तादधिकारः सम्भवति, अस्ति च प्रायश्चित्तमधिकारलक्षणे निरूपितम् "अवकीर्णिपशुश्च

---

* श्रुतप्रकाशिका *

श्चित्तस्य व्यतिरिक्तब्रह्मचारिविषयतामवगमयति, नेति, न चेत्— प्रायश्चित्तस्य सर्वविषयतया शुद्धिसम्भवेन सामर्थ्यादधिकारः । अवगमयति चेत्— प्रायश्चित्तस्य उपकुर्वाणविषयतया शुद्धेरसम्भवेनासामर्थ्यात् ब्रह्मविद्यानधिकारः । ब्रह्मचारीत्यादिश्रुतिर्नैष्ठिकविषया ॥ ४० ॥

अनन्तरसूत्रमवतारयति ( अथ स्यादिति ) अधिकारलक्षणे षष्ठेऽध्याये अवकीर्णिपशुः— गर्दभः 'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत'

❀ भावप्रकाशिका ❀

( अवकीर्णिपशुश्च तद्वदिति ) 'अवकीर्णिपशुश्च तद्वदाधानस्याऽप्राप्तकालत्वात्' इति जैमिनिसूत्रम्, अवकीर्णिनां ब्रह्मचर्यप्रच्युतानां 'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत' इति स्मृतिविहितनैर्ऋतपशुरूपं प्रायश्चित्तं सिद्धं कृत्वा तत्राऽग्निर्विचारितः, तदधिकरणमित्थम्— 'यदाहवनीये जुहोती'ति सर्वेषां होमानामाहवनीयाधारत्वविधेरवकीर्णी ययाऽवकीर्णः, तया सह वा भार्यामधिगम्य वा अग्नीनाधाय आहवनीये अवकीर्णिपशुं करोतु इति पूर्वपक्षं कृत्वा 'जायापती अग्निमादधीयाताम्' इत्याधानस्य दम्पतिकर्तृकत्वस्मरणेन परस्त्रिया सहाग्न्याधानासम्भवात् 'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रिय-

तद्वत्" इति । अतः प्रच्युतब्रह्मचर्य्यस्य प्रायश्चित्तसम्भवात् कृतप्रायश्चित्तो ब्रह्मविद्यायामधिकरिष्यति- इति ; तत्राह—

न चाधिकारिकमपि पतनानुमाना-
त्तदयोगात् ॥ ४१ ॥

अधिकारलक्षणोक्तमपि प्रायश्चित्तं नैष्ठिकादीनां ततो भ्रष्टानां न सम्भवति ; कुतः ? पतनानुमानात् तदयोगात्—नैष्ठिकादीनां प्रच्युतानां पतनस्मृतेस्तस्य प्रायश्चित्तस्यासम्भवात् "आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः । प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा" इति । अतोऽधिकारलक्षणोक्तं प्रायश्चित्तमितरब्रह्मचारिविषयम् ॥ ४१ ॥

* श्रुतप्रकाशिका *

इत्युक्तम्, ब्रह्मचर्यभ्रष्टोऽवकीर्णी, ब्रह्मचर्य- स्त्रीनियतिः, सा गृहस्थव्यतिरिक्तानां त्रयाणामपि तुल्या, तस्मात्तेषामवकीर्णिप्रायश्चित्तं कर्तव्यमिति पूर्वपक्षिणोऽभिप्रायः ।

न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥ तर्हि आधिकारिकप्रायश्चित्तं किंविषयमित्यत्राह ( अत इति ) य उपकुर्वाणो ब्रह्मचारी भ्रष्टः- तद्विषयमवकीर्णिप्रायश्चित्तमित्यर्थः ॥ ४१ ॥

* भावप्रकाशिका *

मुद्वहेत्' इत्यस्खलितब्रह्मचर्यस्य विवाहविधानेन अकृतप्रायश्चित्तस्य विवाहायोगाच्च अग्न्याधानासम्भवात् उपनयनहोमवत् लौकिकाग्नावेवावकीर्णिपशुरिति पूर्वाधिकरणे लौकिकाग्नावेव उपनयनहोमः समावर्तनानन्तरं श्रुतस्य दारपरिग्रहस्य उपनयनात्पूर्वमसम्भवेन अग्न्याधानरहितस्य माणवक-

१. आग्नेय० १६-५-२३ ॥

**उपपूर्वमपीत्येके भावमशनव-**
**त्तदुक्तम् ॥ ४२ ॥**

नैष्ठिकादीनां ब्रह्मचर्यप्रच्यवनमुपपूर्वम्-उपपातकम्, महापातकेष्वपरिगणितत्वादिति तत्र प्रायश्चित्तस्य भावं- विद्यमानतामप्येके आचार्या मन्यन्ते ; अशनवत्- यथा मध्वशनादिनिषेधस्तत्प्रायश्चित्तं चोपकुर्वाणस्य नैष्ठिकादीनां च समानम् ; तदुक्तं स्मृतिकारैः "उत्तरेषां चैतदविरोधि" इति। गुरुकुलवा-

---

* श्रुतप्रकाशिका *

उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥ ४२ ॥ इदं चोद्यसूत्रं ब्रह्मचर्यप्रच्यवनस्य महापातकेष्वपरिगणितत्वादुपकुर्वाणब्रह्मचारिणः स्त्रीनियमातिक्रमस्योपपातकान्तर्भूतस्य प्रायश्चित्तकथनात्तस्य च नैष्ठिकादिष्वतिदेशात् प्रायश्चित्तं प्राप्तमित्यर्थः, 'उत्तरेषां चैतदविरोधि' इत्यत्रैतच्छब्दः पूर्वोक्तधर्मान् प्रायश्चित्तं

७ भावप्रकाशिका ७

स्याऽऽहवनीयाभावात् लौकिकाग्नावेवोपनयनहोम इति निरूपितम्, तदर्थस्सूत्रे तद्वदिति परामृश्यते ॥ ७ ॥

( इदञ्चोद्यसूत्रमिति ) अस्योपपातकत्वप्रतिपादनपूर्वकप्रायश्चित्तसद्भावप्रतिपादनमुखेन ब्रह्मविद्याधिकारप्रतिपादनपरत्वादेवसुक्तम्, प्रायश्चित्तसद्भावमात्रप्रतिपादनपरत्वे तु सिद्धान्तसूत्रत्वमेव, नहि सामान्यमुखेन प्रवृत्तौ नैर्ऋतपशुः 'आरूढो नैष्ठिकं धर्मम्' इति स्मृत्या विशेषविषययापि न सङ्कोचमर्हति, स्मृतेर्नैष्ठिकरूपब्रह्मचारिविशेषविषयत्वेऽपि 'प्रायश्चित्तं न पश्यामि' इति प्रायश्चित्तदर्शनाभावेन प्रायश्चित्ताभावानुमानम्, तेन च श्रुत्यनुमानमिति विलम्बद्वयमस्ति 'यो ब्रह्मचार्यवकिरेत्' इति प्रायश्चितश्रुतेः सामान्यमुखेन प्रवृत्ततया सामान्यद्वारा विशेषपर्यवसानमित्येक एव विलम्ब इति प्रायश्चित्तश्रुतेरेव बलीयस्त्वम्, ततः 'प्रायश्चित्तं न पश्यामि' इति स्मृतिरसंव्यवहार्यतापादकप्रायश्चित्ताभावपरैवाभ्युपगन्तव्या, ततश्च प्रायश्चित्तसद्भावमात्रपर्यवसितत्वेन चोद्य-

सिनो यदुक्तम्, तत्स्वाश्रमाविरोध्युत्तरेषामप्याश्रमिणां सम्भवतीत्यर्थः तद्वदिहापि । ब्रह्मचर्य्यप्रच्यवने प्रायश्चित्तसम्भवाद्ब्रह्मविद्यायोग्यताऽप्यस्ति ॥ ४२ ॥

* श्रुतप्रकाशिका *

च परामृशति, स्वाश्रमाविरोधिशब्दः स्त्रीसंसर्गादिनिमित्तप्रायश्चित्तादेर्गृहस्थादिष्वनापातार्थः ॥ ४२ ॥

७ भावप्रकाशिका ७

सूत्रत्वं तन्मुखेन विद्याधिकारप्रतिपादनपर्यन्तत्वमस्य सूत्रस्य प्रकृतोपयोगाद्वक्तव्यमित्यभिप्रेत्य चोद्यसूत्रत्वमुक्तमिति द्रष्टव्यम्, ननूपकुर्वाणस्येव नैष्ठिकादीनां मध्वशननिषेधस्यादर्शनात् कथं साम्यमित्याशङ्क्याह ( भाष्ये तदुक्तं स्मृतिकारैरिति ) ( प्रायश्चित्तञ्च परामृशतीति ) ननु प्रायश्चित्तं न प्राङ्निर्दिष्टम्, ब्रह्मचर्याग्नीन्धनभैक्षचरणसत्यवचनमधुमांसगन्धमाल्यादिस्त्रप्राञ्जनाभ्यञ्जनयानोपानच्छत्रकामक्रोधलोभमोहवाद्वादनस्नानदन्तधावनहर्षनृत्तगीतादिवर्जनस्यैव प्राङ्निर्दिष्टत्वात्, तद्व्याख्यातृभिश्च उत्तरेषामप्याश्रमाणामिदं वृत्तं द्रष्टव्यम्, किमविशेषेण नेत्याह ( अविरोधीति ) यत्स्वाश्रमाविरुद्धं द्यूतादिवर्जनं तदेव भवति, नतु विरुद्धम्, अतो नाग्नीन्धनं प्रव्रजिते प्राप्नोति, न गुरुकुलवासो वैखानसे प्राप्नोति न ब्रह्मचर्यं गृहस्थे प्राप्नोतीति व्याख्यातम्, ततश्च प्रायश्चितस्याऽप्रकृततया नैतच्छब्दस्य प्रायश्चित्तपरामर्शित्वं सम्भवति, अत एव स्वाश्रमाविरोधिशब्दः स्त्रीसंसर्गादिनिमित्तप्रायश्चित्तादेः गृहस्थेष्वनापातार्थ इति ग्रन्थोप्यसङ्गतः, स्त्रीसंसर्गादिनिमित्तप्रायश्चित्तादेः प्रागनुक्तेरिति चेदत्राहुः, ब्रह्मचर्यस्याऽतिदेशे 'गर्दभेनावकीर्णी निर्ऋतिं चतुष्पथे यजेत तस्याजिनमूर्ध्ववालं परिधाय लोहितपात्रस्सप्त गृहान् भैक्षं चरेत् कर्माचक्षाणः सम्वत्सरेण शुध्येत्' इति प्रायश्चित्तप्रकरणे वक्ष्यमाणस्य प्रायश्चित्तस्य सापवादकमेकं शास्त्रं 'कार्यकालं संज्ञापरिभाषम्' इति न्यायेन तदेकवाक्यतापन्नतया ब्रह्मचर्योपदेशे तत्प्रायश्चित्तमप्यतिदिष्टं भवतीत्यभिप्रायेण प्रायश्चित्तञ्च परामृशतीत्युपपत्तेरिति, ननु ब्रह्मचर्ये निर्दिष्टे 'गर्दभेनावकीर्णी'ति प्रायश्चित्तप्रकरणगतस्योपदिष्टातिदिष्टब्रह्मचर्यसाधारण्येनोपदेशत एव प्राप्तिसम्भ-

## बहिस्तूभयथाऽपि स्मृतेरा-चाराच्च ॥ ४३ ॥

तुशब्दो मतान्तरव्यावृत्त्यर्थः । उपपातकत्वे महा-

* श्रुतप्रकाशिका *

सिद्धान्तसूत्रमाह—

बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ४३ ॥ उभयथेति पदं व्याचष्टे (उपेति) अतिदेशवचनेन प्रायश्चित्तं प्राप्तं पतनस्मृतिश्चास्ति, तयोः

* भावप्रकाशिका *

वात् 'उत्तरेषां चैतदविरोधि' इत्यनेनातिदेशो व्यर्थ इति चेत्, नूनं भवान् 'अनारभ्य विधानानां प्रकृतौ वा द्विरुक्तत्वा'दिति न्यायमनालोचितपूर्वी, तथाहि सति उपदिष्टातिदिष्टजुहूसाधारण्येन पर्णताया अपि प्राप्तिप्रसङ्गात्, यदि चयेनातिदेशेन जुहूः प्राप्यते तेनैव पर्णताया अपि प्राप्तिसम्भवात् द्विरुक्तिदोषप्रसङ्गेन विकृतौ पर्णतोपदेशो व्यर्थ इति, तर्हि प्रकृतेप्युपदिष्टातिदिष्टब्रह्मचर्यसाधारण्येन प्रायश्चित्तोपदेशो व्यर्थः, यद्येवमुपकुर्वाणस्यापि ब्रह्मचर्यं नोपदिष्टं, 'प्रागुपनयनात् कामचारवादभक्षो हुतान्ब्रह्मचारी' इत्यनुपनीतस्यैव ह्युपदिष्टम्, उपकुर्वाणे तु 'उक्तं ब्रह्मचर्यमग्नीन्धनभैक्षचरणे'त्यादिना अतिदिश्यते, अत उपकुर्वाणस्यापि ब्रह्मचर्यमतिदिष्टमिति कृत्वा अनुपनीतब्रह्मचर्य एव प्रायश्चित्तमुपदेशतः प्राप्नोति, नोपकुर्वाणब्रह्मचर्येऽपीति चेत्, माभूद् ब्रह्मचर्यमुपदिष्टं, माच भूत्प्रायश्चित्तमपि, तथाप्यनुपनीते उपदिष्टस्य प्रायश्चित्तस्य 'उक्तं ब्रह्मचर्यमग्नीन्धनभैक्षचरणे'त्यनेनोपकुर्वाणेऽतिदिष्टतया तस्य 'उत्तरेषां चैतदविरोधी'त्यनेन परामर्शे दोषाभावात्, ननु 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन तमतिरात्रेण तं द्विरात्रेण' इत्युपदेशत एव अग्नेरग्निष्टोमोक्थ्यादिसाधारण्यमुपदिश्यते, ततश्च तदाश्रिताः श्येनाकृत्यादिगुणकामाः सर्वसाधारणा भवन्तीतिवत् 'उत्तरेषां चैतदविरोधी'त्यस्यापि 'तमुक्थ्येन तमतिरात्रेण' इत्यादिनिर्देशतुल्यतया ब्रह्मचर्यस्य उपदेशत एव प्रायश्चित्तस्य सर्वसाधारणत्वेन नातिदेशतः प्राप्तस्य प्राप्तिरिति चेन्न, इष्टापत्तेः, अतिदेशतोऽपि प्राप्तिमपेक्षमाणानामुपदेशतः प्राप्तिर्लभ्यते चेत्, कथमनिष्टाय सा स्यात् ॥ * ॥

पातकत्वेऽप्येते बहिर्भूता एव ब्रह्मविद्याधिकारिभ्यः; ब्रह्मविद्यायामनधिकृता इत्यर्थः । कुतः? स्मृतेः-पूर्वोक्तात् पतनस्मरणात् । यद्यपि कलुषनिर्हरणाय कैश्चिद्वचनैः प्रायश्चित्ताधिकारो विद्यते, तथाऽपि कर्माधिकारानुगुणशुद्धिहेतुप्रायश्चित्तं न सम्भवति, "प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा" इति स्मृतेरित्यर्थः । आचाराच्च— शिष्टा हि नैष्ठिकादीन्भ्रष्टान् कृतप्रायश्चित्तानपि वर्जयन्ति, तेभ्यो ब्रह्मविद्यादिकं नोपदिशन्ति; अतस्तेषां नास्ति

* श्रुतप्रकाशिका *

कथं विरोधः परिह्रियते इत्यत्राह ( यद्यपीति ) कर्मशक्तिस्त्रिधा— प्रत्यवायकरी , वैदिककर्माधिकारप्रतिबन्धकरी, सजातीयकर्मरुचिकरी चेति, तत्र कानिचित्प्रायश्चित्तानि शक्तित्रयविनाशकानि, कानिचिदन्यतमशक्तिविनाशकानि, अत्रातिदेशपतनस्मृतिविरोधेऽतिदेशस्मृतिः प्रत्यवायजननशक्तिविनाशकं प्रायश्चित्तमाह, पतनस्मृतिस्तु वैदिककर्मानधिकारशक्तिविनाशकप्रायश्चित्ताभावमाह, 'येन शुद्धये' दित्युक्तत्वात्, तस्मादविरोधः । अतोऽतिदेशसिद्धप्रायश्चित्तेन नरकानुभवलाघवे सत्यपि पतनस्मृतिवचनान्न ब्रह्मविद्याधिकार इत्यर्थः । आचाराच्चेति सूत्रखण्डोपादानम्, वर्जनफलमाह ( नोपदिशन्तीति )

ॐ भावप्रकाशिका ॐ

भाष्ये— कर्माधिकारानुगुणशुद्धिहेतुप्रायश्चित्तं न सम्भवतीति, 'बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः । शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत्' इति मनुवचनम्, न संवसेत्— अन्योन्यं गृहभोजनादिसंव्यवहारं न कुर्यादित्यर्थः । नास्मिन् लोके प्रत्यापत्तिर्विद्यते, कल्मषं तु निहन्यते 'प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् । कामतो व्यवहार्यस्तु वचनादिह जायते' इत्यादिस्मरणात्, अज्ञानकृतञ्च यद्भवेत् तत्प्रायश्चित्तैरपैति, तत्कामाच्चेत् वचनादव्यवहार्यस्तु जायत इत्यर्थः, अतश्च 'प्रायश्चित्तं न पश्यामी'ति स्मृतेरपि

**ब्रह्मविद्यायामधिकारः ॥ ४३ ॥**

तद्भूताधिकरणं समाप्तम् ॥

* श्रुतप्रकाशिका *

'अनाश्रमी न तिष्ठे' दित्यनाश्रमित्वं निषिद्धम् , आश्रमभ्रंशोऽपि निषिद्धः, एवं निषेधे समाने कथमेकत्र विद्याधिकारोऽन्यत्रानधिकारः, उच्यते—अनाश्रमिणामपि विद्याधिकारः श्लाघ्यत्वं च श्रुतम्, आश्रमप्रच्युतानां तु न तथेति विशेष इति ।

परे तु तद्भूतस्येत्येकं सूत्रं पृथगधिकरणं वदन्ति, तत्र ऊर्ध्वरेतसामाश्रमप्रत्यवरोहः प्रामाणिको न वेति संशेरते ब्रह्मविद्याधिकारसिद्ध्यर्थम् , पूर्वाश्रमकर्मानुष्ठानचिकीर्षया रागादिना वा सम्भवतीत्युक्त्वा नियमश्रुत्या तदप्रामाणिकत्वं सिद्धान्तयन्ति, 'न चाधिकारिकमपि' इत्यधिकरणान्तरं नैष्ठिकादीनामाश्रमभ्रष्टानां प्रायश्चित्तसम्भवासम्भवविषयं वदन्तोऽसम्भव इति सिद्धान्तयन्ति, यदा आश्रमभ्रष्टानां प्रत्यवायवचनानि दृश्यन्ते, प्राय-

* भावप्रकाशिका *

तदनुगुण एवार्थ इत्यर्थः ( परे त्वित्यादि ) प्रत्यवरोहः पूर्वाश्रमप्राप्तिः, ( विद्याधिकारानधिकारसिद्धमिति ) पूर्वेणान्वयः ( पूर्वाश्रमधर्मेष्वनुष्ठानचिकीर्षयेति ) पूर्वाश्रमधर्मेषु यागहोमादिषु सुखानुष्ठेयताप्रयुक्तचिकीर्षयेत्यर्थः ( रागादिनेति ) गृहस्थोऽहं पत्न्यादिपरिवृतस्स्यामित्याशयेनेत्यर्थः ( नियमश्रुत्येति ) तेषां— तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्यः—इति सूत्रपाठ इत्यर्थः, तद्भूतस्य—उर्ध्वरेतस आश्रमान्प्राप्तस्य, नातद्भावः— न ततः प्रच्युतिः, न ततः प्रत्यवरोह इति यावत् , 'अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्नरण्यमियात् न पुनरेयात्' इति नियमादित्यर्थः । 'यथा ब्रह्मचर्यं समाप्य गृही भवेत् गृही भूत्वा वनी भवेत् ' इत्यारोहवचोदर्शनवत् अवरोहवचसो अदर्शनादिति भावः, अभावाच— शिष्टाचाराणामभावाच्चेत्यर्थः, इत्येवं नियमश्रुत्या अतद्रूपेणाऽभावेन च प्रत्यवरोहाप्रामाणिकत्वं सिद्धान्तयन्तीत्यर्थः, तदप्रामाणिकत्वं सिद्धान्तयन्तीत्यस्यानन्तरं 'नचाधिकारिकमपि' इत्यधिकरणान्तरं नैष्ठिकादीनामाश्रमभ्रष्टानां प्रायश्चित्तसम्भवासम्भवपरं वर्णयन्तोऽसम्भव इति

* श्रुतप्रकाशिका *

श्चित्तासम्भवोऽपि संशयास्पदं भवति, तदा कथं अंशस्य सद्भावे प्रमाणविरुद्धत्वे च सन्देहः, अतः सन्देहाभावाद्विचारोऽनुपपन्नः, अतो 'नातद्भावः' इति सूत्रमपि मूलविचारे हेतुगर्भम्,— ऐकाधिकरण्यमिच्छतामपरेषामपि प्रच्युतिरस्ति नेति विचार उक्तन्यायादनुपपन्नः ।— अन्येषामपि तद्भूतसूत्रस्य पृथगधिकरणत्वं संशयाभावादयुक्तम् । 'आश्रमादाश्रमं गच्छे'दित्यविशेषवचनात्, पतनवचनस्यानाश्रमित्वरूपेण प्रच्यवनविषयत्वसम्भवाच्च विचार इति चेत्— न, 'संन्यस्याग्निं न पुनरावर्त्तये'दित्याश्रमप्रत्यवरोहनिषेधश्रुतेः स्फुटार्थतया सम्भावितार्थान्तरस्मृतिवचनेन सन्देहानुदयात्, अविदितनिषेधवाक्यस्य सन्देहोदय इति चेत्—अविदितस्मृतिवचनस्य सन्देहाभावादनारम्भः स्यात्, विदितस्मृतिवचनस्याविदितनिषेधवाक्यस्य सन्देह इति चेत्— तर्हि तत्तदेकदेशाज्ञाननिमित्तसन्देहानन्त्यादनन्ताधिकरणकल्पनप्रसङ्गः, 'न चाधिकारिक'मिति ऊर्ध्वरेतसामाश्रमभ्रष्टानां प्रायश्चित्ताभावस्मरणाद्विद्यानधिकार इति पूर्वपक्षसूत्रं कृत्वा वार्द्धुषिकत्वं व्रताच्च्युति' रिति व्रतच्युतेरुपपातकत्वात्, मध्वशनोपपातकप्रायश्चित्तस्यात्रापि प्राप्तिस्मरणात् , श्रौतस्याप्यवकीर्णिप्रायश्चित्तस्य ब्रह्मचारित्वसामान्येन नैष्ठिकेऽपि प्राप्तत्वात्, 'वानप्रस्थोदीक्षाभेदे कृच्छ्रं द्वादशरात्रं वर्द्धये' दित्यादिवचनात् प्रायश्चित्ताभावस्मृतेः प्रायश्चित्तगौरवाभि-

ॐ भावप्रकाशिका ॐ

सिद्धान्तयन्तीति केषुचित्पाठो दृश्यते, सत्वग्रन्थः, तदंशे उत्तरत्र दूषणस्य कस्याप्यनुक्तेः, परमते च 'न चाधिकारिकमपि पतनानुमानात्तदयोगात्' इति सूत्रेण प्रायश्चित्तासम्भवं पूर्वपक्षीकृत्य 'उपपूर्वमपीत्येके भावमशनवत्तदुक्तम्' इति प्रायश्चित्तसद्भावस्सिद्धान्तितः, 'बहिस्तूभयथापि' इति सूत्रञ्च कृतप्रायश्चित्तानामप्यसंव्यवहार्यतापादनपरं पृथगधिकरणम् । अतो नायं परमतानुवादो भवितुमर्हतीति लेखकदोषायत्तः, केचित्तु 'बहिस्तूभयथापी'त्यधिकरणे कृतप्रायश्चित्तस्याप्यसंव्यवहार्यताप्रतिपादनात् संव्यवहार्यतापादकप्रायश्चित्तासम्भवपरोऽयं ग्रन्थ इत्याहुः ( सद्भावे प्रमाणविरुद्धत्वे चेति ) प्रामाणिकत्वाप्रामाणिकत्वयोरित्यर्थः, प्रामाणिकत्वरूपप्रथमाधिकरणपूर्वपक्षोत्थापकाभावात् प्रथमाधिकरणसंशयोनुपपन्न इति भावः, ( मूलविचार इति )

* श्रुतप्रकाशिका *

प्रायत्वसम्भवाच्च प्रायश्चित्ताभावस्मरणस्य मूलादर्शनात्तत्सद्भावस्मरणस्य ब्रह्मचारित्वादिरूपसामान्यन्यायमूलत्वेन शास्त्रसंस्पर्शसम्भवात् 'शास्त्रस्था वा तन्निमित्तत्वा' दिति न्यायेन शास्त्रसंस्पर्शवतः प्राबल्यात् प्रायश्चित्तेन ब्रह्मविद्याधिकार इति 'उपपूर्व'मिति सूत्रेण सिद्धान्तयन्ति ।—अन्ये 'उपपूर्वमपि इत्येके' 'बहिस्तूभयथाऽपि' इति सूत्रस्वारस्यविरोधात्तदयुक्तम्, एक इति पदेन पूर्वपक्षत्वं, तुशब्देन तद्व्यावृत्तिः, उभयथाशब्देन पतनीयत्वे अपतनीयत्वे च बहिष्कार्यत्वं हि प्रतीयते, प्रायश्चित्ताभावस्मरणस्य न शास्त्रसंस्पर्श इत्यप्ययुक्तं, बाधकाभावे श्रुतिमूलत्वसिद्धेः, शास्त्रसंस्पृष्टं प्रायश्चित्तस्मरणं बाधकमिति चेत्— न, 'येन शुद्ध्ये'दिति प्रायश्चित्ताभाववचनस्य शुद्धिहेत्वभावविषयत्वात्, प्रायश्चित्तसद्भावचनस्य तु कल्मषनिर्हरणविषयत्वेनाप्युपपत्तेः, अधिकारापादकप्रायश्चित्तसद्भावानवगमकतया च विरोधाभावात् बाधकत्वानुपपत्तेः, अनन्यथासिद्धं हि बाधकं 'बहिस्तूभयथाऽपी'ति सूत्रमकृतप्रायश्चित्तानामाश्रमभ्रष्टानामनधिकारसमर्थनपरमधिकरणान्तरं वर्णयन्ति, तदप्ययुक्तं—संशयाभावात्, प्रायश्चित्ततोऽपि शुद्धौ संदिग्धायामकृतप्रायश्चित्ततया निर्णीताशुद्धीनां कथं ब्रह्मविद्याधिकारसम्भावना । ननु 'इन्धनार्थमशुष्काणां द्रुमाणामवशातन'मित्यादेरुपपातकत्वात्तादृशं कुर्वतामितरैः संव्यवहारादिशास्त्रीयानुष्ठानादिदर्शनादाश्रमभ्रंशस्याप्युपपातकत्वाविशेषात् संशय इति चेत्, तर्ह्यनधिकार इति सिद्धान्तोऽनुपपन्नः— अशुष्कद्रुमशातनादिकारिषु कर्मानधिकारासंव्यवहाररूपहेत्वभावस्य भवद्भिरेवोक्तत्वात्, उपपातकेष्वपि गुरुतरपापकारिषु हेतुसद्भाव इति चेत्तर्हि तेषु पूर्वोक्तन्यायेन संशयाभावादेवानारम्भणीयता ॥ ४३ ॥

तद्भूताधिकरणं समाप्तम् ।

ॐ भावप्रकाशिका ॐ

मूलभूतप्रायश्चित्तविचारे निर्णायकोत्तरसूत्रप्रतिपाद्यन्यायगर्भतयैकमधिकरणमित्यर्थः ( प्रच्युतिरस्ति नेतीति विचार इति ) प्रच्युतिः प्रामाणिकी अप्रामाणिकी वेति विचार इत्यर्थः ॥ ॐ ॥

इति तद्भूताधिकरणम् ।

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

११ अधिकरणम्

कर्माङ्गाश्रयाण्युद्गीथाद्युपासनानि किं यजमानकर्तृकाणि? उतर्त्विक्कर्तृकाणीति चिन्तायां यजमानकर्तृकाणीत्यात्रेयो मन्यते, कुतः? फलश्रुतेः— वेदान्तविहितेषु दहराद्युपासनेषु फलोपासनयोरेकाश्रयत्वदर्शनादिह च क्रतुफलाप्रतिबन्धरूपस्योद्गीथोपासनफलस्य यजमानाश्रयत्वश्रवणादित्यर्थः। न च गोदोहनादिवदङ्गाश्रयत्वेन यजमानकर्तृकत्वासम्भवः, गोदोहनादिषु ह्यध्वर्युकर्तृकप्रणयना-

---

* श्रुतप्रकाशिका *

स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥ इदमधिकरणं प्रासङ्गिकम्, उपासनानुष्ठात्रनुष्ठातृविभागप्रसङ्गेनोद्गीथोपासनादेरनुष्ठात्रनुष्ठातृविभागचिन्ता क्रियत इति सङ्गतिः, क्रत्वङ्गाश्रयाण्युपासनानि किं यजमानकर्तृकाणि? उत ऋत्विक्कर्तृकाणि, किं दहराद्युपासनानामिव फलिकर्तृकत्वं न्यायमुत गोदोहनादेरिव ऋत्विक्कर्तृकत्वं, किं गोदोहनादिषु ऋत्विक्कर्तृकत्वं यजमानेनाशक्योपादनतया? उत साङ्गप्रधानानुष्ठानाय ऋत्विक्परिक्रयश्रवणात्, अशक्यतया चेत्— तदभावात् फलिकर्तृकत्वोपपत्तेः यजमानकर्तृकत्वम्, परिक्रयश्रवणाच्चेत्— गोदोहनादाविव ऋत्विक्कर्तृकत्वस्य न्याय्यत्वादृत्विक्कर्तृकत्वम्, उद्गीथाद्युपासनानीत्युक्ते उपासनस्य कर्माङ्गत्वं माभूदिति कर्माङ्गाश्रयाणीत्युक्तम्, (न चेत्यादि) प्रणयनस्याध्वर्युकर्तृकत्वात् तदाश्रयस्य गोदोहनस्यो-

* भावप्रकाशिका *

(कर्माङ्गाश्रयाणीत्युक्तमिति) प्रणयनाश्रितगोदोहनस्यैव उद्गीथाश्रितस्य उपासनस्याऽङ्गत्वाभावात्— उद्गीथस्याऽऽश्रयत्वमात्रतयाऽङ्गित्वाभावादित्यर्थः। भाष्ये— उद्गीथोपासनफलस्य यजमानाश्रयत्वश्रवणादित्यर्थ इति, इदमुपलक्षण 'तथा कामोऽर्थसंयोगात्' इत्यधिकरणे 'यदि कामयेत वर्षुकः पर्जन्यस्स्या-

श्रयगोदोहनोपादानमन्येनाशक्यम्, इह तूद्गातृकर्तृकेऽप्युद्गीथे तस्योद्गीथादेः रसतमत्वानुसन्धानं यजमानेनैव कर्तुं शक्यते ॥ ४४ ॥

इति प्राप्तेऽभिधीयते—

आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ४५ ॥

आर्त्विज्यम्—ऋत्विजः कर्मोद्गीथाद्युपासनमित्यौडुलोमिराचार्यो मन्यते; कुतः तस्मै हि प्रयोजनाय-

---

* श्रुतप्रकाशिका *

पादानं यजमानेन फलाश्रयभूतेनापि कर्त्तुमशक्यम्, अत्र तु शक्यत्वात् फलाश्रय एव कर्तेत्यर्थः ॥ ४४ ॥

सिद्धान्तसूत्रमाह—

आर्त्विज्यमित्यौडुलोमिस्तस्य हि परिक्रियते ॥ ४५ ॥ तस्मै हि प्रयोजनायेति चतुर्थीव्याख्यानम्, फलसाधनेत्यादिना तच्छब्दव्याख्यानम्,

ॐ भावप्रकाशिका ॐ

दिति नीचैस्सदो मिनुयात्' इति विहितानां सदोमानाश्रितानां गुणानां फलं यजमानगाम्येव, यथा 'त्र्यहं नाश्नीया'दित्यादिकं तपः सत्यप्याध्वर्यवसमाख्याने याजमानम्, तपसः प्रधानफलसिद्ध्यर्थत्वात् प्रधानफलस्य च याजमानत्वात्, तथा कर्माङ्गफलमपि यजमानगाम्येव, कुतः? अर्थसंयोगात् 'यजेत' इत्यात्मनेपदेन साङ्गप्रधानफलस्य यजमानगामित्वश्रवणात् अङ्गाश्रितफलानामपि परम्परया तत्साध्यत्वादिति समर्थितत्वात्, अङ्गाश्रितोपासनफलं यजमानगाम्येव, अतो 'वर्षति वर्षति हे'त्यादीनामपि वृष्ट्यादिफलानां यजमानगामित्वं सिद्धमिति द्रष्टव्यम् । ( तदाश्रयस्य गोदोहनस्येति ) स आश्रयो यस्येति बहुव्रीहिः, यत्र हि गुणः कारकतां प्रतिपद्यते, स आश्रय इति निर्वर्त्य एव मीमांसकानामाश्रयत्वव्यवहारात् निर्वर्तकतयोपादानं कर्तुमशक्य मित्यर्थः ॥ ॐ ॥

र्त्विक् परिक्रियते, फलसाधनभूतस्य साङ्गस्य क्रतोरुपादानायेत्यर्थः। कर्मविधिषु [1]"ऋत्विजो वृणीते", "ऋत्विग्भ्यो दक्षिणां ददाति" इति ऋत्विक्कर्तृकत्वशास्त्रेण फलसाधनभूतं साङ्गं कर्म ऋत्विग्भिरनुष्ठेयमित्यवगम्यते; तदन्तर्गतानि कायिकानि मानसानि

* श्रुतप्रकाशिका *

परिक्रियत इत्येतद्विवृणोति (कर्मविधिष्विति) ततः किमित्यत्राह (तदन्तर्गतानीति) (न च शक्त्यशक्ती तस्य निबन्धनमिति) न हि ऋत्विजाऽन्येन क्रियमाणमन्येन कर्तुमशक्यम्, तस्माद्वचननिबन्धनं गोदोहने

॥ भावप्रकाशिका ॥

भाष्ये– फलसाधनभूतस्येति, भूतस्य प्राप्तस्येत्यर्थः, फलसाधनगोदोहनोपासनादिगुणकामयुक्तस्येत्यर्थः। यद्वा– साङ्गस्येत्येतद् अङ्गाश्रितानामप्युलक्षणम्, ततश्च 'तस्मै हि परिक्रियते' इति सूत्रे हिरप्यर्थः, उद्गीथाद्युपासनमार्त्विज्यम्, तस्माद् अपि परिक्रियते ऋत्विगिति सूत्रार्थ इति भाष्यकृताशयः। भाष्ये– साङ्गं कर्म ऋत्विग्भिरनुष्ठेयमित्यवगम्यत इति, नचैवं प्रधानस्य द्रव्यत्यागात्मकस्य यागस्यापि ऋत्विक्कर्तृकत्वप्रसङ्ग इति वाच्यं, यजमानद्रव्यस्य त्यागे ऋत्विजामसामर्थ्येन लिङ्गबलात् हविस्त्यागदक्षिणादानादिव्यतिरिक्त एव ऋत्विजां कर्तृत्वमिति सामर्थ्यादवसीयते (नहि ऋत्विजान्येनेति) यदि शक्त्यशक्त्योरेव कर्तृनियमे नियामकत्वम्, तर्हि अध्वर्य्वादिना कार्यस्यापि यजमानेनापि कर्तुं शक्यत्वात् याजमानत्वप्रसङ्गः, अतश्च 'शास्त्रफलं प्रयोक्तरि' इत्यधिकरणे द्वितीयपूर्वपक्षन्यायेन अशक्तस्यैव यजमानस्य ऋत्विक्द्वारा कर्तृत्वमित्यापतेत्, तस्मात् परिक्रयवचनबलादेव अङ्गानां यजमानभिन्नकर्तृकत्वं वक्तव्यम्, तादृशं वचनमुपासनेष्यविशिष्टमिति भावः। (वचननिबन्धनमिति) 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्यध्वर्युकर्तृकप्रणयने गोदोहनस्य कारकत्वविधायकवचनबलादित्यर्थः, गोदोहनस्याऽप्य-

१. यजु० ६-३-७॥

च कर्माणि ऋत्विक्कर्तृकाण्येव। न च शक्त्यशक्ती तस्य निबन्धनम्। यद्यप्युद्गीथाद्युपासनं पुरुषार्थः, तथाऽपि क्रत्वधिकृताधिकारत्वात् क्रतोश्च साङ्गस्य ऋत्विक्कर्तृकत्वात् "यदेव विद्यया करोति.... तदेव वीर्यवत्तरम्" इति ऋत्विक्कर्तृकक्रियोपयोगित्वेन विद्या-

* श्रुतप्रकाशिका *

एककर्तृकत्वमित्यर्थः। अङ्गत्वे सति हि ऋत्विक्कर्तृकत्वं, नेदमङ्गमित्याह (यद्यपीति) परिहरति (तथाऽपीति) ऋत्विक्कर्तृककर्मोपयोगित्वेन प्रोक्षणादिवदिदमपि ऋत्विक्कर्तृकम्, अग्र्यप्रायन्यायादित्याह (क्रत्वधिकृतेति) (यदेव विद्ययेति) ऋत्विक्कर्तृककर्मणो वीर्यवत्तरत्वसाधनभूताया विद्यायाः कर्त्रपेक्षायामन्तरङ्गबहिरङ्गन्यायेनासन्नर्त्विक्कर्तृकत्वं युक्तमिति न्याय्यमिति न्यायोपेतात् 'विद्यया करोती'ति वाक्यस्वारस्याच्चोद्गीथाद्युपासनानि

* भावप्रकाशिका *

ध्वर्युकर्तृकव्यापारविषयत्वाभावे तत्कारकत्वासम्भवादिति भावः। प्रकृते तु परिक्रयवचनबलात् ऋत्विक्कर्तृकत्वसिद्धिरिति द्रष्टव्यम् (अङ्गत्वे सति हि ऋत्विक्कर्तृकत्वमिति) दक्षिणानतानामृत्विजां साङ्गप्रधानानुष्ठानापरपर्यायभावनाशब्दवाच्यप्रयोगाङ्गत्वान्न गुणकामेषु कर्तृत्वं सम्भवतीत्यर्थः। (ऋत्विक्कर्तृककर्मोपयोगित्वेनेति) अङ्गभूतस्याऽप्युपासनस्य क्रतुप्रयोगाद्बहिरनुष्ठातुमशक्यत्वेन तत्प्रयोगमध्यपातित्वाविशेषात् परिक्रयस्य च चिकीर्षितसर्वार्थत्वावगमाच्च उद्गीथोपासनस्यापि ऋत्विक्कर्तृकत्वं सिद्धमिति भावः। (प्रोक्षणादिवदिति) 'नीचैस्सदो मिनुया'दिति प्रतिपादितसदोमानादिगुणाः आदिपदेन परामृश्यन्ते (अग्र्यप्रायन्यायादिति) 'तत्सामान्यादितरेषु तथात्वम्' इति न्यायादित्यर्थः, अग्र्यप्रायन्यायोऽपि अत्रैव पर्यवसितः, 'तस्मादुहैवंविदुद्गाता ब्रूया'दिति एवंविदन्तरादित्ये अन्तरक्षिणि चोपदिष्टं परमात्मरूपं सर्वपापोदितत्वादिधर्मैः, देवलोककामावाप्तिफलाभ्यां सह विद्वान् उद्गाता यजमानं प्रति ब्रूयात् कं ते काममैहिकमामुष्मिकं किं फलमुद्दिश्य आगायानीति, तत्फलानुकूलोपासनसहितं गानं करवाणीति, हि यस्मात् एष एवोद्गाता काम-

यास्तदेककर्तृकत्वश्रवणादृत्विक्कर्तृकाण्येतानि ; दहरादिषूपासनेषु ऋत्विक्कर्तृकत्वाश्रवणात् [1]"शास्त्रफलं प्रयोक्तरि" इति न्यायाच्च फलिकर्तृकत्वमेव ॥ ४५ ॥

स्वाम्यधिकरणं समाप्तम् ॥

* श्रुतप्रकाशिका *

ऋत्विक्कर्तृकाणीत्यर्थः । 'एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्च-र्त्विजोऽभिरक्षति' 'तस्मादुह वैवंविदुद्गाता ब्रूयात् कं ते काममगायानि' इत्यादिवाक्यैः ऋत्विक्कर्तृकवेदनफलस्य यजमानगामित्वप्रतिपादनं तु हेतुतयाऽनुसन्धेयम्, तस्य न्यायसिद्धार्थानुवादरूपत्वात्तन्मूलयुक्तिमात्रमेवोक्तं भाष्ये । दहरादिषु फलिकर्तृकत्वे को विशेष इत्यत्राह ( दहरादिष्विति ) ऋत्विक्कर्तृकत्वाश्रवणं वैषम्यमित्यर्थः । तच्छ्रवणमन्यत्र फलिकर्तृकत्वस्यापवादकम् ॥ ४५ ॥

स्वाम्यधिकरणं समाप्तम् ॥

ॐ भावप्रकाशिका ॐ

गानस्य अभिमतफलसाधनोपासनसहितगानस्य ईष्टे य एवंविद्वानधिदैवताध्यात्मोपदिष्टपरमात्मस्वरूपं विद्वान् साम गायतीत्यर्थः । अत्र उद्गातृकर्तृकमेवोपासनं यजमानगामिफलजनकमिति स्पष्टं प्रतीतेः ऋत्विजां परिक्रीततया यजमानस्य प्रयोजककर्तृत्वसम्भवेन 'शास्त्रफलं प्रयोक्तरि' इति न्यायस्याऽप्यविरुद्धत्वादिति भावः ॥ ॐ ॥

इति स्वाम्यधिकरणम् ॥

---

१. पू० मी० ३-७-१८ ॥

## सहकार्य्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥

१२ अधिकरणम्

[1]"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" इत्यत्र बाल्यपाण्डित्यवन्मौनमपि विधीयते ? उतानूद्यते ? इति विशये– मौनपाण्डित्यशब्दयोर्ज्ञानार्थत्वात्, 'पाण्डित्यं निर्विद्य' इति विहितमेव

---

* श्रुतप्रकाशिका *

सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥ पूर्वं यज्ञादिः शमादिश्च विद्यासहकारी निरूपितः; इदानीं सहकार्यन्तरं निरूप्यत इति सङ्गतिः, अधिकरणान्तराणि तु सङ्गतिविशेषप्राप्तानि, मननस्य प्रवृत्तिरूपत्वेऽपि ध्यानालम्बनशुभाश्रयगोचरत्वेनातद्गोचरेभ्यो यज्ञादिभ्यः शमादिभ्यश्च विलक्षणत्वादतद्गोचरत्वसाधर्म्येण यज्ञादीन् शमादींश्च निरूप्य पश्चान्मननं निरूप्यते, शुभाश्रयगोचरत्ववैलक्षण्याद् यज्ञादेः शमादेश्च मध्ये निरूपणाभावः, विद्यासहकारित्वसाम्यात् तदुभयतदनुबन्धिचिन्तानन्तरं निरूपणं प्राप्तमित्युक्तं भवति, किमस्मिन् वाक्ये मौनं विधीयते? उतानूद्यत इति, किं पाण्डित्यमेव मौनम्? उतार्थान्तरं मननरूपमिति, किं मननं विधातुं योग्यम्? उत नेति, किं मननस्य यज्ञादिश्रुतिविरोधो-

* भावप्रकाशिका *

( मननस्य प्रवृत्तिरूपत्वेऽपीति ) यज्ञादिवदिति शेषः, उतार्थान्तरं मननरूपमित्यस्यानन्तरं मुनिशब्दस्य प्रकृष्टमननशीले व्यासादौ प्रयोगदर्शनमर्थान्तरत्वमुपोद्बलयति नेतीति पाठोऽस्ति चेत् समीचीनः ( किं मननं विधातुं योग्यमुत नेति ) सर्वाश्रमधर्माङ्गकविद्यासहकारितया विद्याङ्गभूतसर्वाश्रमधर्मवदिति शेषः, तस्यैवैतदधिकरणकृत्यत्वात्, अत्र च– अतस्सर्वेष्वाश्रमेषु स्थितस्यैवेत्युपसंहारभाष्यस्यैव साक्षित्वात् ( किं मननस्येति ) मननशब्दो निदि-

---

1. बृ० ५–५–१ ॥

ज्ञानम् 'अथ मुनिः' इत्यनूद्यते । विधिशब्दो न ह्यत्र श्रूयत इति ।

एवं प्राप्ते ब्रूमः—सहकार्यन्तरविधिः—इति । तद्वतः-विद्यावतः, विध्यादिवद्- विधीयत इति यज्ञादिः सर्वाश्रमधर्मः शमदमादिश्च विधिशब्देनोच्यते । आदिशब्देन श्रवणमनने गृह्येते, सह-

* श्रुतप्रकाशिका *

ऽस्ति? उत नेति, किं मननं कर्मानुष्ठानप्रतिक्षेपकम्? उत नेति, स्वप्रकरणे प्रकरणान्तरे च कतिपयाश्रमधर्मानुक्तिर्मननस्य कर्मानुष्ठानप्रतिक्षेपकत्वमुपोद्बलयति? उत नेति, किं कतिपयोक्तिरनुक्तानादरमूलैव स्यात्? उतानुक्तप्रदर्शनार्था च स्यादिति । यदा कतिपयोक्तिरनुक्तानादरमूलैव स्यात् तदानीं तत्तत्प्रकरणभेदेन सर्वाश्रमधर्माणामनुक्तत्वाविशेषादनादरगर्भा तदनुक्तिर्मननस्याश्रमधर्मप्रतिक्षेपकत्वमुपोद्बलयतीति तत्प्रतिक्षेपकत्वे मननस्य यज्ञादिश्रुतिविरुद्धतया विधातुमयोग्यत्वान्मौनशब्दो मननपरत्वायोगेन प्राप्तपाण्डित्यानुवादीति मौनमनूद्यत इति फलं स्यात् । यदा कतिपयोक्तिरनुक्त-

* भावप्रकाशिका *

ध्यासनपरः, उत्तरत्रापि तथैवेति द्रष्टव्यम् । ( यज्ञादिश्रुतिविरोध इति ) आश्रमधर्मप्रतिपादकयज्ञादिश्रुतिविरोध इत्यर्थः, नचाऽस्याश्शङ्कायाः प्रकृतासङ्गतिश्शङ्क्या, सर्वाश्रमाङ्गकविद्यायां सर्वाश्रमधर्मवत् तत्सहकार्यन्तरतया मौनं विधीयत इत्यस्य प्रकृततया प्रकृतासङ्गतेरभावात् , ( किं कतिपयोक्तिरनुक्तानादरमूलैव स्यादिति ) वाजसनेयके 'भक्षं चरे'दिति पारिव्राज्यधर्मोपदेशः, 'कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः' इत्यादि छान्दोग्यविहितगार्हस्थ्यधर्मादिपरिसङ्ख्यार्थः, एवं छान्दोग्यगतगार्हस्थ्यधर्मश्रुतिरपि वाजसनेयविहितसंन्यासाश्रमधर्मादिपरिसङ्ख्यार्थः । स्वप्रदेशानुक्तधर्मप्रतिक्षेपार्थ इति यावत् ( मननस्य यज्ञादिश्रुतिविरुद्धतया विधातुमयोग्यत्वादित्यादि ) अयमर्थः— निदिध्यासनस्य सर्वाश्रमधर्मनिरपेक्षतया सर्वाश्रमधर्माङ्गकविद्यायाम् आश्रमधर्मदृष्टान्तेन मननस्य

कार्यन्तरविधिरित्यत्रापि विधीयत इति विधिः, सहकार्यन्तरं विधिश्चेति सहकार्यन्तरविधिः। एतदुक्तं भवति– यथा "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इत्यादिना "शान्तो दान्तः" इत्यादिना च सहकारी यज्ञादिः शमदमादिश्च

* श्रुतप्रकाशिका *

प्रदर्शनार्थोऽपि भवेत्, तदानीं तत्तत्प्रकरणभेदेनाश्रमधर्माणामनुक्तत्वाविशेषेऽप्यनुक्तेरनादरगर्भत्वाभावात् तदुक्तिर्मननस्याश्रमधर्मप्रतिक्षेपकत्वं नोपोद्बलयतीति मननस्य तदप्रतिक्षेपकतया यज्ञादिश्रुतिविरोधाभावेन विधातुं योग्यत्वान्मौनशब्दो न वाक्यान्तरप्राप्तपाण्डित्यानुवादीति मौनस्य विधेयत्वं फलं स्यात्। तद्वतः–विद्यावतः, तृतीयं– मौनं सहकार्यन्तररूपो विधिः सहकारित्वेन विधेयम्, यज्ञदानशमदमादिवत्, पक्षेण– प्रकृष्टमननशीले व्यासादौ प्रयोगदर्शनादिति सूत्रार्थः। (मौनपाण्डित्यशब्दयोर्ज्ञानार्थत्वादिति) मौनशब्दस्य मननार्थत्वान्मननस्य श्रवणप्रतिष्ठार्थज्ञानविशेषरूपत्वात् पण्डितशब्दस्य विद्वद्विषयताप्रसिद्धेश्च मौनपाण्डित्यशब्दयोर्ज्ञानार्थत्वम्। तद्वत इति व्याख्येयं पदम्, विधिशब्दं व्याचष्टे (विधीयत इति) पदार्था उक्ताः।

* भावप्रकाशिका *

विधातुमयोग्यत्वात् 'अथ मुनि'रिति मुनिशब्दो मननविधायकत्वायोगेन प्राप्तपाण्डित्यानुवादीति मौनमनूद्यत इति फलं स्यादिति,– एवं हि क्रमः, किमस्मिन् वाक्ये मौनं विधीयते, उतानूद्यते, किं पाण्डित्यमेव मौनम्, उतार्थान्तरं मननरूपमिति, किं मुनिशब्दस्य प्रकृष्टमननशीले व्यासादौ प्रयोगदर्शनमर्थान्तरत्वमुपोद्बलयति, नेति, तथा किं मननं सर्वाश्रमधर्माङ्गकविद्यासहकारितया विद्याङ्गभूतसर्वाश्रमधर्मवद्विधातुं योग्यमुत नेति, तदर्थं च विद्या किं सर्वाश्रमधर्माङ्गिका, उत नेति, तदर्थञ्च विद्यायाः सर्वाश्रमधर्मविरोधोऽस्ति, नेति, किं विद्या सर्वकर्मप्रतिक्षेपिका, नेति, किं वाजसनेयके 'भिक्षाचर्यं चरेत्' इति पारिव्राज्यधर्मोपदेशः, छान्दोग्ये 'कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः' इति गार्हस्थ्यधर्मोपदेशश्च

विधीयते ; यथा च "श्रोतव्यो मन्तव्यः" इति श्रवणमनने चार्थप्राप्ते विद्यासहकारित्वेन गृह्येते; तथा "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य" इत्यादिना पाण्डित्यं बाल्यं मौनमिति त्रितयं विद्यायाः सहकार्यन्तरं विधीयते- इति । मौनं च पाण्डित्या-दर्थान्तरमित्याह—पक्षेणेति । मुनिशब्दस्य पक्षेण प्रकृष्टमननशीले व्यासादौ प्रयोगदर्शनान्मौनं पाण्डित्यबाल्ययोर्द्वयोस्तृतीयम् । यद्यपि "अथ मुनिः" इत्यत्र विधिप्रत्ययो न श्रूयते; तथाऽपि मौनस्या-प्राप्तत्वात् विधेयत्वमङ्गीकरणीयम्—अथ मुनिः स्यात्- इति । इदं च मौनं श्रवणप्रतिष्ठार्थान्मनना-दर्थान्तरभूतमुपासनालम्बनस्य पुनः पुनः संशीलनं तद्भावनारूपम् । तदेवं वाक्यार्थः—ब्राह्मणः- विद्या-

---

ॐ भावप्रकाशिका ॐ

स्वस्वप्रदेशानुक्तपरस्पराश्रमधर्मप्रतिक्षेपार्थः, उतानुक्ताश्रमधर्मप्रदर्शनार्थ इति, यदा परस्परप्रतिक्षेपार्थः, तदा विद्यायाः सर्वाश्रमधर्मसापेक्षतया सर्वाश्रमधर्माङ्गक-त्वसम्भवात् सर्वाश्रमधर्माङ्गिकायां विद्यायां सर्वाश्रमधर्मवन्मननं विधातुम-योग्यम्, यदि च प्रकृष्टमननशीले व्यासादौ मुनिशब्दप्रयोगदर्शनमर्थान्तर-त्वमुपोद्बलयति, तदा पाण्डित्यस्याऽप्राप्तत्वात् विधेयत्वमिति, भाष्ये- विद्या-सहकारित्वेन गृह्येत इति, अत एव विध्यादिवदिति दृष्टान्तोपादानं सह-कार्यन्तरत्वांश एव, नतु विधित्वांशेपीति भावः, सहकार्यन्तरविधित्वांशे विद्यादेः दृष्टान्तत्वं वक्तव्यमिति यद्यभिलाषः, तदा विध्यादिवदित्यस्य बाल्यपाण्डित्यवदित्यर्थो वर्णनीयः, तयोर्मौनविध्यादित्वादिति द्रष्टव्यम् । भाष्ये— पक्षेण प्रकृष्टमननशील इति, पक्षेण प्रयोगः पाक्षिकप्रयोग इत्यर्थः । यद्वा—

वान् पाण्डित्यं निर्विद्य–उपास्यं ब्रह्मतत्त्वं परिशुद्धं परिपूर्णं च विदित्वा श्रवणमननाभ्यामप्राप्तं वेदनं प्रतिलभ्येत्यर्थः; तच्च भगवद्भक्तिकृतसत्त्वविवृद्धिकृतम्; यथोक्तं "नाहं वेदैः" इत्यारभ्य "भक्त्या त्वनन्यया शक्यः.... ज्ञातुम्" इति। श्रुतिश्च "यस्य देवे परा भक्तिः" "नायमात्मा प्रवचनेन लभ्यः" इत्यादिका। बाल्येन तिष्ठासेत्, बाल्यस्वरूपं चानन्तरमेव वक्ष्यते; बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः स्यात्, बाल्यपाण्डित्ये यथावदुपादाय परिशुद्धे परिपूर्णे ब्रह्मणि मननशीलो भवेन्निदिध्यासनरूपविद्यावाप्तये। एवं त्रितयोपादानेन लब्धविद्यो भवतीत्याह "अमौनं मौनं च निर्विद्याथ ब्राह्मणः" इति। अमौनम्– मौनेतरसहकारिकलापः, तं च मौनं च यथावदुपाददानो विद्याकाष्ठां तदे-

---

ॐ भावप्रकाशिका ॐ

पक्षः–परिग्रहः, 'पक्ष परिग्रहे' इति धातुः, आदरेण स्वीकारः, तेन हि मननं प्रकृष्यते, प्रकर्षश्च मननस्य स्नेहपूर्वकतया चिरविरहितनायिकानायकविषयस्येव निरन्तरमनुवर्तमानत्वरूपमुपासनालम्बनस्य शुभाश्रयस्य भगवद्विग्रहादेः पुनः पुनः संशीलनम्, तदपि विद्यानिष्पत्त्यर्थमेव, सति ह्यस्मिन् उपासनकालेऽपि तद्विषयचित्तैकाग्र्यात् विद्या दृढीभवति, यस्योपासनव्यतिरिक्तकालेषु चिन्तान्तरावेशः तस्योपासनकालेऽपि चेतसि समयान्तरचिन्तितविषयान्तरानुप्रवेशात् न विद्या दृढीभवेदिति भावः, भाष्ये– परिशुद्धं परिपूर्णं च विदित्वेति, ऊहापोहक्षमा धीः पण्डा, सा अस्य सञ्जातेति पण्डितः, तस्य कर्म पाण्डित्यम्, श्रवणमननान्तरं तदभ्यासपाटववशात् लब्धया ऊहापोहक्षमया नवनवोन्मेषशालिन्या

कनिष्पाद्यां लभेतेत्यर्थः । "स ब्राह्मणः केन स्यात्" इत्युक्तादुपायात्किमन्योऽप्युपायोऽस्तीति पृष्टे "येन स्यात्तेनेदृश एव" इति- येन मौनपर्यन्तेन ब्राह्मणः स्यादित्युक्तम् , तेनैवेदृशः स्यात् ; न केनाप्यन्येनोपायेनेति परिहृतम् । अतः सर्वेष्वाश्रमेषु स्थितस्य विदुषो यज्ञादिस्वाश्रमधर्मवत् पाण्डित्यादिकं मौनं तृतीयं विद्यायाः सहकार्यन्तरं विधीयते ॥ ४६ ॥

अथ स्यात्-यदि सर्वेष्वाश्रमेषु स्थितानां विदुषां तत्तदाश्रमधर्मसहकारिणी मौनतृतीयसचिवा विद्या ब्रह्मप्राप्तिसाधनमुच्यते; कथं तर्हि छान्दोग्ये "अभिसमावृत्य कुटुम्बे शुचौ देशे" इत्यारभ्य "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते" इति यावदायुषं गार्हस्थ्यधर्मेण स्थितिदर्शनमुपपद्यते; अत आह—

कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥

तुशब्दश्चोद्यं व्यावर्तयति; कृत्स्नभावात्- कृत्स्नेष्वाश्रमेषु विद्यायाः सद्भावात् , गृहिणोऽप्यस्तीति

---

* श्रुतप्रकाशिका *

अथ सूत्रस्य वाक्यार्थमाह ( एतदिति ) ॥ ४६ ॥

कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥ .... .... .... ....

* भावप्रकाशिका *

प्रतिभयाश्रुतमतार्थानुकूल्येन सर्वकालोपनिषत्तात्पर्यप्रतिष्ठापनपरम् , भाष्ये— यावदायुषं गार्हस्थ्यधर्मेणेति , यावदायुर्यस्येति बहुव्रीहिणा यावदायुरशब्दः

तेनोपसंहारः ; तस्मात्सर्वाश्रमधर्म्मप्रदर्शनार्थो गृहिणोपसंहार इत्यभिप्रायः ॥ ४७ ॥

तथैतस्मिन्नपि वाक्ये "ब्राह्मणः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरति" इति पारिव्रज्यैकान्तधर्मं प्रतिपाद्य "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य" इत्यादिना पारिव्राज्यधर्मस्थितिहेतुकमौनतृतीयसहकारिविधानं प्रदर्शनार्थमित्याह—

मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥

सर्वैषणाविनिर्मुक्तस्य भिक्षाचरणपूर्वकमौनोपदेशः सर्वेषामाश्रमधर्माणां प्रदर्शनार्थः ; कुतः ? एवंविधमौनोपदेशवदितरेषामाश्रमिणामपि "त्रयो धर्मस्कन्धाः" इत्यारभ्य "ब्रह्मसंस्थोऽमृतत्वमेति" इति ब्रह्मप्राप्त्युपदेशात् । उपपादितश्च पूर्वमेव ब्रह्मसंस्थशब्दः सर्वाश्रमिसाधारण इति । अतः सुष्ठूक्तम्— यज्ञादिसर्वाश्रमधर्मवन्मौनतृतीयः पाण्डित्यादिर्विद्यासहकारित्वेन विधीयत—इति ।

सहकार्यन्तरविध्यधिकरणं समाप्तम् ॥



* श्रुतप्रकाशिका *

मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥ ( एवंविधमौनोपदेशवत् ) सर्वैषणाविनिर्मुक्तस्य भिक्षाचरणपूर्वकमौनोपदेशवदित्यर्थः ।

परे तु विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवद्विधिः , 'गार्ह-

* श्रुतप्रकाशिका *

स्थ्यमाचार्यकुलं मौनं वानप्रस्थ'मिति प्रयोगात् मुनिशब्दस्य चतुर्थाश्रमपरत्वव्यवच्छेदायाह— तृतीयमिति, तृतीयमिदं मौनं ज्ञानातिशयरूपमित्यर्थः, विद्यावत्त्वे प्राप्तोत्येवातिशयः किं विधिनेत्यत्राह— पक्षेणेति ।

यस्मिन् पक्षे भेददर्शनप्राबल्यात् विद्योपक्रमदशायामेकत्वज्ञानस्य नातिशयः, तस्मिन्नेष विधिः दर्शपूर्णमासविध्यादावङ्गविधिवत्, मोक्षाश्रमे बाल्यादिप्रधानेऽपि छान्दोग्ये गृहिणोपसंहारः कथमित्यत्राह 'कृत्स्नभावात्तु गृहिणोपसंहारः' इति, गृहिषु यज्ञादिकर्माणि अहिंसेन्द्रियसंयमनादि च यथासम्भवं विद्यन्ते, अतस्तेनोपसंहारः, न तु गार्हस्थ्यमात्रपर्यवसानादिति मौनगार्हस्थ्याश्रमद्वयोपन्यासादितराश्रमाभावशङ्कां व्युदस्यति— मौनवदितरेषामप्युपदेशादिति, यथा मौनगार्हस्थ्याश्रमौ प्रामाणिकौ, तथा वानप्रस्थगुरुकुलवासावपि, उपदेशाविशेषात् , बहुवचनं तत्तदवान्तरवृत्तिभेदापेक्षयेति वर्णयन्ति, तत्र तावत् षष्ठीसमासादपि सहकार्यन्तरं विधेयमिति युक्तं 'विध्यादिव'दिति विधिशब्दस्य विधेयवाचित्वात्तदैकरूप्यस्य उचितत्वाच्च तस्याऽपि विधानवाचित्वे षष्ठ्यन्ताध्याहारप्रसङ्गः, तृतीयविधिशब्दयोः सामानाधिकरण्ये सत्येकवाक्यत्वं स्यात्, त्वत्पक्षे तु तस्मात्तृतीयं मौनं विधीयते- इति वाक्यभेदकल्पनं स्यात्, तच्च निष्प्रयोजनम् । किञ्च विध्यादिवदिति विधिशब्दस्य विद्याङ्गभूतयज्ञादिशमादिपरत्वं युक्तम् ; अङ्गमात्रे दृष्टान्तसमर्पणा-

७ भावप्रकाशिका ७

कालपरः 'कालाध्वनो'रिति द्वितीया ( मौनं ज्ञानातिशयरूपमित्यर्थ इति ) मौनं वानप्रस्थमित्यत्र तु आश्रमवाचिपदान्तरसाहचर्यात् पारिशेष्यात् तत्रोत्तराश्रमपरत्वेपि इह मौनशब्दस्य ज्ञानातिशयार्थवाचित्वमेवेति भावः ( बाल्यादिप्रधानेऽपीति ) बाल्यादिप्रधाने सत्यपीत्यर्थः ( उपदेशाविशेषादिति ) 'तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः' इत्यादिनेत्यर्थः । ( बहुवचनमिति ) सौत्रं बहुवचनमित्यर्थः ( षष्ठ्यन्ताध्याहारप्रसङ्ग इति ) दर्शपूर्णमासादीनां विध्यादिवदित्यर्थः, ननु विध्यादिशब्दः प्रधानवाची , विध्यन्तशब्दोऽङ्गवाची, ततश्च विध्यादिवत् विध्यादाविव प्रधान इवेत्यर्थ इति वाचस्पत्युक्तेर्नोक्तदोषावकाश इति चेन्न, विध्यन्तशब्दस्य अङ्ग इव विध्या-

* श्रुतप्रकाशिका *

दपि विद्याङ्गत्वे दृष्टान्तसमर्पणौचित्यात्, पक्षेणेत्यत्र भेददर्शनप्राबल्यात् अतिशयो विधेय इत्यध्याहारादपि व्यासादौ प्रयोगादित्यध्याहारौचित्यात् ज्ञानार्थस्य मुनिशब्दस्य तद्विशेषविषयत्वे हेतोर्वक्तव्यत्वात् विद्यावतोऽतिशयप्राप्तेरविधेयत्वशङ्का चापाकरणीयेति चेत्, न—अतिशयमात्रवाचित्वाभावान्मुनिशब्दस्य, शुभाश्रयं मननं हि विधेयं तत्कारिषु प्रयोगात्, मौनशब्दस्य ध्यानसमाधिपर्यायत्वाभावात् तत्तद्विषयविशेषसंशीलनं हि मननम्, न तु निरन्तरस्मृतिः, न च समाधिः, तच्च विद्यावतः सिद्धमिति चेत्— न, तद्वत इति पदस्य प्रारब्धविद्यविषयत्वात्, तच्च अनुक्तसहकारिसापेक्षत्वादवगम्यते, ब्राह्मणशब्दश्च न जातिवाची, 'अथ ब्राह्मणः' इत्युक्तेः, जातिर्हि प्रागेव सिद्धा। 'कृत्स्नभावा' दित्यनन्तरसूत्रस्य इतराश्रमसद्भावपरत्वमयुक्तं 'विधिर्वा धारणवत्' इत्यत्र आश्रमविधीनामुपपादितत्वात्, यदाऽऽश्रमान्तरस्य विद्याङ्गत्वे विरोधपरिहारपरं 'कृत्स्नभावा'दिति सूत्रम्, तदा प्रदर्शनार्थतया व्याख्याने समीचीनमुत्तरं स्यात्, न तु गृहस्थे कृत्स्नश्रौतस्मार्तब्रह्मचर्यमौनादिसद्भावपरत्वेपि व्याख्याने। अत एव कथं गृहिणः कृत्स्नमित्याशङ्क्य मौनवत् शमादीनामपि गृहमेधिनि उपदेशादिति कार्त्स्न्योपपादकत्वेन तृतीयसूत्रव्याख्यानमप्ययुक्तं पूर्वसूत्रस्य गृहस्थे कृत्स्नधर्मपरत्वाभावात्।

❀ भावप्रकाशिका ❀

दिशब्दस्य न प्रधाने प्रसिद्धिरिति तात्पर्यात् (तत्कारिषु प्रयोगादिति) मुनिशब्दस्येति शेषः, शङ्कते (तच्च विद्यावतस्सिद्धमिति) निष्पन्नविद्यस्य शुभाश्रयमननं सिद्धमेव, तदभावे विद्यानिष्पत्तेरभावादित्यर्थः (प्रारब्धविद्यविषयत्वादिति) निष्पन्नविद्यविषयत्वाभावादित्यर्थः (ब्राह्मणशब्दश्च न जातिवाचीति) पूर्वपक्षे ब्राह्मणशब्दस्य जातिवचनत्वात् कथं ब्राह्मण इत्यत्र यथा न विधेयत्वम्, एवं 'अथ मुनि' रित्यत्रापीति पूर्वपक्षे उपन्यस्तब्राह्मणशब्दजातिवचनत्वस्य सिद्धान्ते अप्रतिक्षेपात् ब्राह्मणशब्दस्य जातिवाचित्वं परेषां सिद्धान्तेऽप्यभिमतमिति मत्वा इदं दूषणमुक्तमिति द्रष्टव्यम्। नच कल्पतरौ ब्राह्मणः ब्रह्माहमस्मीति साक्षात्कारवानित्यर्थ उक्त इति वाच्यम्, तस्याधुनिकत्वात् (तृतीयसूत्रव्याख्यानमप्ययुक्तमिति)

* श्रुतप्रकाशिका *

अन्ये तु 'एतमेव विदित्वा मुनिर्भवति' इति वाक्यान्तरैकार्थ्यात् फलार्थवादः स्यात्, ब्राह्मण्यसाहचर्याच्च, 'अथ मुनिः' इति विद्याफलकीर्तनमिति पूर्वपक्षं कृत्वा मौनं नाम पारिव्राज्यं विधीयते, गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थमिति प्रयोगाद्भवतीत्यध्याहारादपि अपूर्वतया भवेदित्यध्याहारस्य युक्तत्वात्, पूर्वत्र 'व्युत्थायाथ भिक्षाचर्यं चरति' इति पारिव्राज्यप्रस्तावात् स्तुतेश्च विध्यर्थत्वाच्च मुनिर्भवतीत्यत्रापि अयमेवार्थ इति, ब्राह्मण्यमपि न विद्याफलम्, किन्तु सहकार्यन्तरं विधेयम्, तच्च सर्वाश्रमधर्मपरित्यागरूपं दुर्वासःसंवर्तादीनां नग्नचर्यादिदर्शनात्, 'नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च। शीलं धृतिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः' इति भारतवचनात्, इदं च न यतीनामेव, संवर्तस्यैव आर्त्विज्यकरणदर्शनादिति सिद्धान्तयन्ति, बाल्यपाण्डित्यापेक्षया तृतीयं मौनं च न नित्यवदनुष्ठेयम्, किं तु पक्षेण— इच्छया विकल्पेन, विध्यादिवत् । 'अथ यद्यज्ञ इत्याचक्षते' इत्यादिवाक्योक्तयज्ञेष्टसत्रायणानाशकायनारण्यायनादिवत्, तेषु मौनस्य परस्तात् गार्हस्थ्यस्य आमरणाच्छ्रवणात् छान्दोग्ये गृहिणोपसंहारः, तत्र विद्यापरिकरसद्भावात्, न तु मौनब्राह्मण्ययोरविहितत्वादिति चाहुः । मौनवदित्यधिकरणान्तरं ब्रह्मचर्यवानप्रस्थयोर्न विद्याङ्गत्वम् अविधानादिति पूर्वपक्षं कृत्वा 'तमेत' मित्यादिवाक्ये वेदानुवचनतपोनाशकशब्दैर्वाक्यान्तरैश्च ब्रह्मचारिणां वानप्रस्थानामप्युपदेशात् विद्याङ्गत्वमिति सिद्धान्तयन्ति । अत्र ब्रूमः—फलकीतर्नमिति पूर्वपक्षोऽनुपपन्नः ज्ञानव्यतिरेकेण फलविशेषवाचित्वाप्रतीतेः, ज्ञानमेव चेत्फलं तर्हि पाण्डित्यानुवाद इति पूर्वपक्षो युक्तः, परिव्राज्यविधिरिति सिद्धान्तोऽप्यनुपपन्नः, 'व्युत्थाय भिक्षाचर्यं चरति' इति पूर्वमेव विहितत्वात्, लिङाद्यश्रवणमुभयत्र तुल्यम्, विधिकल्पनं च तत्रैवोचितं बह्वर्थसाधारणान्मुनिशब्दादपि तत्र

* भावप्रकाशिका *

भास्करीयमिति शेषः ( पारिव्राज्यप्रस्तावादिति ) पारिव्राज्यस्य प्रकृतत्वादित्यर्थः ( मौनस्य परस्ताद्गार्हस्थ्यस्येति ) दहरविद्यायां छान्दोग्ये 'मौनमित्याचक्षते ब्रह्मचर्यमेव तत्' इति मौनोपदेशानन्तरं सर्वान्ते 'स खल्वेवं

* श्रुतप्रकाशिका *

पारिव्राज्यस्फुटप्रतीतेः, न च ब्राह्मण्यं नाम सर्वाश्रमधर्मपरित्यागः—अशाब्दत्वात्, 'ततस्ततश्चोपरमः क्रियाभ्यः' इति वचनं तु लौकिकव्यापारविषयतयोपपन्नम्, सम्वर्त्तादीनां नग्नचर्यावचनं न सर्वाश्रमधर्मत्यागे प्रमाणं जनावमानकृतयोगसिद्धये स्वप्रकर्षाच्छादनार्थतयाऽप्युपपन्नत्वात्, आर्त्विज्यकरणेन गार्हस्थ्यपरित्यागावगमात् आश्रमधर्माणामात्मध्यानस्येव च्छन्नानुष्ठानसम्भवाच्च, तथा हि स्मरन्ति 'यन्न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम्। न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः। गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत्। अन्धवज्जडवच्चैव मूकवच्च महीं चरेत्' इति, द्वितीयसूत्रे गृहिणोपसंहारस्य निर्वाह्यत्वादाद्यसूत्रे, पक्षेणेति पारिव्राज्यस्य विकल्पेनोपादेयत्वं चासमर्थनीयं— विद्याङ्गत्वेन गार्हस्थ्यप्रामाणिकत्वबुद्धौ सत्यां पारिव्राज्यनियमशङ्कानुपपत्तेः, तद्वत इत्यस्य विद्यावत इति व्याख्यानमुचितं न तु बाल्यपाण्डित्यवत— इति विद्यायाः प्रकृतत्वात्, पारिव्राज्यनियमस्यासमर्थनीयत्वाच्च, यतो मौनब्राह्मणशब्दौ न पारिव्राज्यसर्वाश्रमधर्मत्यागपरौ, किंतु शुभाश्रयमननिदिध्यासनलाभपरौ। अत एव तयोरनियतत्वमपि अनुपपन्नम्, सर्वासु विद्यासु शुभाश्रयमननस्यापेक्षितत्वात्, उपासनस्य निदिध्यासनरूपत्वाच्च द्वितीयसूत्रनिर्वाहो दत्तोत्तरः। ब्रह्मचर्यवानप्रस्थयोर्विद्याङ्गत्वनिरूपकतया अधिकरणान्तरत्वं च 'मौनव' दिति सूत्रस्यायुक्तं 'सर्वापेक्षे'त्यत्रैव तमेतमित्यादिवाक्येन विद्यायाः सर्वाश्रमधर्माङ्गकत्वस्य समर्थितत्वात्॥ ४८॥

सहकार्यन्तरविध्यधिकरणं समाप्तम्॥



ॐ भावप्रकाशिका ॐ

वर्तयन्' इति गार्हस्थ्येनोपसंहारादित्यर्थः (द्वितीयसूत्रनिर्वाहो दत्तोत्तर इति) परमतदूषणावसरे इति शेषः॥ ७॥

इति सहकार्यन्तरविध्यधिकरणम्



# अनाविष्कुर्वन्नन्वयात् ॥ ४६ ॥

१३ अधिकरणम्

[1]"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" इत्यत्र विदुषा बाल्यमुपादेयतया श्रुतम् । बालस्य भावः, कर्म्म वा बाल्यम् । बालभावस्य वयोवस्थाविशेषस्यानुपादेयत्वात् कर्म्मैवेह गृह्यते । तत्र किं बालस्य कर्म कामचारादिकं सर्वं विदुषोपादेयम् ? उत दम्भादिरहितत्वमेवेति विशये विशेषाभावात्सर्वमुपादेयम्; नियमशास्त्राणि च विशेषविधिनाऽनेन बाध्यन्त इति ।

एवं प्राप्तेऽभिधीयते—अनाविष्कुर्वन्-इति ।

* श्रुतप्रकाशिका *

अनाविष्कुर्वन्नन्वयात् ॥ ४६ ॥ सङ्गतिः स्फुटा, बाल्योपादाने किं कामचारादिकमपि उपादेयम्? उत माहात्म्यानाविष्करणमेव, किं बाल्यशब्दः सर्वबालककर्मपरः? उत माहात्म्यानाविष्काररूपबालस्वभावविशेषपरः, 'नाविरतः' इत्यादिश्रुतिः किं बाल्यशब्दस्य अनाविष्कारपरतामवगमयति, नेति, न चेत्सर्वबालकर्मपरतया बाल्यशब्दस्य कामचारादेरुपादेयत्वम्, अवगमयति चेत्- अनाविष्कारपरतया बाल्यशब्दस्य दम्भादिराहित्यमेव उपादेयं स्यात् । ननु कथं रागप्राप्तस्य कामचारादेर्विधेयत्वशङ्का, नैवं रागप्राप्तर्तुगमनादेर्नियमार्थं विधानदर्शनात्, ऋतुगमनं नान्यत्र निषिद्धम्, रागप्राप्तं निषिद्धं कथं विधेयमिति चेन्न, पश्वालम्भनविधानवद् बाल्यविधानस्यापि सम्भावितत्वात्, ( नियमशास्त्राणि चेति ) ब्रह्मविद्यातिरिक्तविषयाणीति भावः ।

राद्धान्तमाह ( एवं प्राप्ते इति ) ( बालस्येति ) स्वभावोऽभिजन-

१. बृ० ५-५-१ ॥

बालस्य यत्स्वभावानाविष्काररूपं कर्म्म तदुपाददानो वर्त्तेत विद्वान् ; कुतः ? अन्वयात्—तस्यैवान्वयात्, "बाल्येन तिष्ठासेत्" इत्यस्मिन् विधौ तस्यैव ह्यन्वयसम्भवः, इतरेषां विद्याविरोधित्वश्रवणात्, [1]"नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्"। [2]"आहारशुद्धौ सत्त्वशुद्धिः" इत्यादिषु ॥ ४९ ॥

अनाविष्काराधिकरणं समाप्तम् ॥

* श्रुतप्रकाशिका *

शुद्ध्यादिः, नियमशास्त्राणां ब्रह्मविद्यातिरिक्तविषयत्वं परिहृतम्, एतदाश्रमनिष्ठस्य विशेषतो नियमदर्शनादित्यर्थः ॥ ४९ ॥

अनाविष्काराधिकरणं समाप्तम् ॥



॥ भावप्रकाशिका ॥

भाष्ये—बालस्य यत्स्वभावानाविष्काररूपं कर्मेति, नचानाविष्करणस्याऽभावरूपस्य कथं बाल्यशब्दार्थत्वमिति शङ्कनीयम्, आविष्करणविरोधिक्रियाविशेषस्यैवानाविष्करणशब्दार्थत्वात् ( एतदाश्रमनिष्ठस्य विशेषतो नियमदर्शनादित्यर्थ इति ) ब्रह्मविद्यानिष्ठस्येत्यर्थः ॥ ७ ॥

इत्यनाविष्काराधिकरणम्



१. कठ० २-२४ ॥ | २. छा० ७-२६-२ ॥

## ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५० ॥

१४ अधिकरणम् द्विविधा विद्या— अभ्युदयफला मुक्तिफला च । तत्राभ्युदयफला स्वसाधनभूतैः पुण्यकर्मभिः पुण्यकर्मानन्तरमेवोत्पद्यते ? उतानन्तरं ? कालान्तरे वेत्यनियम इति संशयः । पूर्वकृतैः

* श्रुतप्रकाशिका *

ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५० ॥ अङ्गचिन्ता कृता, अङ्गिनिष्ठासिद्धिसमयो निरूप्यत इति सङ्गतिः, किमैहिकफलोपासनं स्वसाधनपुण्यकर्मानन्तरमेवोत्पद्यते ? उतानन्तरं ? कालान्तरे वेत्यनियमः, किं तदुत्पत्तेः प्रतिबन्धः सम्भवति ? नेति, न चेदानन्तर्यनियमः, सम्भवे त्वनियमः, उद्गीथाद्युपासनरहितयज्ञादिसुकृतैर्विद्यानिष्पत्तावयं विचारः, विद्यायाः

* भावप्रकाशिका *

भाष्ये—ऐहिकमभ्युदयफलमुपासनमप्रस्तुतप्रतिबन्धे इति, अयमत्रान्वयः— अभ्युदयफलमुपासनम्, अप्रस्तुतप्रतिबन्धे ऐहिकं भवतीति अभ्युदयफलं मुक्तिव्यतिरिक्तफलमित्यर्थः, एवं मुक्तिफलानियम इति मुक्तिफलकचिन्तान्तरस्य प्रक्ष्यमाणत्वादिह तद्व्यतिरिक्तमुपासनं सर्वं विवक्षितम्, ऐहिकम्— इह जन्मनि भवम्, ऐहिकमित्यस्यैव विवरणम् अनन्तरमिति, अस्मिन्नेव जन्मनीत्यर्थः, नच सौत्रस्यैहिकशब्दस्य साध्यनिर्देशपरत्वे किमैहिकफलोपासनं स्वसाधनपुण्यकर्मानन्तरमेव उत्पद्यत इत्यैहिकशब्दस्य पक्षविशेषणत्वस्फोरकटीकाविरोध इति वाच्यम्, टीकागतैहिकशब्दस्य ऐहिकामुष्मिकसाधारणफलमात्रलक्षकस्य सौत्रैहिकपदात् भिन्नत्वात्, ऐहिकशब्दं हि लोके इह जन्मनि भवेपि प्रयुञ्जते, इह लोके भवेपि प्रयुञ्जते, सौत्रस्त्वैहिकशब्द इह जन्मनि भवे वर्तते, तत्रैव प्रसिद्धिप्राचुर्यात्, अत एव योगसिध्यधिकरणे कारीर्यभिचारादेरैहिकत्वमेव स्वर्गस्यामुष्मिकत्वमेव, पशुपुत्रादिरूपस्य फलस्यासति प्रतिबन्धे ऐहिकत्वम्, सति तु प्रतिबन्धे आमुष्मिकत्वमिति व्यवस्थापयन्ति, तत्रैहिकत्वं नाम एतज्जन्मभोग्यत्वम्, आमुष्मिकत्वं नाम

पुण्यकर्मभिर्हि विद्वान् जायते; यथोक्तं भगवता "चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन" इति। साधने निर्वृत्ते विलम्बहेत्वभावात् अनन्तरमेव- इति प्राप्त उच्यते—ऐहिकमप्रस्तुतप्रतिबन्धे- इति। ऐहिकम्-अभ्युदयफलमुपासनम्, अप्रस्तुतप्रतिबन्धे- अप्रस्तुते- प्रबलकर्मान्तरप्रतिबन्धे सत्यनन्तरम्, प्रतिबन्धे सति तदुत्तरकालमित्यनियमः। कुतः? तद्दर्शनात्- दृश्यते हि प्रबलकर्मान्तरेण कर्म-फलप्रतिबन्धाभ्युपगमः श्रुतौ "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम्" इत्युद्गीथविद्या-युक्तस्य कर्मणः फलाप्रतिबन्धश्रवणात् ॥ ५० ॥

ऐहिकाधिकरणं समाप्तम् ॥

---

* श्रुतप्रकाशिका *

पुण्यहेतुकत्वे सिद्धे हि अयं विचार इत्यत्राह (यथोक्तमिति) ॥ ५० ॥

ऐहिकाधिकरणं समाप्तम् ॥

* भावप्रकाशिका *

जन्मान्तरभोग्यत्वम्, नत्वैहलौकिकत्वं पारलौकिकत्वं वा पशुपुत्रादेः पारलौकि-कत्वाप्रसिद्धेः, ततश्च सौत्रस्यैहिकशब्दस्य साध्यनिर्देशपरत्वमेव युक्तम्, पक्ष-विशेषणत्वाभ्युपगमे ऐहिकपदस्य ऐहिकफलसाधनोपलक्षकत्वं वक्तव्यम्, तत्रा-प्यामुष्मिकफलोपासनसङ्ग्रहायोपलक्षणपरत्वमाश्रयणीयम्, साध्यवाचि च पदम-ध्याहर्तव्यम्, तस्य साध्यनिर्देशपरत्वे उपासनरूपस्य पक्षस्य प्रकृतत्वादेव नाध्याहारमपेक्षते इति सामञ्जस्यमस्ति, केचित्तु- अस्मिञ्जन्मनि सम्भवतीत्ये-तावन्मात्रं न साध्यं येनेदं साध्यसमर्पकं स्यात्, किन्तु साधनानुष्ठान-

एवं मुक्तिफलानियमस्तदवस्थावधृते-
स्तदवस्थावधृतेः ॥ ५१ ॥

१५ अधिकरणम् मुक्तिफलस्याप्युपासनस्य स्वसाधनभूतैरतिशयितकर्मभिरुत्पत्तावेवमेव कालानियमः ; तस्याऽपि पूर्ववत्प्रतिबन्धाभावप्रतिबन्धसमाप्तिरूपावस्थावगतेः— अत्रापि तस्य हेतोः समानत्वादित्यर्थः ।

सर्वेभ्यः कर्मभ्यो मुक्तिफलविद्यासाधनस्य कर्मणः प्रबलत्वात्प्रतिबन्धासम्भव इत्यधिकाशङ्का ।

---

* श्रुतप्रकाशिका *

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥ सङ्गतिः स्फुटा, किं मुक्तिफलमुपासनं स्वसाधनकर्मानन्तरमेवोत्पद्यते ? उतानन्तरं ? कालान्तरे वेत्यनियमः, किं परविद्यासाधनात्कर्मणः प्रबलकर्मान्तरं सम्भवति, नेति, असम्भवे नियमः, सम्भवे त्वनियम इति । मुक्तिफलशब्दो बहुव्रीहिः, उद्गीथाद्युपासनरहितयज्ञादिनिष्पाद्यपरविद्यानिष्पत्तिविषयोऽयं विचारः । तस्य हेतोः—पूर्वत्रोक्तहेतोः । अधिकाशङ्कामाह ( सर्वेभ्य इति ) भगवत्प्रीत्यतिशयहेतुत्वेन प्राबल्यात् न तत्प्रतिबन्धकमस्तीति शङ्का, ब्रह्मविदपचारः प्रतिबन्धक इति परिहारः ।

६ भावप्रकाशिका ६

कालाव्यवहितोत्पत्तिकत्वम्, अत एव हि पुण्यानन्तरमेवोत्पद्यत इति भाष्यम्, अतश्च सर्वथा साध्यवाचिपदमध्याहर्तव्यमेव, ततश्च प्रकृतिमण्डलान्तर्वर्तिभोगफलकम्, इहशब्दो हि सन्निकृष्टार्थवचनः, मुक्तप्राप्यभगवल्लोकापेक्षया प्राकृतभोगस्थानभोगोपकरणानां सन्निकृष्टत्वेनैहिकशब्दवाच्यत्वोपपत्तेः, नचैवं स्वर्गेप्यैहिकपदप्रयोगापत्तिः, एतादृशार्थविवक्षया प्रयोगे दोषाभावात् ॥ ६ ॥

इति ऐहिकाधिकरणम्

तत्रापि ब्रह्मविदपचाराणां पूर्वकृतानां प्रबलानां सम्भवात् प्रतिबन्धसम्भव इति परिहारः । द्विरुक्तिरध्यायपरिसमाप्तिं द्योतयति ॥ ५१ ॥

मुक्तिफलाधिकरणं समाप्तम् ॥



इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
तृतीयस्याध्यायस्य चतुर्थः पादः ॥



* श्रुतप्रकाशिका *

इतरे त्रयोऽपि—इदमधिकरणद्वयं विद्यासाधनानन्तरं विद्योत्पत्तिविषयम्, निष्पन्नायां विद्यायां तत्फलभूतमुक्तिविषयं च वर्णयन्ति । तत्र परे तु 'ऐहिक'मित्यत्र विद्योत्पत्तिरप्रतिबन्धे सत्यस्मिन् जन्मनि स्यात्, अन्यथा अन्यत्रेति सिद्धान्तयन्ति, तत्र विचारस्य ऐहिकोपासनविषयत्वाभावमात्रे विरोधः, तत्त्वनन्तराधिकरणविचारानुपपत्तेरनुपपन्नम्, अनन्तराधिकरणस्य को विचारः, मुक्तिरूपे फलेऽपि उत्कर्षनिकर्षकृतः कश्चिद्विशेषप्रतिनियमः फलत्वात्सम्भवतीत्याशङ्क्य परिह्रियते, मुक्तेरेकरूपत्वावधृतेरिति चेत्, उच्यते— उत्कर्षनिकर्षकृतविशेषप्रतिनियम इति, किं स्वरूपगतविशेषः? उत विलम्बाविलम्बरूपविशेषो विवक्षितः, न प्रथमः—इहासङ्गतत्वात्, चतुर्थस्य चतुर्थे पादे हि तस्य निरूप्यता, निरूप्यते च 'संपद्याविर्भाव' इति, द्वितीयेऽपि किं विद्यायामनिष्पन्नायां विलम्बाविलम्बविचारः? उत निष्पन्नायाम्, प्रथमे निवर्त्तकानिष्पत्तौ निवर्त्यनिवृत्तेः प्रसङ्गाभावेन विलम्बनिश्चयादनारम्भः, द्वितीये वसिष्ठादीनामाधिकारिकाणां विद्यावतामपि विलम्बस्य पूर्वं समर्थितत्वात् इदानी-

❀ भावप्रकाशिका ❀

( ऐहिकोपासनविषयत्वाभावमात्रे विरोध इति ) अस्मन्मते मुक्तिव्यतिरिक्तफलकोपासनविषयत्वात् पूर्वाधिकरणस्य ऐहिकोपासनमात्रविषयत्वम्,

* श्रुतप्रकाशिका *

न्तनानां ब्रह्मज्ञानवतां देहपातविलम्बाच्च विलम्बाविलम्बरूपविशेषप्रतिनियमनिरासोऽनुपपन्नः, अत उपासनभेदेनैव अधिकरणवर्णनं युक्तम् । अपरे तु विद्याफलमात्मापरोक्ष्यं किमिहैव जन्मनि? उत इह वान्यत्र वेत्यनियम इति विचार्य पूर्वाधिकरणेनानियम इति सिद्धान्तयन्ति । अनन्तरे च—आपरोक्ष्ये सति तद्देहपाते मोक्षः, दर्शनमात्रे कर्मक्षयश्रुतेरिति पूर्वपक्षं कृत्वा आपरोक्ष्ये तारतम्यसम्भवात् तत्रैवान्यत्र वेत्यनियमः, मोक्षस्त्वेकरूपः, परमात्मावस्था हि मुक्तिरवधृतेत्याहुः, तेषामपि मोक्षैकरूपत्वं सिद्धान्तश्चेत् पूर्ववदसङ्गतिः पुनरुक्तिश्च । विलम्बाविलम्बसम्भवे निरूप्ये 'यावदधिकार'मित्यनेन गतार्थत्वादनारम्भणीयता, संशयाभावाच्च आपरोक्ष्यमात्रे मुक्तिः कस्य केन सम्भाव्यते ।—अन्ये तु साक्षात्कारसाधनानि इहैव अप्रतिबन्धे, सति तु प्रतिबन्धेऽन्यत्र जन्मनि साक्षात्कारं जनयन्तीति पूर्वाधिकरणे निश्चित्य चरमाधिकरणे ब्रह्मसाक्षात्कारफलस्य मुक्तेस्तद्देहावसानभावित्वं स्वतः, सति तु प्रतिबन्धे जन्मान्तरे— आधिकारिकेषु वसिष्ठादिषु मुक्त्यवस्थावधृतेः, अयं च न्यायः कर्मफलेषु स्वर्गादिषु च, सूत्रकारेण प्रसङ्गादिह प्रतिपादित इत्याहुः, एषामपि चरमाधिकरणसिद्धान्तस्य प्रागेव सिद्धतया अधिकरणद्वयविभागानुपपत्तिः पूर्ववदनुसन्धेया । यज्ञादिकर्मफलानामिह विचारस्तु न सूत्रविवक्षितः, मुक्तिफलशब्दोपादानात्, न हि 'फलमत उपपत्ते.' इतिवत्साधारणशब्देन निर्देशः, अनपेक्षितत्वादभिप्रायकल्पनं चानुपपन्नम् , यज्ञादीनां विद्याङ्गत्वादपेक्षितमिति चेत्— तत्पूर्व-

❀ भावप्रकाशिका ❀

परमते तु सर्वविषयत्वमिति विरोध इत्यर्थः, ( तद्देहपात इति ) विद्यादेहपात इत्यर्थः, ( आपरोक्ष्ये तारतम्यसम्भवादिति ) साध्यतारतम्याभावेपि साध-

* श्रुतप्रकाशिका *

सूत्रेण कृतमित्यनपेक्षितत्वम्, अत उपासनभेदविषयतयैव अधिकरणद्वय-वर्णनं युक्तमिति ॥

मुक्तिफलाधिकरणं समाप्तम् ॥



इति श्रीहारीतकुलतिलकवाग्विजयसूनुना श्रीरङ्गराजदिव्याज्ञालब्ध-
वेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधि-
गतभगवद्रामानुजविरचितशारीरकमीमांसा-
भाष्यहृदयेन श्रीसुदर्शनसूरिणा विलि-
खितायां श्रुतप्रकाशिकायां तृतीय-
स्याध्यायस्य चतुर्थः पादः ॥



ॐ भावप्रकाशिका ॐ

नतारतम्यसत्वात् विलम्बाविलम्बरूपानियम उपपद्यत इति भावः ॥ ॐ ॥

इति मुक्तिफलाधिकरणम् ।

इति दशोपनिषद्भाष्यकारैः श्रीरङ्गरामानुज-
मुनिभिर्विरचितायां श्रुतप्रकाशिका-
व्याख्यायां भावप्रकाशिका-
यां तृतीयस्याध्यायस्य
चतुर्थः पादः ॥



समाप्तश्चाध्यायः ।

समुदिताधिकरणसङ्ख्या—१२३—समुदितसूत्रसङ्ख्या—४६८ ।





श्रीमते रामानुजाय नमः ॥

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

## चतुर्थेऽध्याये प्रथमः पादः ।



### आवृत्तिरसकृदुपदेशात् ॥ १ ॥

१ अधिकरणम्

तृतीयेऽध्याये साधनैः सह विद्या चिन्तिता अथेदानीं विद्यास्वरूपविशोधनपूर्वकं विद्या-

---

* श्रुतप्रकाशिका *

आवृत्तिरसकृदुपदेशात् ॥ १ ॥ अध्यायसङ्गतिमाह ( तृतीय इति ) तृतीये पादद्वयेन प्रथममुपासनोपयोगिबाह्यविषयवैतृष्ण्यभगवत्तृष्णाजननहेतो- र्निरूपणीयं हि निरूपितम्, तृतीये विद्याभेदचिन्ता, चतुर्थेऽङ्गचिन्तेति तृतीयाध्याये विद्यैव निरूपितेत्यर्थः । चतुर्थे फलमेव प्रधानतः प्रतिपाद्यम्, विद्याविषये पूर्वमनिरूपितांशश्च निरूप्यते, अस्य साध्यस्येदं साधनमिति साध्यसाधनभावसम्बन्धज्ञापनार्थं भक्तिरूपापन्नज्ञानस्य प्रीतिरूपतया फलकोटि- निवेशज्ञापनार्थं च कर्मयोगापेक्षया च साध्यत्वमस्तीत्यत्र चिन्त्यते, ( तत्रे-

७ भावप्रकाशिका ७

( साध्यसाधनभावसम्बन्धज्ञापनार्थमिति ) द्वयोरपि सम्बन्धिनोरेकाध्यायप्रतिपा- द्यत्व एव एकप्रतीत्युपारोहस्सुशक इति भावः ( कर्मयोगापेक्षया च साध्यत्वम-

फलं चिन्त्यते । तत्र "ब्रह्मविदाप्नोति परम्" "तमेवं विदित्वाऽतिमृत्युमेति" "ब्रह्म वेद ब्रह्मैव भवति" "यदा पश्यः पश्यते रुक्मवर्णम्" इत्यादिवेदान्तवाक्येषु ब्रह्मप्राप्तिसाधनतया विहितं वेदनं किं सकृत्कृतमेव शास्त्रार्थः ? उत असकृदावृत्तमिति संशयः । किं युक्तम् ? सकृत्कृतमिति "ब्रह्म वेद ब्रह्मैव भवति" इति वेदनमात्रस्यैव विधानादसकृदावृत्तौ प्रमाणाभावात् । न चावघातादिवेदनस्य ब्रह्मापरोदयं प्रति दृष्टोपायत्वात् यावत्कार्यमावृत्तिरिति शक्यं वक्तुम्, वेदनस्य दृष्टोपायत्वा-

---

* श्रुतप्रकाशिका *

त्यादि ) किं वेदान्तविहितवेदनं सकृत्कृतः शास्त्रार्थः ? उतासकृदावृत्तमिति, किं ब्रह्म विदाप्नोतीत्यादिभिर्वेदनमात्रं विधीयते ? उत निदिध्यासनम्, किमत्र विदिशब्दो ज्ञानमात्रपरः ? उतोपासनपरः ? , उपक्रमोपसंहाराभ्यां वाक्यान्तराच्चोपासनपरत्वं विदिशब्देऽवगम्यते, नेति, न चेदुपासनपरत्वाभावेन वेदनमात्रं विधीयत इति सकृत्कृतः शास्त्रार्थः । अवगम्यते चेद्विदिशब्दस्योपासनपरत्वान्निदिध्यासनपरं वेदनं विहितमित्यसकृदावृत्तमेव शास्त्रार्थः । आवृत्तौ प्रमाणाभावेऽपि दृष्टोपयोगेष्वावृत्तिः क्रियत इत्यत्राह ( न चेति )

* भावप्रकाशिका *

स्तीति ) इतिर्हेतौ, चोऽभिन्नक्रमः, कर्मयोगापेक्षया च साध्यत्वसत्वाच्च अत्र चिन्ता युक्तेत्यर्थः । सकृत्कृतं शास्त्रार्थ इति पाठः, भाष्ये– असकृदावृत्तौ प्रमाणाभावात् इति, अत एव पूर्वतन्त्रे प्रयाजादीनि फलभूमार्थिना पुनः पुनः प्रयोज्यानीति 'क्रतुवद्वानुमानेनाभ्यासे फलभूमा स्यात्' इति पूर्वपक्षं कृत्वा 'सकृद्वा कारणैकत्वात्' इति सकृदनुष्ठानेनैव कार्यसिद्धेरङ्गमात्रावृत्तौ फलभूयस्त्वे प्रमाणाभावाच्चानावृत्तिरिति सिद्धान्तितमिति भावः। अत एव 'कर्मण्यनारम्भभा-

भावात् । ज्योतिष्टोमादिकर्माणि वेदान्तविहितं च वेदनं परमपुरुषाराधनरूपम्, आराधिताच्च परमपुरुषाद् धर्मार्थकाममोक्षाख्यपुरुषार्थावाप्तिरिति हि "फलमत उपपत्तेः" इत्यत्र प्रतिपादितम् । अतो ज्योतिष्टोमादिवद्यथाशब्दं सकृत्कृतमेव शास्त्रार्थः—

इति प्राप्ते प्रचक्ष्महे—आवृत्तिरसकृदिति । असकृदावृत्तमेव वेदनं शास्त्रार्थः, कुतः? उपदेशात्—ध्यानोपासनपर्यायेण वेदनोपदेशात्, तत्पर्यायत्वं च विद्युपास्तिध्यायतीनामेकस्मिन् विषये वेदनोपदेशपरवाक्येषु प्रयोगादवगम्यते । तथा हि "मनो ब्रह्मेत्युपासीत" इत्युपासिनोपक्रान्तोऽर्थः "भाति च तपति च कीर्त्या यशसा

---

* श्रुतप्रकाशिका *

अदृष्टोपायत्वं सिद्धान्तिनैवोक्तमित्याह ( ज्योतिष्टोमादीति )

सिद्धान्तमाह ( इति प्राप्त इति ) ( ध्यानोपासनपर्यायेण वेदनशब्देनेति ) अत्र निमित्तभेदेऽप्येकार्थपर्यवसायित्वं पर्यायत्वं विवक्षितम्, पर्यायत्वं कथमित्यत्राह ( तत्पर्यायत्वं चेति ) कीर्तिः—परत्वविषयप्रथा, यशः—सौलभ्यप्रथा, ताभ्यां भाति— ब्रह्मवर्चसेन तपतीत्यर्थः, यथा भक्तिस्नेहौ परत्वसौलभ्यविषयौ भिद्येते, तथा कीर्तियशसी, 'स्नेहो मे परमो राजन्' 'भक्तिश्च नियता वीर' इत्यत्र हि तथा दृश्यते, रञ्जनवाचिना राजन्—

* भावप्रकाशिका *

विरत्वात् कृषिवत्प्रत्यारम्भं फलानि स्युः' इति न्यायेन फलभूमार्थतया काम्यानामावृत्तिवत् वेदनस्यापि आवृत्तिरिति शङ्का परास्ता, मोक्षरूपफले तारतम्याभावात । भाष्ये— नचावघातादिवदिति , 'व्रीहीनवहन्ति' इति श्रुतस्यावघातस्य दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वादिति न्यायेन क्रत्वपेक्षिततण्डुलनिष्पत्त्यर्थ-

ब्रह्मवर्चसेन य एवं वेद" इति विदिनोपसंह्रियते, तथा "यस्तद्वेद यत्स वेद स मयैतदुक्तः" इत्युपक्रमे विदिनोक्तं रैक्वस्य ज्ञानम् "अनु म एताम्भगवो देवतां शाधि यां देवतामुपास्से" इत्युपासिनोपसंह्रियते;

* श्रुतप्रकाशिका *

शब्देन धीरशब्देन च स्नेहभक्ती सौलभ्यपरत्वविषये अवगम्येते 'नाथ योनिसहस्रेषु' इत्यत्र 'तेषु तेष्वच्युता भक्ति'रिति, तत्रैव प्रकरणे 'या प्रीतिरविवेकाना' मिति च पठ्यते । तथा कीर्तियशसोर्भेदः 'यस्तद्वेद– यो वेदिता, यत्स वेद– यच्च वेद्यं– स मयैतदुक्तः– स वेदिता रैक्वः, तद्वेद्यं ब्रह्म चोभयं मयोक्तमित्यर्थः, पुँल्लिङ्गनिर्देशो रैक्वाभिप्रायेण, ( अनुम इत्यादि ) मे अनुशाधीत्यन्वयः, 'व्यवहिताश्चे' ति सूत्रात्, ( उपसंह्रियते ) उपक्रमोक्तिः पश्चादनूद्यत इत्यर्थः । एकैकत्र विद्युपास्त्योरेकार्थविषययोः प्रयोगो दर्शितः ।

* भावप्रकाशिका *

त्वात् तण्डुलनिष्पत्तेश्चावघातावृत्तिमन्तरेणाऽसम्भवात्, अश्रुताप्यवघातावृत्तिः कार्येति, 'क्रियाणामर्थशेषत्वात्प्रत्यक्षे तन्निर्वृत्त्याऽपवर्गस्स्यात्' इति साधितम् तद्वदिति भावः, भाष्ये–उपासिना उपसंह्रियत इति, ननु छागपशुन्यायेन संवर्गविद्यागतस्य 'यस्तद्वेद यत्स वेद' इति वेदनशब्दस्य 'यां देवतामुपास्से' इत्युपसंहारवशात् उपासनारूपत्वपर्यवसानमस्तु नाम, न तावन्मात्रेण आनन्दवल्ल्याद्युक्तब्रह्मवेदनानामावृत्तिस्सिध्यति विद्याभेदात्, नहि प्रतिवसन्तं ज्योतिष्टोमस्यावृत्तिविधानात् द्वादशाहादीनामावृत्तिः सिध्येदिति चेत् भ्रान्तोसि, क्वचिद्विद्याविशेषे आवृत्तेः श्रवणादन्यत्र विद्यान्तरेपि आवृत्त्या भवितव्यमिति यदि प्रतिपाद्येत, तदेदं चोद्यं स्यात्, नैवमत्र प्रतिपाद्यते, अपि तु विदिनोपक्रान्तस्योपासिना सिद्धवत्कृत्याऽनुवादरूपात् अन्यार्थदर्शनरूपाल्लिङ्गात् वेदान्तेषु वेदनशब्दः आवृत्तवेदनपरः, यथा 'न सुकृतं न दुष्कृतं, सर्वे पाप्मानोऽतो निवर्तन्ते' इति सुकृतस्यापि पाप्मशब्दपरामर्शरूपाल्लिङ्गाद्वेदान्तेषु पाप्मशब्दः सुकृतदुष्कृतसाधारणः, ततश्च

तथा "ब्रह्मविदाप्नोति परम्" इत्यादिवाक्यसमानार्थेषु वाक्येषु "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "ततस्तु तं पश्यति निष्कलं ध्यायमानः" इत्यादिषु ध्यायतिना वेदनमभिधीयते । ध्यानं च चिन्तनम्; तच्च स्मृतिसन्ततिरूपम्; न स्मृतिमात्रम्; उपास्तिरपि तदेकार्थः, एकाग्रचित्तवृत्तिनैरन्तर्ये प्रयोगदर्शनात्; तदुभयैकार्थ्यादसकृदावृत्तसन्ततस्मृतिरिह "ब्रह्म वेद ब्रह्मैव भवति" "ज्ञात्वा देवं मुच्यते सर्वपाशैः" इत्यादिषु वेदनादिशब्दैरभिधीयत इति निश्चीयते ॥ १ ॥

* श्रुतप्रकाशिका *

अथानेकत्र प्रदेशभेदेनैकैकस्य प्रयोगं दर्शयति ( तथेति ) अत्र 'छागो वा मन्त्रवर्णात्' इति न्यायोऽभिप्रेतः, ध्यायमानशब्दोपादानेन 'निदिध्यासितव्यः' इत्यत्र सन्प्रत्ययस्य इष्यमाणप्रधानत्वं दर्शितम्, ध्यायतिना वेदनमुच्यताम्, ततः किमसकृदावृत्तेरित्यत्राह ( ध्यानञ्च चिन्तनमिति ) 'ध्यै चिन्तायां' मिति हि धातुः, असकृदावृत्तत्वं विच्छेदेऽप्युपपद्यत इति तद्व्यावृत्त्यर्थमाह ( असकृदावृत्तसन्ततस्मृतिरिति ) ॥ १ ॥

७ भावप्रकाशिका ७

वेदान्तेषु सर्वेभ्यः पाप्मभ्य उदितः' 'अपहतपाप्मा' इत्यादिष्वपि पाप्मशब्दः सुकृतदुष्कृतसाधारण इत्युक्तौ ईदृशोपालम्भस्याऽप्रसक्तेः, ( यस्तद्वेदेति ) अत्र वक्तव्यं सर्वं लघुसिद्धान्ते प्रतिपादितम्, तत्रैव द्रष्टव्यम्, भाष्ये—समानार्थेष्विति, मोक्षसाधनविधिष्वित्यर्थः ( छागो वा मन्त्रवर्णादिति न्यायोभिप्रेत इति ) ननु 'छागस्य वपाया' इतिमन्त्रस्य नित्यतयाङ्गत्वप्रतीतेः तदङ्गत्वं माबाधीति सामान्यवाचिपशुशब्दस्य मान्त्रवर्णिकछागरूपविशेषपर्यवसानं युक्तम्, इह नानाप्रकरणाम्नातानां वेदनध्यानोपासनादिमोक्ष-

## लिङ्गाच्च ॥ २ ॥

लिङ्गं–स्मृतिः। स्मृतेश्चायमर्थोऽवगम्यते। स्मर्यते हि मोक्षसाधनभूतं वेदनं स्मृतिसन्ततिरूपम्। [1]"तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा। त-

* श्रुतप्रकाशिका *

लिङ्गाच्च ॥ २ ॥ लिङ्गशब्दं व्याचष्टे (लिङ्गं स्मृतिरिति)।

परे चापरे च श्रवणमनननिदिध्यासनानामावृत्तिरपेक्षिता वा नेति विचारयन्ति, तदयुक्तम्—श्रवणमननयोः रागप्राप्तत्वेन यावदर्थनिश्चयं तदावर्तनस्य प्राप्तत्वात्, असकृत्पदं हेत्वंशविषयमाहुः 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यसकृदुपदेशादिति, तदयुक्तं–श्रोतव्यादिशब्दैरेकैकस्यावृत्त्यभावात्, उपदेशक्रियाया आवृत्तिर्विवक्षितेति चेत् तर्हि सकृच्छ्रवणेन सकृन्मननेन सकृन्निदिध्यासनेन च तस्योपदेशस्य सफलतया तेषां प्रत्येकावृत्तौ प्रमाणत्वाभावात् तेषामात्मसाक्षात्कारार्थत्वात्, वैतुष्यार्थावघातस्येव दृष्टार्थत्वादावृत्तिसिद्धिरिति चेत्, तर्हि 'असकृदुपदेशा' दिति हेतुरहेतुः

छ भावप्रकाशिका छ

साधनविधीनामेकार्थपर्यवसायित्वस्याऽनपेक्षिततया कथमत्र छागपशुन्यायावतारः, नच कासांचिद्विद्यानामावृत्त्यनपेक्षाणामेव मोक्षसाधनत्वे मोक्षसाधनध्यानादिविधीनामननुष्ठानलक्षणाप्रामाण्यप्रसङ्ग इति वाच्यम्, प्रपत्तिवदावृत्तिनिरपेक्षविद्याया महाविश्वासशाल्यधिकारविशेषविषयतोपपत्त्या ध्यानपर्यवसायित्वस्य वेदनादिविधीनामनावश्यकत्वादिति चेन्न, अनन्यथासिद्धप्रमाणबलेन प्रपत्तावधिकारिविशेषपरिकल्पनेऽपि वेदनविधिस्थले तादृशाधिकारिविशेषकल्पनाभावेन वेदनविधीनामेकार्थपर्यवसानस्याऽवश्यं वक्तव्यत्वेन छागपशुन्यायप्रवृत्तौ दोषाभावात् ॥ छ ॥

(उपदेशक्रियाया इति) उपदेशक्रियामात्रस्यावृत्तिर्विवक्षिता, नतु श्रवणादिविशिष्टोपदेशक्रियाया इत्यर्थः, ततश्च 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्युपदेशक्रियाया आवृत्तिरस्तीति भावः (द्विस्त्रिः-

1\. वि. ६-७-९१ ॥

ध्यानं प्रथमैः षड्भिरङ्गैर्निष्पाद्यते तथा" इति । तस्माद्-सकृदावृत्तमेव वेदनं शास्त्रार्थः ॥

आवृत्त्यधिकरणं समाप्तम् ॥

* श्रुतप्रकाशिका *

स्यात्, दृष्टार्थत्वादित्येव सूत्रयितव्यम्, असकृच्छब्दस्यावृत्तिविशेषणत्वन्तु सफलम्, आवृत्तिशब्दस्य द्विस्त्रिःप्रत्ययमात्रेणापि कृतार्थत्वात्, आवृत्तिश्चात्मापरोक्ष्ये दृष्टोपायः, सकृच्छ्रुतात्द्वाक्यादप्रतीतस्यार्थस्यावर्त्तनेन सम्यक्प्रतिपत्तिदर्शनात्, तदापरोक्ष्यं च बन्धनिवृत्तौ दृष्टोपायः, रज्ज्वापरोक्ष्येण सर्पभ्रमनिवृत्तिदर्शनादिति चायुक्तं 'धातुः प्रसादाद् वीतशोकः' 'मद्भक्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यति' इति श्रुतिस्मृतिविरोधात्, ज्ञानवेदनशब्दान्वितवाक्यान्येव विषयः, न तु ध्यानादिशब्दान्वितानि, ध्यानादिपदानामावृत्तप्रत्ययविषयत्वे संशयाभावात्, आत्मने नित्यापरोक्षत्वाभ्युपगमान्न तदावृत्तिसाध्यम्, बन्धनिवर्त्तकसाक्षात्कारस्तु न वाक्यजन्यप्रत्ययावृत्त्या भवति ज्योतिष्टोमादिवाक्यार्थप्रत्ययावृत्तेस्तदर्थापरोक्ष्यहेतुत्वाभावात् एकश्चन्द्र इति वाक्यजन्यप्रत्ययावृत्त्या चन्द्रैकत्वापरोक्ष्याभावाच्च तिमिराद्यपगमे जायत इति चेत्, तत्तु चक्षुषा जायते, न तु चन्द्रैकत्वप्रत्ययावृत्तिमात्रात् तदनुगृहीतादेकश्चन्द्र इतिवाक्याद्वा, तिमिरादिस्थानीयदोषो भेदवासना चेत्— तत्र वक्तव्यं सर्वं प्रागेवोक्तम्, निर्गुणब्रह्मणो वेद्यत्वाभावात् ब्रह्म वेदेत्यादिवाक्यानां क्लिष्टता, तत्र कल्पनापोहेन सम्यङ्निश्चयोदयाय श्रवणाद्यावृत्तिर्विधेया, तदनुष्ठाना-

* भावप्रकाशिका *

प्रत्ययमात्रेणेति ) द्विस्त्रिवेदनैरपि कृतार्थत्वादित्यर्थः ( ज्ञानवेदनशब्दान्वितेति ) इदं वाक्यं श्रवणमनननिदिध्यासनानामावृत्तिरपेक्षिता नवेति विचारयन्ति, तदयुक्तमित्यस्याऽनन्तरं पठितं चेत् सुसङ्गतमिव भाति, पाठो निरीक्ष्यः, ननु अपरोक्षार्थविषयकप्रत्ययावृत्तेः तदापरोक्ष्यं ब्रूमः, अतो न ज्योतिष्टोमवाक्यार्थप्रत्ययावृत्तौ व्यभिचार इत्यत आह (एकश्चन्द्र इति ) ( भेदवासना चेदिति ) अन्यस्य वक्तुमशक्यत्वादिति भावः ( कल्पनापोहेनेति ) भेदसत्य-

* श्रुतप्रकाशिका *

न्तरीयकतया निर्गुणब्रह्मप्रत्ययावृत्तिरिति पक्षोऽप्ययुक्तः, ध्रुवानुस्मृतिविरोधात्, विजातीयप्रत्ययाव्यवहितप्रत्ययसन्तानं हि ध्रुवाऽनुस्मृतिः, भेदो मिथ्या निर्विशेषज्ञप्तिमात्रं सत्यमिति भावनाया विजातीयप्रत्ययसम्पर्कान्न ध्रुवानुस्मृतिसिद्धिः, समाधिविधिश्चानुपपन्नः, समाधौ मनसः प्रलयो नाम बहिर्व्यापारानर्हत्वं न तु विनाशः, अनुपपन्नत्वाद् बन्धनिवर्त्तकं वाक्यार्थज्ञानं मनोविनाशरूपसमाधिजन्यं वा जनकं वा । न प्रथमः, मनसो नाशे वाक्यस्य ज्ञानजनकत्वायोगात्, शब्दो हि मनसा गृह्यमाण एवार्थज्ञानं जनयति, न द्वितीयः, वाक्यार्थज्ञानस्य कृत्स्नप्रपञ्चमिथ्यात्वविषयस्य देहे स्थिते मनोमात्रप्रलयहेतुत्वानुपपत्तेः, पुनर्मनउत्पत्त्यनुपपत्तेश्च, न हि ज्ञाननिवृत्तस्य बन्धस्य पुनरुदयः, पूर्वं ज्ञाननिवृत्तस्यापि रज्जुसर्पस्येव पश्चादुदयोपपत्तिरिति चेत्, तर्हि बन्धस्यापि पुनरुदयप्रसङ्गः, दोषानिवृत्त्या रज्जुसर्पस्य पुनरुदयः सम्भवेत् तदभावात् बन्धस्य पुनरुदयाभाव इति चेत्, मनोनिवर्त्तकस्यापि वाक्यार्थज्ञानस्य दोषनिवर्त्तकत्वात् पुनर्मनस उत्पत्त्यनुपपत्तिः, क्रियाविशेषेण मनःप्रलयः, न तु वाक्यार्थज्ञानेनेति चेन्न, उत्पादकक्रियाविशेषाभावेन मनउत्पत्त्यनुपपत्तेः । किञ्च मनःप्रलयस्य वाक्यार्थज्ञानोत्पत्तिविरोधित्वान्मुमुक्षोः समाधिरकर्त्तव्यः स्यात्, मुक्तस्य सर्वज्ञत्वे प्राक्तनभगवदलाभानुसन्धानेनानन्तदुःखित्वमिति चेन्न, स्वसंसरणस्य भगवल्लीलात्वानुसन्धानस्य सुखरूपत्वात्। ननु मुक्तस्यानन्दाधिक्ये सार्वज्ञ्यं हीयेत, अतिशयितानन्दस्य मोहनत्वदर्शनादिति चेन्न, तमोगुणसम्मिश्रणप्रयुक्तत्वान्मोहनत्वस्य, मनो हि गुणत्रयात्मकम् ।

इतरे त्रयोऽपि लिङ्गाच्चेति सूत्रमेवं व्याचक्षते– 'रश्मिबहुत्वं पर्यावर्त्तये'

ɕ भावप्रकाशिका ɕ

त्वकल्पनाव्युदासपूर्वकभेदमिथ्यात्वनिश्चयायेत्यर्थः । प्रतिपन्नोपाधिस्थनिषेधप्रतियोगित्वरूपमिथ्यात्वप्रतीतावुपाधिप्रतीतिर्नान्तरीयकेति भावः । वाक्यार्थज्ञानार्थश्रवणादिविधिदूषणप्रसङ्गादन्तःकरणविलयरूपज्ञानार्थसमाधिं दूषयति (समाधिविधिश्चाऽनुपपन्न इति) बन्धनिवर्तकस्य वाक्यार्थज्ञानस्य त्वदभिमतान्तःकरणविनाशरूपसमाधिविरुद्धत्वादिति भावः । मुक्तस्य सर्वज्ञत्व इत्याक्षेपश्च, ननु मुक्तस्यानन्दाधिक्य इत्याक्षेपश्च प्रासङ्गिक इति नाशङ्का कार्या,

आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

२ अधिकरणम्

इदमिदानीं चिन्त्यते- किमुपास्यं

* श्रुतप्रकाशिका *

दिति-बहुपुत्रतायै रश्मिबहुत्वोपासनपरे वाक्ये आवृत्तिशब्देनोपासनानुवाद-आवृत्तौ लिङ्गमिति, एकस्मिन् दिने सकृच्चिन्तनेऽपि दिनभेदेनावृत्तिमात्रेणाप्यावृत्तिशब्दव्यपदेशोपपत्तेर्निरन्तरावृत्तौ लिङ्गत्वायोगात् तदनादर इति । अन्ये त्विमं विचारमहङ्ग्रहोपासनव्यतिरिक्तविषयमाहुः, तस्य ध्यानफलसाक्षात्कारपर्यन्तत्वादावृत्तिसिद्धेरिति, तदयुक्तं- तस्य साक्षात्कारपर्यन्तत्वेऽन्येषामतत्पर्यन्तत्वे च नियामकाभावात्, द्रष्टव्यताश्रुतिर्हि सर्वोपासनसाधारणी । किञ्च अहमर्थमात्रसाक्षात्कारो नित्यसिद्ध इति नोपास्तिसाध्यता, ईश्वरतादात्म्यं घटस्य शरावत्ववदतात्त्विकमिति शब्दप्रतीतिमात्रसिद्धस्य न साक्षात्कार उपपद्यते ॥ २ ॥

आवृत्त्यधिकरणं समाप्तम् ॥

आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥ उक्तस्यासकृदावृत्तस्योपासनस्योपास्यं ब्रह्म किमुपासितुरन्यत्? उत तस्यैवात्मेति शङ्कायां व्यति-

* भावप्रकाशिका *

केचित्तु- अत्र कानिचिद्वाक्यानि पतितानीति मन्यन्ते ( रश्मिबहुत्वं पर्यावर्तयेदिति ) इदञ्च पुत्रं प्रति कौषीतकीवाक्यम्- हे पुत्र रश्मीनादित्यं चाऽभेदेन पर्यावर्तयात्-पर्यावर्तयतादित्यर्थः, उपास्वेति यावत् ( अहङ्ग्रहोपासनेति ) प्रत्यगात्मोपासनेत्यर्थः ॥ ७ ॥

इत्यावृत्त्यधिकरणम् ।

( व्यतिकरोपदेशज्ञापनायेति ) पूर्वाधिकरणे 'आत्मेत्येवोपासीत' इति विद्युपास्योर्व्यतिकरोपदेशज्ञापनार्थोपात्तवाक्यस्थितात्मशब्दार्थनिरूपणं क्रियत इत्यर्थः । वस्तुतस्तु 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि

**ब्रह्मोपासितुरन्यत्वेनोपास्यम्? उतोपासितुरात्मत्वेनेति। किं युक्तम्? अन्यत्वेनेति। कुतः? उपासितुः प्रत्यगात्मनोऽर्थान्तरत्वात् ब्रह्मणः। अर्थान्तरत्वं च "अधिकन्तु भेदनिर्देशात्" "अधिकोपदेशात्" "नेतरोऽनुपपत्तेः" इत्यादिषूपपादितम्। यथावस्थितञ्च ब्रह्मोपास्यम्, अयथोपासने हि ब्रह्म-**

---

* श्रुतप्रकाशिका *

करोपदेशज्ञापनाय पूर्वप्रकृतवाक्यस्थात्मशब्दार्थो निरूप्यत इति सङ्गतिः, (आत्मत्वेनेति) आत्मशब्दः स्ववाची, आत्मत्वेन—अहमर्थसामानाधिकरण्येन, अन्यत्वेन वैयधिकरण्येनेत्यर्थः। अथवा आत्मशब्दः शरीरप्रतिसम्बन्धिपरः, आत्मत्वेन—जीवं प्रति शरीरित्वेन, अन्यत्वेन— शरीरशरीरिभावसम्बन्धशून्यत्वेनेत्यर्थः। एवं सति ब्रह्मोपासनविधिः किं दृष्टिविधिः? उत नेति फलफलिभावः, मुमुक्षोः किं ब्रह्म वैयधिकरण्येनोपास्यम्? उत सामानाधिकरण्येन, किमुपास्यं ब्रह्मोपासितुरन्यत्वेनोपास्यम्? उतात्मत्वेन, किमात्मत्वेनोपासने 'पृथगात्मान'मिति विहितपृथक्त्वानुसन्धानविरोधः प्रसज्यते, नेति, प्रसज्यते चेदन्यत्वेनोपासनं, न चेदात्मत्वेनोपासनमिति। ननु 'अंशो नानाव्यपदेशात्' इत्यादिषु जीवपरयोः शरीरशरीरिभावे शरीरवाचिशब्दानां शरीरिपर्यन्ताभिधाने च

* भावप्रकाशिका *

भगवो देवते' 'आत्मेत्येवोपासीत' इत्यादीनां व्यतिकराणामुपदेशरूपत्वमुखेन दृष्टिविधित्वाभावज्ञापनायेत्यर्थः (पूर्वप्रकृतेति) जगत्कारणतयोपास्यतया चाध्यायत्रयप्रतिपादितस्य वस्तुनो वेदान्तवाक्यस्थात्मशब्दार्थात्मकत्वं निरूप्यते समर्थ्यत इत्यर्थः। ततश्च कथमस्याधिकरणस्य शब्दार्थनिरूपणपरत्वमिति शङ्कापि निराकृता (अहमर्थसामानाधिकरण्येनेति) अहन्त्वेनेत्यर्थः, अथवेत्यादिपक्षाभिप्रायेणाह (किमुपास्यं ब्रह्मेति) (अन्यत्वेनोपास्यमिति) शरीरशरीरिभावरूपसम्बन्धशून्यत्वेनोपास्यमित्यर्थः (पृथक्त्वानुसन्धानविरोध इति) 'पृथगात्मानं प्रेरितारञ्च मत्वा' इति पृथक्सिद्धत्वानुसन्धानस्याऽपृथक्सिद्धविशेषणत्वरूपशरीरत्वानुसन्धानविरुद्धत्वादिति भावः। यद्वा पृथ-

प्राप्तिरप्ययथाभूता स्यात् । "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति न्यायात् । अतोऽन्यत्वेनोपास्यमिति ॥

एवं प्राप्तेऽभिधीयते– आत्मेति तु–इति । तुशब्दोऽवधारणे, उपासितुरात्मेत्येवोपास्यम्, उपासिता प्रत्यगात्मा स्वशरीरस्य स्वयं यथाऽऽत्मा ; तथा स्वात्मनोऽपि परं ब्रह्मात्मेत्येवोपासीतेत्यर्थः । कुतः? एवं ह्युपगच्छन्ति पूर्वे उपासितारः "त्वं वा

---

* श्रुतप्रकाशिका *

सिद्धे यथावस्तूपासने च कर्तव्ये कथं संशयोत्थानम्, उच्यते---- अहमर्थसामानाधिकरण्येन वैयधिकरण्येन च ब्रह्मोपासनानि विहितानि, शाण्डिल्यविद्यादिषु समानाधिकरणोपासनेषु व्यधिकरणोपासनेष्वप्ययं विचारोऽनुपयुक्तः स्यात्, यत्र सामानाधिकरण्योपासने दृष्टिविधित्वशङ्का सम्भवति 'येऽन्नं ब्रह्मोपासते' 'ये प्राणं ब्रह्मोपासते' 'विज्ञानं ब्रह्म चेद्वेद' इत्यादिषु जीवे ब्रह्मदृष्टिविधिदर्शनात् 'आत्मेत्येव' इति वाक्ये इतिकरणदर्शनाच्च तस्य दृष्टिविधित्वशङ्काव्युदासार्थमारम्भणीयत्वमिति । ( अयथाभूता स्यादिति ) संसारित्वप्राप्तिः स्यादित्यर्थः ।

राद्धान्तमाह ( एवं प्राप्त इति ) सामानाधिकरण्यफलितमर्थमाह ( स्वशरीरस्य स्वयमिति ) (उपगच्छन्ति) गत्यर्था बुद्ध्यर्थाः, उपासत इत्यर्थः । त्वं वा अह-

* भावप्रकाशिका *

ङ्गत्वेति पृथक्पक्त्वेत्यादिवत् मननक्रियायामन्वेति, ततश्च आत्ममननं प्रेरितृमननञ्च पृथग्भूतं कार्यमित्यर्थः पर्यवसन्नः । ततश्च आत्मप्रेरित्रोरेकमननानुप्रवेशो व्यावर्तितो भवति, अतो जीवपरयोः शरीरात्मभावानुसन्धानस्य नावकाशः । शरीरात्मभावानुसन्धाने हि द्वयोरप्येकस्यां मननक्रियायामनुप्रवेशप्रसङ्गेन पृथङ्मननं न भवेदिति विरोध इति भावः ( ब्रह्मोपासनानि विहितानीति ) शाण्डिल्यविद्यायां 'सर्वं खल्विदं ब्रह्म' इति सामानाधिकर-

अहमस्मि भगवो देवते अहं वै त्वमसि" इति। उपासितुरर्थान्तरभूतं ब्रह्मोपासितारोऽहमिति कथमभ्युपगच्छन्तीत्यत्राह- "ग्राहयन्ति च-इति। इममर्थमविरुद्धमुपासितॄन् ग्राहयन्ति शास्त्राणि- तान्प्रत्युपपादयन्तीत्यर्थः। "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इति; तथा "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदाय-

* श्रुतप्रकाशिका *

मस्मि-अहंबुद्धिरहंशब्दश्च त्वत्पर्यवसायिनौ, अहंशब्दयोगादुत्तमपुरुषः, अहं वै त्वमसि-अहंबुद्धिशब्दपर्यवसानभूमिस्त्वम्, त्वंशब्दयोगान्मध्यमपुरुषः, उभयस्मिन्वाक्ये अहंत्वंशब्दप्रयोगे सत्यपि अहंशब्दार्थतात्पर्यविवक्षयोत्तमपुरुषः, त्वंशब्दार्थतात्पर्येण मध्यमपुरुषः, अहं त्वं- त्वमहमिति सामानाधिकरण्येनार्थे लब्धे किमर्थमस्म्यसीति पदप्रयोगः इति चेत्, उच्यते-अस्तिधातोस्सत्ताह्यर्थः, तेनेदं तादात्म्यं युक्तमिति दर्शितं भवतीति, उपपादकशास्त्राणि दर्शयति (य आत्मनीति) 'सन्मूला' इत्यादावपि सदायतनत्वतदनत्वाभ्यामात्मत्वसिद्धिः। 'सन्मूलाः' इत्यादिवाक्योपेतस्य 'य आत्मनि' इत्यादिवाक्यस्यार्थमाह-

* भावप्रकाशिका *

रण्यनिर्देशः, 'एष म आत्मा' इति व्यधिकरणनिर्देशश्च न दृष्टिविधित्वशङ्काव्यतिरेकोक्तिविरोधात्, अतो न तत्रायं विचार उपयुक्त इति भावः। वस्तुतस्तु पृथक्सिद्धस्वरूपानात्मत्वानुसन्धानस्य मोक्षसाधनतया विहितत्वात्, अनात्मत्वमेव प्रामाणिकम्, 'आत्मेत्येवोपासीत' इत्येतत्तु अभ्युदयफलकदृष्टिविधिरूपं भविष्यतीति पूर्वपक्षिणो भावः। (अहंशब्दार्थतात्पर्यविवक्षयेति) अहंशब्दार्थस्य प्रकृतित्वविवक्षायां प्रकृतेरेवास्तिक्रियाकर्तृत्वात् उत्तमपुरुष इत्यर्थः। अत एव 'यदग्ने स्यामहं त्वं त्वं वा स्या अहम्' इति, प्रकृत्याश्रयः पुरुषो भवतीति 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः'

तनाः सत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्वम्" "सर्वं खल्विदं ब्रह्म तज्जलानिति" इति च सर्वस्य चिदचिद्वस्तुनः तज्जत्वात्तल्लत्वात्तदनत्वात्तन्नियाम्यत्वात्तच्छरीरत्वाच्च सर्वस्यायमात्मा; अतः स त आत्मा; अतो यथा प्रत्यगात्मनः स्वशरीरं प्रत्यात्मत्वाद्देवोऽहं मनुष्योऽहमित्यनुसन्धानम्; तथा प्रत्यगात्मनोऽप्यात्मत्वात्परमात्मनस्तस्याप्यहमित्येवानुसन्धानं युक्तमिति । एवं शास्त्रैरुपपादितं सर्वबुद्धीनां ब्रह्मैकनिष्ठत्वेन सर्वशब्दानां ब्रह्मैकनिष्ठत्वमभ्युपगच्छन्तः "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते" इति व्यतिकरेणोक्तवन्तः । एवं च "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद अकृत्स्नो ह्येष आत्मेत्येवोपासीत" "सर्वं

* श्रुतप्रकाशिका *

( सर्वस्येति ) कार्यकारणभावः कार्यकारणभूतजगद्ब्रह्मसामानाधिकरण्योपयोगी, अत्र तु शुद्धस्वरूपजीवसामानाधिकरण्योपयोगी शरीरशरीरिभाव एव, नियाम्यत्वं हि शरीरलक्षणत्वेनोक्तं, युक्तमिति उपपादयन्तीत्यन्वयः, एवं चेत्यादिना एकत्वपृथक्त्वश्रुत्योरविरोधमाह– तद्विविच्य दर्शयति ( अहमिति ) गुणगुणिरूपार्थद्वयसद्भावाभिप्राया भेदश्रुतयः । तत्र द्वयोरपि स्वनिष्ठत्वं नास्तीत्यन्यतरस्य प्रकारिनिष्ठत्वात् गुणभूतवस्तुनः स्वनिष्ठत्वनिषेधपरा अभे-

* भावप्रकाशिका *

इति सूत्रे प्रतिपादितमिति द्रष्टव्यम् । ( युक्तमिति दर्शितं भवतीति ) क्रियान्वयात्प्रागेव 'विष्णवे शिपिविष्टाय' इत्यादौ सामानाधिकरण्यस्थले परस्परमभेदान्वयाभ्युपगमादिहाप्यभेदान्वयानन्तरं तस्मिन्नभेदे अस्तित्वान्वयसं-

तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" इत्यन्यत्वानुसन्धाननिषेधः "पृथगात्मानं प्रेरितारं च मत्वा" इति पृथक्त्वानुसन्धानविधानं चाविरुद्धम्, अहमिति स्वात्मतयाऽनुसन्धानादन्यत्वानुसन्धाननिषेधो रक्षितः, स्वशरीरात् स्वात्मनोऽधिकत्वानुसन्धानवत्स्वात्मनोऽपि परमात्मनोऽधिकत्वानुसन्धानात्पृथक्त्वानुसन्धानविधानं च रक्षितम् । अधिकस्य ब्रह्मणः प्रत्यगात्मन आत्मत्वात्तस्य च ब्रह्मशरीरत्वान्निषेधवाक्येऽकृत्स्नो ह्येष इत्युक्तम् । अत उपासितुरात्मत्वेन ब्रह्मोपास्यमिति स्थितम् ॥ ३ ॥

आत्मत्वोपासनाधिकरणं समाप्तम् ॥



* श्रुतप्रकाशिका *

दश्रुतय इति विभाग इत्यर्थः । तदुपपादयति । ( अधिकस्येति ) अकृत्स्नः—अपूर्णः, गुणमात्रपरत्वे च न पूर्तिः, विशिष्ट एव पूर्णः. ईदृशापूर्तिवचनं गुणगुणिभेदे सत्येवोपपद्यते इत्यर्थः । एवं शरीरात्मभावगोचरस्य सामानाधिकरण्यस्याप्रामाणिकत्वानुपपन्नत्वयोरभावान्मोक्षफलश्रवणाच्च न दृष्टिविधित्वमित्युक्तं भवति, अधिकरणार्थमुपसंहरति ( अत इति ) ।

परे तु– जीवपरयोरैक्यं सिद्धान्तयन्ति, तत्र विरुद्धधर्मयोगादैक्यानुपपत्तिः, ईश्वरस्य जीवत्वे ईश्वराभावप्रसङ्गः. जीवस्येश्वरत्वे शास्त्रस्याधिकारिविरहः, अहं दुःखीत्यादिप्रत्यक्षविरोधश्चेति परिचोद्य ईश्वराभावं तस्य प्रामाणिकत्वात् परिहरन्ति, तदयुक्तं प्रामाणिकपरित्यागप्रसङ्ग इति चोदिते प्रामाणिकत्वादिति परिहारायोगात्, न हि प्रसञ्जनीयविपर्ययप्रतिज्ञानेन प्रसञ्जकधर्मः

* भावप्रकाशिका *

भव इति भावः । ( प्रामाणिकत्वादिति परिहारायोगादिति ) संसारिणः

* श्रुतप्रकाशिका *

परिह्रियते सर्वतर्कोच्छेदप्रसङ्गात् प्रसञ्जकप्रसञ्जनीययव्याप्तेरभग्नत्वाच्च , तत्त्वावबोधात् प्रागधिकारिलाभ इत्यधिकारिविरहं परिहरन्ति , तदप्ययुक्तम् ईश्वरस्य सर्वज्ञत्वान्निर्विशेषचिन्मात्रस्य ज्ञातृत्वाभावात्, ज्ञातुश्च स्वनाशस्यापुरुषार्थत्वात् शास्त्रप्रद्वेषवत्त्वेन च त्रयाणामप्यधिकारानुपपत्तेः, श्रवणात्पूर्वं स्वनाशानभिज्ञत्वाद्दस्युभूयिष्ठमार्गे मार्गानभिज्ञवदवतरतीति चेन्न , अश्रुतेऽपि शास्त्रे सौगतानां सर्वक्षणिकत्ववत् मायावादिनां मुक्तेर्ज्ञातृनाशत्वस्य प्रसिद्धिप्राचुर्येण शास्त्रभीरुत्वाल्लोकस्य । प्रत्यक्त्वादीनां संसार्यात्मविषयत्वादविरोध इति चायुक्तम् , नियमेन हेयानर्हतदर्हयोर्नियमेन शृङ्गानर्हतदर्हयोः शशमहिषयोरिवैक्यविरोधस्यावर्जनीयत्वात्, दुःखयोगस्य मिथ्यात्वात् अविरोध इति चायुक्तम्, मिथ्याभूतहेयानर्हतदर्हयोर्विरोधस्यावर्जनीयत्वात् , महिषविषाणमपि त्वन्मते मिथ्या तथापि शशमहिषयोः स्वरूपविरोधोऽभ्युपगतः । ननु स्वाप्नशशमहिषयोः स्वप्नावस्थायामेव विरोधः न प्रबोधे, विषाणस्य निवृत्तत्वात्, एवमविद्यानिवृत्तौ दुःखनिवृत्तेर्जीवपरयोर्न स्वभावविरोध इति चेत् , तर्हि स्वाप्नशशमहिषयोरिव जीवेश्वरयोरुभयोरपि विनाश एवाविरोधनिर्वाहकः स्यात् , ततश्चेश्वरनित्यत्वश्रुतिविरोधः, स्वभावविरोधश्चापरिहृतः, यावत्सत्ताकं विरोधस्यावस्थितत्वात्, यदि प्रबोधेऽपि परस्य हेयानर्हत्वं तिष्ठत्येव जीवस्य हेयार्हत्वमेव निवर्तत इत्युच्येत , तथाऽपि जाग्रदनुभूतशशस्वाप्नमहिषयोरिव न तयोरेकत्वसम्भवः, सत्तया हेयानर्ह ईश्वरः, विनाशात्तदनर्हो जीव इति विद्यमानदशायां हेयार्हत्वतदनर्हत्वयोर्विनाशित्वाविनाशित्वयोश्च विरोधस्यावस्थित-

* भावप्रकाशिका *

संसारित्वापोहेन ईश्वरात्मत्वप्रतिपादनेऽपि ईश्वरस्य संसार्यात्मत्वप्रतिपादनानभ्युपगमात् नेश्वराभावप्रसङ्ग इति चेति परिहारान्तरमप्युपन्यस्तम्, तथापि प्रामाणिकत्वादित्ययं परिहारः परिहासपदम् । बाधस्य तर्केऽनुगुणत्वादित्यत्र तात्पर्यमिति द्रष्टव्यम् । तत् त्वमेव, त्वमेव तदितीश्वरस्यापि संसार्यात्मत्वप्रतिपादनाच्चेत्यपि द्रष्टव्यम् ( शास्त्रभीरुत्वाल्लोकस्येति ) श्रवणे न प्रवृत्तिस्स्यादिति शेषः, स्वाप्नशशमहिषवैधर्म्यं शङ्कते ( यदि प्रबोधेऽपीति ) ( जीवस्य हेयार्हत्वमेव निवर्तत इति ) स्वप्ने तु धर्मिद्वयं धर्मद्वयञ्च निवर्तत इति

## न प्रतीके न हि सः ॥ ४ ॥

३ अधिकरणम्

"मनो ब्रह्मेत्युपासीत" "स यो नाम ब्रह्मेत्युपास्ते" इत्यादिप्रतीकोपासनेष्वप्यात्मत्वानुस-

* श्रुतप्रकाशिका *

त्वात्, ईश्वरत्वं परमार्थश्चेन्निर्विशेषत्वहानिः, न चेदीश्वराभावः, ऐश्वर्यादिगुणाभावेऽपि स्वरूपमवतिष्ठत इति चेत् रजतत्वनिवृत्तावप्यधिष्ठानमवतिष्ठत इति शुक्तिरूप्येश्वरयोरवैषम्यमेव स्यात्, जीवेश्वरैकत्वविधीनां दृष्टिविधित्वं पूर्वपक्षे आशङ्क्य भेदनिषेधात्तदयुक्तमिति परिहृतम्, तदप्ययुक्तम्, दृष्ट्युपासननिष्ठस्य भेदानुसन्धाने प्रत्यवायपरतयाऽपि भेदनिषेधश्रुत्युपपत्तेर्भेदतात्त्विकत्वाबाधकत्वात्, न हि गरुडात्मनोर्भेददृष्टौ विषं न नश्यतीति गरुडनरेन्द्रैकत्वं तात्त्विकं स्यात्– हेयानर्हत्वतदर्हत्वस्वरूपस्वभावविरोधस्यावर्जनीयत्वादपरेषां पक्षोऽप्यनुपपन्नः, अन्येषान्तु गरुडोऽहमितिवदीश्वरोऽहमिति ज्ञानस्यातत्त्वविषयत्वात् अतत्त्वज्ञानान्मोक्षः स्यात्, यथोपासनं फलमिति मुक्तावपि भ्रान्त्यनुगमः स्यात्, यदि सदहमिति सदैक्योपास्तिर्विधीयते, तदयुक्तम्, आत्मसत्त्वस्य लोकसिद्धत्वात् सदैक्यानुसन्धानस्याविधेयत्वात्, नियन्त्रंशेन भोक्त्रंशस्य सदाकारेणैकत्वमनुसन्धेयमिति चेत्, घटेनापि तादृशैक्यं समानमिति जीवस्य परमात्मात्मकत्वं घटात्मकत्वतुल्यं स्यात्, जगतो ब्रह्मणैकत्वं नाम जात्यैक्यं स्यात् ॥ ३ ॥

आत्मत्वोपासनाधिकरणं समाप्तम् ॥

---

न प्रतीके न हि सः ॥ ४ ॥ आत्मत्वेनोपासनमुक्तम्, तत्प्रतीकोपासनेऽस्ति नेति शङ्कया सङ्गतिः, किं मनो ब्रह्मेत्यादिप्रतीकोपासनेष्वात्मत्वेनानुसन्धानं कर्तव्यम्? उत नेति, तेषूपास्यं किमुपासितुरात्मा नेति, किं

* भावप्रकाशिका *

भावः ( शुक्तिरूप्येश्वरयोरिति ) नच रूप्यस्वरूपस्य नाशात् कथमवैषम्यमिति वाच्यम्, अधिष्ठानमेवाऽध्यस्तस्वरूपमित्यभ्युपगमात् शुक्तिस्वरूपस्य चानाशादवैषम्यमिति भावः ॥ ७ ॥

इति आत्मत्वोपासनाधिकरणम् ।

भव

न्धानं कार्यम् ? उत नेति चिन्तायां "मनो ब्रह्मेत्युपासीत" इति ब्रह्मोपासनत्वसाम्यात् ब्रह्मणश्चो-पासितुरात्मत्वादात्मेत्येवोपासीतेति ।

एवं प्राप्तेऽभिधीयते— न प्रतीके- इति । प्रतीके नात्मत्वानुसन्धानं कार्यं, न हि सः- न ह्युपासितुरात्मा प्रतीकः । प्रतीकोपासनेषु प्रतीक एवोपास्यः, न ब्रह्म, ब्रह्म तु तत्र दृष्टिविशेषणमात्रं, प्रतीकोपासनं हि नाम अब्रह्मणि ब्रह्मदृष्ट्याऽनुसन्धानम्, तत्रो-पास्यस्य प्रतीकस्योपासितुरात्मत्वाभावान्न तथाऽनुस-न्धेयम् ॥ ४ ॥

नन्वत्रापि ब्रह्मैवोपास्यम्— ब्रह्मण उपास्य-त्वसम्भवे मनआदीनामचेतनानामल्पशक्तीनां चोपा-स्यत्वाश्रयणस्यान्याय्यत्वात्, अतो मनआदिदृ-

---

* श्रुतप्रकाशिका *

ब्रह्मणः प्रतीको दृष्टिविशेषणम्? उत प्रतीकस्य ब्रह्म दृष्टिविशेषणमिति? प्रती-कस्य दृष्टिविशेषणत्वे ब्रह्मण उपास्यत्वात्तस्य चात्मत्वात्तत्राप्यात्मत्वेनानुसन्धानं कार्यं स्यात्, ब्रह्मणः प्रतीके दृष्टिविशेषणत्वे प्रतीकस्यैवोपास्यत्वात्तस्य चोपा-सकं प्रत्यात्मत्वाभावात् आत्मधीर्न कार्या स्यात्, (मन इत्यादि) (ब्रह्मोपासन-त्वसाम्यादिति) ब्रह्मशब्दनिर्देशाद् ब्रह्मैवोपास्यम्, अतो ब्रह्मोपासनत्वसाम्यमित्यर्थः,

(एवं प्राप्त इति) प्रतीकोपासनेऽप्युपास्यं ब्रह्म, तच्चोपासितुरात्मा, अतो ब्रह्मो-पासनत्वसाम्यादात्मेत्युपास्यमित्यत्राह (प्रतीकोपासनेष्विति) तर्हि ब्रह्म-शब्दनिर्देशः कथमित्यत्राह (ब्रह्म त्विति) ॥ ४ ॥

अनन्तरसूत्रशङ्कामाह (नन्विति)।

* भावप्रकाशिका *

(ब्रह्मणः प्रतीको दृष्टिविशेषणमिति) ब्रह्म स्वतन्त्रेणोपास्यं प्रतीको दृष्टि-

दृष्या ब्रह्मैवोपास्यमिति तत्राह—

ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

मनआदिषु ब्रह्मदृष्टिरेव युक्ता, न ब्रह्मणि मनआदिदृष्टिः, ब्रह्मणो मनआदिभ्य उत्कर्षात्, तेषाञ्च विपर्ययात्, उत्कृष्टे हि राजनि भृत्यदृष्टिः प्रत्यवायकरी, भृत्ये तु राजदृष्टिरभ्युदयाय ॥ ५ ॥

प्रतीकाधिकरणं समाप्तम् ॥

---

* श्रुतप्रकाशिका *

ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥ अचेतनमनःप्रभृतेरुपास्यत्वासम्भवोऽभिमानिदेवतोपास्यत्वेन परिहृत इति भावः ।

इतरे त्रयोऽपि ब्रह्मदृष्टिरिति सूत्रमधिकरणान्तरमाहुः, नियामकाभावात् पूर्वपक्षम्, उत्कर्षात् सिद्धान्तमाहुः, तदयुक्तं तादर्थ्यनैरन्तर्याभ्यामेकाधिकरणत्वसिद्धेः । परे तु न प्रतीक इत्यत्र सिद्धान्तयुक्तिमेवमाहुः— प्रतीकानां ब्रह्माभिन्नत्वात्, तस्याऽप्यात्मत्वमिति चेत्, विकारस्वरूपोपमर्देन ब्रह्मत्वं स्यात् यथा जीवस्य जीवभावप्रविलयेन ब्रह्मत्वम्, स्वस्तिकस्य तदाकारोपमर्देन स्वर्णात्मकत्वम्, एवं स्वरूपोपमर्दे सति प्रतीकस्यैवाभावात् तस्यात्मत्वमेव न स्यादिति, तदप्ययुक्तं जीवस्य ब्रह्मशरीरतया तत्पर्यन्तत्वेन जीवभावप्रविलयेन विना ब्रह्मतादात्म्यसिद्धिवत् प्रतीकानामपि ब्रह्मशरीरत्वोपपत्तेस्तदभावप्रस-

ꣿ भावप्रकाशिका ꣿ

विशेषणमित्यर्थः ॥ ꣿ ॥

भाष्ये—भृत्ये तु राजदृष्टिरभ्युदयायेति, स्यादिति शेषः, इदमुपलक्षणम् 'मनो ब्रह्मेत्युपासीत' इत्यादौ मनआदिशब्दानां प्राथम्यात् तन्मुख्यार्थत्यागस्याऽनुचितत्वात् ब्रह्मशब्दस्य इतिशब्दशिरस्कत्वेन स्वार्थात् प्रच्यावनस्यापेक्षितत्वाच्च 'आदित्यं ब्रह्मोपास्ते' इत्यादौ द्वितीयानिर्देशाच्च मनआदौ ब्रह्मदृष्टिरेव युक्तेति द्रष्टव्यम् ( तदभावप्रसङ्गाभावादिति ) प्रतीकाभावप्र-

* श्रुतप्रकाशिका *

ङ्गाभावात् ।

अपरे तु "वासो ददाति अनो ददाती"त्यत्र तन्तुकाष्ठादीनामिव मनआद्युपासने ब्रह्मणश्चोदितत्वाभावादनुपास्यत्वमिति, तदयुक्तं तत्र तन्तुकाष्ठादिनिर्देशाभावादिह तु ब्रह्मसामानाधिकरण्याच्च दृष्टान्तवैषम्यात् अतोऽनादरः । ननु दृष्टिविधित्वे सिद्धे हि ब्रह्म वा मनो वा दृष्टिविशेषणमिति विशयः, प्रतीकस्यापि ब्रह्मशरीरतया तत्त्वोपासनपरत्वे सम्भवति कथमतत्त्वोपासनपरताङ्गीकारेण ब्रह्मणो दृष्टिविशेषणत्वपरं द्वितीयसूत्रं घटते ?

७ भावप्रकाशिका ७

सङ्गाभावादित्यर्थः, यद्यपि ब्रह्मशरीरत्वमात्रं, न स्वरूपोपमर्दकम्, उक्तरीत्या अनुपमर्देनापि शरीरत्वसम्भवात्, तथापि न तन्मात्रमात्मत्वेनोपास्यत्वप्रयोजकम्, ब्रह्मस्वरूपत्वस्यैव ग्राह्यत्वेन उपास्यत्वप्रयोजकत्वात् प्रतीकादेर्ब्रह्मस्वरूपत्वापत्तौ प्रतीकाभावप्रसङ्गस्य अवर्जनीयत्वात्, प्रसङ्गादिति चेन्न, जडस्य मनआदेः ब्रह्मस्वरूपत्वापत्तेरत्यान्तासत्त्वेन तस्य प्रतीकाभावप्रसङ्गहेतुत्वस्याप्रसक्तेरित्यत्र तात्पर्यात् (वासो ददात्यनो ददातीति) वासो ददात्यनो ददातीत्यत्र वानं तक्षणञ्च कृत्वा वासोऽनश्च निष्पाद्यैव दातव्यम्, उत यथासिद्धमेव दातव्यमिति संशये वानतक्षणक्रियायां सत्यां वासोऽनश्शब्दयोः प्रयोगदर्शनात् क्रियानिमित्तकौ वासोऽनश्शब्दौ क्रियामेव दानाङ्गतया विधत्तः, तस्माद्दानं कुर्वता तन्तून् वृक्षांश्चोपादाय वानं तक्षणं च कर्तव्यमिति प्राप्ते, जात्यन्वयव्यतिरेकानुविधानात् जातिशब्दावेतौ, जातिस्तु क्रियाभिव्यङ्ग्येति क्रियोत्तरकाले शब्दप्रयोगः, नतु वासोऽनश्शब्दयोः क्रियावचनत्वम्, अतो वानतक्षणक्रिययोरचोदितत्वात् नानुष्ठानमिति सप्तमे स्थितम्, (ब्रह्मणश्चोदितत्वाभावादिति) 'मनो ब्रह्मे'त्यादौ ब्रह्मेत्युपासनमात्रं विधीयते न त्वात्मा, तथापि यस्य यन्मात्रतयोपासनं विहितं तत्तन्मात्रतयैव प्रतिपत्तव्यम्, यावद्वचनं वाचनिकमिति न्यायात् नाधिकमध्याहर्तव्यम् अतिप्रसङ्गादिति भावः । (ब्रह्मसामानाधिकरण्याच्चेति) ब्रह्मण उपास्यत्वश्रवणात् ब्रह्मोपासने सर्वत्रात्मत्वस्य सत्यत्वादिवदनुवृत्ततायाः पूर्वाधिकरणे समर्थितत्वादित्यर्थः (इतिकरणवैयर्थ्यं हेतुरिति) शुक्तिकां रजतमिति प्रत्येतीति

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

४ अधिकरणम्

[1]"य एवासौ तपति तमुद्गीथमुपासीत" इत्यादिषु कर्माङ्गाश्रयेषूपासनेषु संशयः— किमुद्गीथादौ कर्माङ्गे आदित्यादिदृष्टिः कर्तव्या ? उता-

* श्रुतप्रकाशिका *

उच्यते— इतिकरणवैयर्थ्यं हेतुः, उद्देश्यत्वज्ञापकेन प्रथमनिर्देशेन विशेष्यतावगमश्च, क्वचित्प्रतीकगतद्वितीयाविभक्तिरपि हेतुः ॥ ५ ॥

प्रतीकाधिकरणं समाप्तम् ॥

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥ देवताया उत्कर्षात् दृष्टिविशेषणत्वमुक्तं, तदुत्कर्षानपेक्षेण कर्मणा एवोत्कर्षशङ्कयाऽवान्तरसङ्गतिः, क्रत्वङ्गाश्रयोपासनेषु किमादित्यादावुद्गीथदृष्टिः ? उतोद्गीथादावादित्यादिदृष्टिः ? फलसाधनतयोत्कर्षः किमादित्यादेरुतोद्गीथादेः, उद्गीथादेश्चेदादित्यादावुद्गीथादिदृष्टिः, आदित्यादेश्चेदुद्गीथादावादित्यादिदृष्टिः कार्या स्यात् । ननु

* भावप्रकाशिका *

वाक्यसमानाकारत्वादिति भावः, ( प्रतीकगतद्वितीयाविभक्तिरपीति ) 'य एतदेवं विद्वानादित्यं ब्रह्मेत्युपास्ते' 'यः सङ्कल्पं ब्रह्मेत्युपास्ते' इत्यादावादित्यसङ्कल्पादिपुंल्लिङ्गशब्देषु द्वितीयाया असंदिग्धत्वादिति भावः ( हेतुरिति ) प्रतीकस्यैव स्वतन्त्रोपास्यत्वं ब्रह्मणो दृष्टिविशेषणत्वम् इत्येवंरूपे अधिकरणार्थे इति शेषः, आदित्यादेः दृष्टिविशेषणत्वे 'ब्रह्म आदित्य इत्युपास्ते' 'ब्रह्म सङ्कल्प इत्युपास्ते' इत्येवं प्रथमतः उपास्यं ब्रह्म द्वितीयान्तेन निर्दिश्य दृष्टिविशेषणानां आदित्यादीनां प्रथमान्तेन पश्चाच्च निर्देशप्रसङ्ग इत्यर्थः । अतः प्रतीकगतद्वितीयाविभक्तिः प्रथमनिर्देशश्च— मनआदेः स्वतन्त्रोपास्यत्वं ब्रह्मण उपास्यविशेषणत्वमित्येवंरूपाधिकरणप्रतिपाद्ये अर्थे हेतुरित्यर्थः ॥ ५ ॥

इति प्रतीकाधिकरणम् ॥

( देवताया उत्कर्षादिति ) ननु 'ब्रह्मदृष्टिरुत्कर्षा' दिति ब्रह्मण एवोत्क-

१. छा० १-३-१

दित्यादिषूद्गीथादिदृष्टिरिति, उत्कृष्टदृष्टिर्निकृष्टे कर्त-व्येति न्यायात् उद्गीथादीनां च फलसाधनभूतक-र्माङ्गत्वेनाफलेभ्य आदित्यादिभ्य उत्कृष्टत्वादादित्या-दिषूद्गीथादिदृष्टिः—

इति प्राप्तेऽभिधीयते— आदित्यादिमतयश्चाङ्गे— इति । चशब्दोऽवधारणे, कर्माङ्गे उद्गीथादावादि-त्यादिदृष्टय एव कार्याः, कुतः ? उपपत्तेः—आदि-

---

* श्रुतप्रकाशिका *

फलसाधनत्वं देवताया इति पूर्वमेव सिद्धं 'स एवैनं भूतिं गमयति' इति, तत्कथमुद्गीथादेः फलसाधनत्वशङ्कया पूर्वपक्षोत्थानं, सत्यं, फलसाधनतया विहितत्वात् प्रधानस्य कर्मणः काष्ठानां ज्वालावद्देवताप्रीतिरवान्तरव्यापारमात्र-मित्यप्राधान्यमाशङ्क्यते, ब्रह्ममतिवदादित्यादिमतयोऽपीति चशब्दार्थः, 'मनो

७ भावप्रकाशिका ७

षात् दृष्टिविशेषणत्वमुक्तम्, नत्वादित्यादिदेवतायाः, येनेयमाक्षेपिकी सङ्गति-स्स्यादिति चेन्न, ब्रह्मणस्सर्वज्ञत्वफलप्रदत्वादिना मनआद्यपेक्षयोत्कृष्टत्वात्, तद्दृष्टिर्मनआदौ कर्तव्येत्युक्ते आदित्यादीनामपि उद्गीथाद्यपेक्षया देवतात्वा-दिना उत्कृष्टत्वात् आदित्यादिदृष्टिरुद्गीथादौ कर्तव्येति सिद्धमेवेति भावः, ( फलसाधनतया विहितत्वात्प्रधानस्य कर्मण इति ) साङ्गस्येति शेषः, तत-श्चोद्गीथकर्माङ्गभूतोद्गीथादीनामपि फलवत्त्वमस्तीति भावः ( देवताप्रीतिरवान्त-रव्यापारमात्रमिति ) अतिथिभोजनेनाऽतिथिप्रीतिवदिति भावः, 'फलमत उपपत्तेः' इति न्यायेन परमात्मन एव फलप्रदत्वेन इतरासां देवतानां भोजनेनातिथिवत् कर्मभिः प्रीतानामपि फलप्रदत्वासम्भवेन अप्रधानत्वादिति भावः, ब्रह्ममतिवदादित्यादिमतयोपीति चशब्दार्थ इति ग्रन्थो राद्धान्त-व्याख्याने उत्कृष्टश्चेत् सुश्लिष्ट इव भाति, नच तत्रापि चशब्दोऽवधा रण इति भाष्येण विरोधश्शङ्कनीयः, तस्य निपातत्वेन नानार्थत्वात्, तथापि व्याख्यानोपपत्तेः सूत्रस्यानेकार्थसूचकत्वादिति द्रष्टव्यम्, ननु

**त्यादीनामेवोत्कृष्टत्वोपपत्तेः, आदित्यादिदेवताराधनद्वारेण हि कर्मणामपि फलसाधनत्वम्, अतस्तद्दृष्टिरुद्गीथाद्यङ्गे ॥ ६ ॥**

आदित्यादिमत्यधिकरणं समाप्तम् ॥



* श्रुतप्रकाशिका *

ब्रह्मेत्युपासीत' इत्यत्रोपास्यं प्रथमं निर्दिष्टं दृष्टिविशेषणं चरमनिर्दिष्टम्, एवमत्रापि 'य एवासौ तपति तमुद्गीथम्' इत्युद्गीथस्य चरमनिर्देशात् स दृष्टिविशेषणं, देवतायां यद्वृत्तयोगात् प्राथम्याच्चोद्देश्यत्वमित्यपि पूर्वपक्षयुक्तिरभिप्रेता। अफलेभ्यः—अफलसाधनेभ्यः।

राद्धान्ते— (आदित्यादिदेवताराधनद्वारेणेति) 'अर्यम्णे चरुं निर्वपे'दित्यादि द्रष्टव्यम्, देवतायाः स्थिरत्वेनान्यवहितसाधनतया लोकदृष्टसेव्यसेवान्यायेनाराधनस्याराध्यदेवताप्रधानत्वाच्च देवतोत्कर्षसिद्धेर्यद्वृत्ताद्यस्वारस्यं सोढव्यमिति भावः।

परे तु—उद्गीथादित्यादीनां दृष्टिविशेषणत्वमनियमेन स्यात्—नियामकाभावादिति च

* भावप्रकाशिका *

उद्गीथादीनां कर्माङ्गतया फलसाधनत्ववत् आदित्यादेरपि देवतारूपेण फलसाधनत्वमविशिष्टमिति कथं पूर्वपक्ष इत्यत आह (मनो ब्रह्मेत्युपासीतेत्यादिना) (अफलसाधनेभ्य इति) न विद्यते फलं येषां त इत्येवं बहुव्रीहिणा अफलशब्दोऽफलसाधनवचन इति भावः (अर्यम्णे चरुं निर्वपेदिति) यद्यादित्यादेः 'अर्यम्णे चरुं निर्वपेत् स्वर्गकामः' इत्यादि विध्यन्तरविहितेषु कर्मसु फलप्रदत्वसम्भवेऽपि अस्मिन्नुपासनाप्रकरणे देवतात्वाभावेन फलप्रदत्वाभावात् तत उद्गीथादेरेव फलवत्कर्माङ्गत्वात् उत्कृष्टत्वमित्युच्येत— तदापि उद्गीथादावेवादित्यादिदृष्टिर्विधेया, अङ्गानङ्गसमभिव्याहारवतीनां विद्यानां अङ्गेषु अनङ्गदृष्टिरूपत्वे प्रधानकर्मप्रयुक्ताङ्गाश्रयत्वात् स्वतन्त्रफलानामपि तासां अधिकृताधिकारतया पृथक्प्रवृत्तिर्न कल्पनीयेति प्रयुक्तिलाघवात्, अन्यथा प्रयुक्तिकल्पनागौरवं स्यादिति द्रष्टव्यम्, उद्गी-

* श्रुतप्रकाशिका *

पूर्वपक्षमाहुः—नियामकसद्भावात् तदनादरः, एवं च पूर्वपक्षान्तरमाहुः—उद्गीथादीनां कर्मसमवायितया क्रियारूपाणां फलसाधनतयोत्कर्षः 'इयमेवर्गग्निः साम'इत्यत्र 'तदेतदस्यामृच्यध्यूढं साम' इत्यृक्सामशब्देन पृथिव्यग्न्यभिधानञ्च ऋक्सामाध्यासनिबन्धनं, छत्तरि हि राजाध्यासाद्राजशब्दो न राज्ञि छत्रशब्दः, तत्र छत्रध्यासाभावात्, 'लोकेषु पञ्चविधं सामोपासीत' इति लोकानामधिकरणत्वश्रवणात् तत्र कृत्वङ्गाध्यासः, पृथिवी हिङ्कार इति प्रथमनिर्देशाच्च पृथिव्याद्युद्देशेन हिङ्कारत्वादिदृष्टिविधिरिति पूर्वपक्षहेतव उपन्यस्ताः । यदेव विद्यया करोति तदेव वीर्यवत्तरमिति विद्यया कर्मणो वीर्यवत्तरत्वं श्रुतं न सिद्धरूपद्रव्यस्य, अत आदित्यादिमतिभिरुद्गीथादिकर्मस्वतिशय उपपद्यते न तूद्गीथादिमतिभिरादित्यादीनाम्, कर्मणो ह्यपूर्वसन्निकर्षः, न त्वादित्यादीनाम्, असाधितस्य करण-

ॐ भावप्रकाशिका ॐ

थादीनां क्रियारूपाणामिति पाठः, कर्मसमवायितयेति क्वचित्पाठो लेखकानवधाननिबन्धनः, उद्गीथादीनां स्वत एव गीतिक्रियारूपत्वात् परैस्तथानुक्तेश्चेति द्रष्टव्यम् । युक्त्यन्तरमाह ( इयमेवेति ) इयमेवर्गग्निस्सामेत्युक्त्वा तद्धेतुसमर्पके 'तदेतदेतस्यामृच्यध्यूढं साम' इति वाक्ये पृथिव्यग्न्योः ऋक्सामशब्दप्रयोगः पूर्ववाक्ये पृथिव्यग्न्योः ऋक्सामदृष्टिं ज्ञापयति, आरोप्यवाचिशब्देनैवाधिष्ठानव्यवहारस्य लोके दर्शनादिति भावः ( न राज्ञि छत्तृशब्द इति ) अध्यस्ते राज्ञि नाधिष्ठानवाचिछत्तृशब्दप्रयोगोऽस्तीति भावः, तत्र छत्रध्यासाभावादिति क्वचित्पाठो दृश्यते, न तस्य सामीचीन्यं पश्यामः ( कर्मणो वीर्यवत्तरत्वं श्रुतमिति ) 'यदेव विद्यया करोति' इति विद्यया क्रियमाणस्यैव वीर्यवत्तरत्वश्रवणात् आदित्यादेश्चाक्रियमाणत्वादिति भावः ( उद्गीथादिकर्मस्वतिशय उपपद्यत इति ) भूतभाव्युपयोगं हि वस्तु संस्कार्यमिष्यते, उद्गीथादीनां च क्रियात्वात् ज्योतिष्टोमाद्युपकारस्य तैः करिष्यमाणत्वाच्च तान्येवोद्गीथादीन्यादित्यादिमतिभिः संस्क्रियेरन्नित्यर्थः ( कर्मणो ह्यपूर्वसन्निकर्ष इति ) उद्गीथादिकर्मण इत्यर्थः, ततश्च सप्रयोजनत्वादादित्यादिमतिभिः संस्कार्यत्वमुपपद्यत इति भावः, ननु उद्गीथादिकर्मणो नापूर्वसन्निकर्षः, प्रधानस्यैवापूर्वसन्नि-

* श्रुतप्रकाशिका *

त्वायोगात्, अतः कर्मस्वतिशयावहत्वादादित्यादिः प्रधानम्, कर्मफलस्यादित्यादिप्राप्तिलक्षणत्वात् फलात्मकतया चादित्यादीनां प्राधान्यम्, 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्युपक्रमे द्वितीयाश्रुत्योद्गीथादिरुपास्यत्वेनावगतः, इयमेवर्गिति एवकारोपश्लेषादृचि पृथिवीत्वं विधेयमवगतं, 'य एवं विद्वान् साम गायती'त्यङ्गाश्रयविज्ञानमुपसंहृतम्, अत आदित्यादेर्दृष्टिविशेषणत्वम्, पृथिव्यामृक्छब्दो लाक्षणिकः सम्बन्धमात्रमपेक्षते न तूत्कर्षमिति न तन्निबन्धनः, सामात्मना लोकमुपासीतेति विभक्तिद्वयविपरिणामादपि लोकात्मना सामोपासीतेति सप्तमीमात्रविपरिणामो वरम्, पृथिवी हिङ्कार इत्यादिक्रमो बहूपपत्त्यनुरोधेन नेयः, अतोऽङ्गेष्वादित्यादिदृष्टिविधिरिति सिद्धान्तयन्ति, उपपत्तेरिति कस्योपपत्तिरित्यपेक्षायामुत्कर्षस्य पूर्वसूत्रप्रकृतत्वात् तस्योपपत्तेरिति व्याख्यानमुचितं न त्वर्थान्तरस्य, उत्कर्षश्च प्रागुक्तलक्षणः, कर्मस्वतिशयाधायकत्वेन फलात्मकत्वेन च प्राधान्यमुत्कर्षान्तर्गतम्, उद्गीथेनोपक्रमः साम्नोपसंहारश्च सर्वेषु देवतादृष्टिविधिष्वननुगताविति व्यापक एव हेतुर्भाष्येऽभिहितः, लोकेषु पञ्चविधं साम सप्तविधं सामेत्यादिषु विभक्तिद्वय-

* भावप्रकाशिका *

कृष्टत्वादित्याशंक्याह ( असाधितस्य करणत्वायोगादिति ) अङ्गाननुगृहीतस्य प्रधानस्यापूर्वकरणत्वासम्भवेन अङ्गानामपूर्वसाक्षिकृष्टत्वमस्तीति भावः, ( कर्मस्वतिशयावहत्वादिति ) उपासनस्योद्गीथादिकर्मसु अतिशयावहत्वात् उद्गीथादिकर्मण एव स्वतन्त्रोपास्यत्वमिति भावः, युक्त्यन्तरमाह ( आदित्यादिः प्रधानमिति ) प्रधानशब्दस्य नित्यनपुंसकलिङ्गतया तथा निर्देशः, तदेवोपपादयति ( कर्मफलस्येत्यादिना ) ( ऋचि पृथिवीत्वं विधेयमवगतमिति ) पृथिव्या हि ऋक्त्वे अवधार्यमाणे इयमृगेवेत्यक्षरन्यासः स्यादिति भावः ( पृथिव्यामृक्छब्दो लाक्षणिक इति ) तदेतदेतस्यामिति वाक्य इति शेषः ( सम्बन्धमात्रमिति ) पृथिव्यग्न्योः ऋक्सामशब्दवाच्याध्यस्तत्वलक्षणसम्बन्धोऽस्तीति भावः ( न तूत्कर्षमिति ) नाध्यस्तमपेक्षत इत्यर्थः, तथाचाध्यस्तवाचिशब्दत्वाभावेपि अधिष्ठानवाचिशब्देन अध्यस्ते लक्षणया प्रयोग उपपद्यत इति भावः, ( कर्मस्वतिशयाधायक-

* श्रुतप्रकाशिका *

विपरिणामाभावादेव लोकस्य दृष्टिविशेषणत्वोपपादनं मन्दम्, न हि द्वितीयाविभक्त्यर्थोऽनन्वितः लोकादिशब्दानां देवतापरत्वे प्रामाणिके सत्युत्कर्षादेव देवताया दृष्टिविशेषणत्वं न चेद्यथाप्रतिपन्नस्वीकारेऽप्यविरोधः, पृथिवी हिङ्कार इत्यादिरप्येतेन व्याख्यातः, अतो भाष्योक्तप्रकारेण सारतरयुक्त्यभिप्रायं सूत्रम् ।

अन्ये तु— फलसाधनतयोत्कर्षादेव पूर्वपक्षं कृत्वा एवं सिद्धान्तमाहुः— उद्गीथादिष्वादित्यादिदृष्टिः कर्मसमृद्ध्यर्थेषूपासनेष्वधिकृताधिकारोपपत्तेः, आदित्यादीनां कर्माङ्गदृष्ट्योपास्यत्वे हि क्रत्वधिकृतेनैव कर्तव्यत्वनियमो न स्यात्, तन्नियमश्च यदेव विद्यया करोतीति श्रुत्याऽवगम्यते 'य एवासौ तपति तमुद्गीथमुपासीत' 'य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे' इत्यादिषु यच्छब्दयोगप्राथम्याभ्यामुद्देश्यत्वावगमादादित्यादीनामुपास्यत्वमिति चेत्— 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्युद्गीथोपास्यताया उपक्रमसिद्धत्वात् क्रत्वधिकृताधिकारोपपत्तेश्च कर्मसमृद्धिव्यतिरिक्तफलेष्वङ्गाश्रितेषूपासनेषु 'लोकेषु पञ्चविधं सामोपासीत' इत्यादिषु क्रत्वधिकृताधिकारसम्बन्धे प्रमाणाभावात् न क्रत्वङ्गेषु देवतादृष्टिरिति नियमः, तत्रैवं निर्वाहः— त्रिविधमुपासनं भूतार्थमध्याससम्पदिति, भूतार्थं यथार्थविषयं न तत्र किंचिन्निरूप्यम्, अध्यासोऽन्यस्मिन्नन्यधर्माध्यासः, यथोद्गीथेऽसुरपाप्मविध्वंसनादयः प्राणधर्माः, भयतमोपहत्यादयः आदित्यधर्माः, अन्यसादृश्यानुसन्धानं सम्पत्, यथा पञ्चविधत्वसप्तविधत्वाद्यनुसन्धानं, तच्च वाक्येनैवोपपादनादवगम्यते, अध्याससम्पत्ती च निकृष्टगतधर्मतत्सादृश्यविषये चेत् उपास्यं निकृष्टं कृतं स्यात्, उत्कृष्टगतधर्मतत्सादृश्यविषये चेदुपास्यमुत्कृष्टं कृतं स्यात्, ततो महत्कृतमेवो-

* भावप्रकाशिका *

त्वेनेति ) कर्मस्वनुष्ठितेषु परमात्मप्रीतिरूपातिशयाधाने आदित्यादिदेवताप्रीतेः द्वारत्वादिति भावः, यद्यप्ययं ग्रन्थः पुरोवादग्रन्थेषु न दृश्यते, तथापि योग्यतानुसारादेवमुक्तमिति द्रष्टव्यम्, ( नहि द्वितीयाविभक्त्यर्थोऽनन्वित इति ) लोकेष्वित्यस्य द्वितीयया विपरिणाममात्रेणैव 'वाचं धेनुमुपासीत' 'योषितमग्निं ध्यायीत' इत्यादिवत् 'लोकान् पञ्चविधं सामोपासीत' इत्युक्तौ विरोधाभावादिति भावः, ( क्रत्वधिकृतेनेति ) क्रत्वङ्गाश्रितत्वात् गोदोहना-

* श्रुतप्रकाशिका *

पास्यम्, तत्र दृष्टिविशेषणनिर्णयस्तु उपक्रमोपसंहारवाक्यशेषप्राथम्ययच्छब्दद्-योगमहत्त्वाद्यनुरोधेन वर्णनीयः, लोकेषु पञ्चविधं सामोपासीतेत्यादिषु साम-प्रतियोगिकं सादृश्यं लोकेषु विधीयते प्रथमनिर्दिष्टत्वात् सप्तम्याञ्जस्याच्च सामशब्दः सामसादृश्यपरः लोकसामशब्दयोरन्यतरस्य लक्षणाया अव-र्जनीयत्वेऽपि साम्नि लोकसादृश्ये विधित्सिते सप्तमी न घटते, इयमेवर्गि-त्यत्रापि पृथिव्या ऋगात्मकत्वं विधित्सितं निर्देशप्राथम्यात्, एव-कारान्वयस्य 'उत्तर एव वेदि'रित्यत्र व्यभिचारात्, पृथिव्येव नान्यर्ग-स्तीति वाक्यशेषश्चेत् पृथिव्या ऋगात्मकत्वं विधेयं स्यात्, ऋक् पृथि-व्येव न पृथिव्या अन्येति वाक्यशेषश्चेदृचः पृथिवीत्वविधानं स्यात्, कर्मसमृद्ध्यर्थोपासनव्यतिरिक्तेषु न कर्माङ्गेषु देवतादृष्टिनियमः, कर्मसमृद्ध्य-र्थेषु तूपासनेषु क्रत्वङ्गेषु देवतादृष्टिरिति स्थितिरिति, अत्रापि क्रत्व-ङ्गव्यतिरिक्तेषु देवतादृष्टिनियमाभावोऽनुपपन्नः, अध्याससम्पत्त्योर्निकृष्टधर्म-दृश्यविषयत्वानुपपत्तेः स्वयमेव प्रतिपादितत्वात्, अतः क्रत्वङ्गविषयेष्वत-द्विषयेषु चोपासनेषु देवताविवक्षायाः सुव्यक्तत्वे देवताया उत्कर्षादेव दृष्टिविशेषणत्वं, विवक्षाविरहे यथाश्रुताङ्गीकारश्च युक्त इति उत्कर्ष एवो-पपत्तिशब्दविवक्षितो हेतुर्भवितुमर्हति, अर्थस्वाभाव्यात् प्रकृतत्वाच्च, अतः सर्वत्रोत्कर्षस्यैव दृष्टिविशेषणत्वे प्रयोजकत्वात् क्रत्वधिकृतानुष्ठेयत्वमप्रयोजक-मित्युपपत्तिशब्दस्योत्कृष्टतोपपत्तिपरत्वमुक्तं भाष्ये, क्रत्वङ्गविषयेषु क्रत्वधि-कृतानुष्ठेयत्वमप्यभ्युच्चयहेतुः स्यात्सर्वत्राप्युत्कर्षानुगुणमेव दृष्टिविशेषणत्व-निर्णयो युक्तः।

आदित्यादिमत्यधिकरणं समाप्तम् ॥

⁂ भावप्रकाशिका ⁂

दिवदिति भावः ( पृथिव्येव ऋक् नान्यदस्तीति ) अयमर्थः— पृथिव्येव ऋगित्युक्ते नान्या ऋगिति वाक्यशेषरूपं विवरणं सम्पद्यत इति ॥ ⁂ ॥

इति आदित्यादिमत्यधिकरणम् ॥



## आसीनः सम्भवात् ॥ ७ ॥

५ अधिकरणम्

मोक्षसाधनतया वेदान्तशास्त्रैर्विहितं ज्ञानं ध्यानोपासनादिशब्दवाच्यमसकृदावृत्तं सन्ततस्मृतिरूपमित्युक्तम्, तदनुतिष्ठन्नासीनः शयानः तिष्ठन् गच्छंश्च विशेषाभावादनियमेनानुतिष्ठेत्-

इति प्राप्त उच्यते—आसीनः- इति । आसीन उपासनमनुतिष्ठेत्; कुतः? सम्भवात्- आसीनस्यैव

---

* श्रुतप्रकाशिका *

आसीनः सम्भवात् ॥ ७ ॥ अवान्तरसङ्गतिमाह ( मोक्षेति ) अनन्तराधिकरणयोः प्रासङ्गिकत्वात् परमप्रकृतेन प्रधानभूतेन ब्रह्मोपासनेन सङ्गतिरुक्ता । यद्वा दृष्ट्युपासनानामप्यासनसापेक्षत्वेऽप्यासनसमर्थनहेतोरैकाग्र्यस्याद्याधिकरणसमर्थितत्वात् तेन सङ्गतिरुक्ता । किमासीनश्चिन्तयेत्? उतासीनः शयानस्तिष्ठन् गच्छन् वेति, किं गमनादिषु ध्यानं सम्भवति न वेति, सम्भवति चेदासनानियमः, न सम्भवति चेत्तन्नियमः,— उपासनसम्भवादित्यतोऽप्येकाग्रतासम्भवादित्युचितम्, उपासनसम्भवादित्युक्तेऽपि कथमित्यपि शङ्काया एकाग्रताभिप्रायेण शमयितव्यत्वात्, 'यत्रैकाग्रता' इत्येकाग्रतायाः सान्नि-

* भावप्रकाशिका *

( आसनसमर्थनहेतोरैकाग्र्यस्येति ) अनन्तराधिकरणयोः अप्रासङ्गिकत्वेपि आसननियमसमर्थनहेतोश्चैकाग्र्यस्याऽस्मिन्नधिकरणे समर्थ्यमानत्वादनन्तराधिकरणप्रतिपादितेषु अङ्गावबद्धोपास्नेषु कर्मतन्त्रेषु ऋत्विक्कर्मसु आसनानियमसमर्थनासम्भवेनाऽव्यवहिताधिकरणासङ्गत्यभावात्परमप्रकृतेनैव सङ्गतिरित्यर्थः, अङ्गावबद्धोपासनपर्युदासेनेतरेषूपासनेषु आसननियमचिन्तनात् अनन्तराधिकरणेनापि सङ्गतिः कथञ्चित् फलतीति बोद्धव्यम् ( आद्याधिकरणे समर्थितत्वादिति ) 'तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा' इत्यैकाग्र्यस्य समर्थितत्वमभिप्रेतं द्रष्टव्यम्, परोक्तसूत्रार्थं दूषयति ( उपासनसम्भवादित्यतो-

ह्येकाग्रचित्ततासम्भवः; स्थितिगत्योः प्रयत्नसापेक्षत्वात्, शयाने च निद्रासम्भवात्। पश्चार्धधारणप्रयत्ननिवृत्तये सापाश्रये आसीनः कुर्यात् ॥ ७ ॥

ध्यानाच्च ॥ ८ ॥

"निदिध्यासितव्यः" इति ध्यानरूपत्वादुपासनस्यैकाग्रचित्तताऽवश्यम्भाविनी, ध्यानं हि विजातीयप्रत्ययान्तराव्यवहितमेकचिन्तनमित्युक्तम् ॥ ८ ॥

अचलत्वं चापेक्ष्य ॥ ९ ॥

निश्चलत्वं चापेक्ष्य पृथिव्यन्तरिक्षादिषु ध्यानवाचोयुक्तिर्दृश्यते "ध्यायतीव पृथिवी, ध्यायतीवान्तरिक्षं, ध्यायतीव द्यौः, ध्यायन्तीवापो, ध्यायन्तीव

---

* श्रुतप्रकाशिका *

हितत्वात् योग्यत्वाच्च ।— 'उपविश्यासने युञ्ज्या'दिति स्मृतिवचनस्य मनोऽनुकूलताभिप्रायतां मत्वा पूर्वपक्षी प्रत्यवतिष्ठते ।

तदवश्यंभावात्तत्परिहारः ॥ ७ ॥

ध्यानाच्च ॥ ८ ॥ ध्यानादिति भावप्रधाननिर्देश इत्यभिप्रायेणोक्तं ध्यानरूपत्वादिति, स्थितिगत्योर्विजातीयप्रत्ययसम्भवात्तदैकाग्र्यविरोधि गत्यादिकमित्यर्थः ॥

७ भावप्रकाशिका ७

पीति ) ( तदवश्यम्भावादिति ) आसनस्यावश्यम्भावादित्यर्थः, ननु' 'विविक्तदेशे तु सुखासनस्थः' इति कैवल्योपनिषदि श्रवणात् कथं पूर्वपक्षोत्थितिरिति चेत्, सूत्रकृता शङ्करादिभिश्चान्यैस्तद्गतवाक्यस्य काप्यनुपात्तत्वात् सर्वव्याख्यानाधिकरणे अस्मदीयाचार्यैरप्यनुदाहृतत्वाच्च कैवल्योपनिषन्न संप्रतिपन्नेति केचिन्मन्यन्ते। केचित्तु तस्य दहरविद्याविशेषविषयत्वेन सर्वविद्यासाधारणत्वाभावात् अनुपन्यास इति प्रतिपद्यन्ते ॥ ७ ॥

पर्वताः" इति । अतः पृथिवीपर्वतादिवदेकाग्रचित्ततया निश्चलत्वमुपासकस्यासीनस्यैव सम्भवेत् ॥ ९ ॥

स्मरन्ति च ॥ १० ॥

स्मरन्ति चासीनस्यैव ध्यानं [1]"शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् । तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः । उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये" इति ॥ १० ॥

यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

एकाग्रतातिरिक्तदेशकालविशेषाश्रवणादेकाग्रतानु-

* श्रुतप्रकाशिका *

अचलत्वं चापेक्ष्य ॥ ९ ॥ 'आप' इति स्थिरं तटाकादिजलं विवक्षितम्, निश्चलत्वमात्रसाम्यं विवक्षितम् , निश्चलत्वमैकाग्र्याद् भवति, तच्चासीनस्यैव, गत्यादौ विजातीयप्रत्ययेन चलनसम्भवादित्यर्थः ॥ ९ ॥

स्मरन्ति च ॥ १० ॥ न केवलमर्थसामर्थ्यात्, वचनादपि तत्सिद्धिरित्यर्थः ।

यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥ ( स एवोपासनस्य देशः कालश्चेति ) तिथिनक्षत्रादिनियमो नास्तीत्यर्थः, वर्णाश्रमधर्माविरुद्धकालविशेषसम्भवात् आसनसहपठितो देशादिरप्यैकाग्र्यसिद्ध्यर्थमपेक्ष्यते, किं पुनरासनमिति सूत्राभिप्रायः ।

* भावप्रकाशिका *

चेलाजिनकुशोत्तरम्— चेलं—सर्वोत्तरम्, अजिनं— कुशापेक्षया उत्तरं, कुशाभूतलापेक्षया उत्तरा इत्यर्थः ॥ ९ ॥

'समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः । मनोनुकूले नतु चक्षुःपीडने गुहानिवाताश्रयणे प्रयोजयेत्' इति वचनं, शर्कराः सूक्ष्मपाषाणाः ( आसनसहपठितदेशविशेष इति ) आसनाङ्गभूत इत्यर्थः,

१. गी० ६-११-१२ ॥

कूलो यो देशः कालश्च, स एवोपासनस्य देशः कालश्च। "समे शुचौ शर्करावह्निवालुकाविवर्जिते" इति वचनमेकाग्रतैकान्तदेशमाह, न तु देशं नियच्छति, 'मनोऽनुकूले' इति वाक्यशेषात्॥ ११॥

आसीनाधिकरणं समाप्तम्॥

आप्रयाणात्तत्रापि हि दृष्टम्॥ १२॥

६ अधिकरणम्

तदिदमपवर्गसाधनमुक्तलक्षणमुपासनमेकाह एव सम्पाद्यम्, उताऽऽप्रयाणात्प्रत्यहमनुवर्तनीयमिति विशये—एकस्मिन्नेवाहनि शास्त्रार्थस्य कृतत्वात्ता-

* श्रुतप्रकाशिका *

इतरे त्रयोऽपि यत्रैकाग्रतेति सूत्रमधिकरणान्तरमाहुः, वैदिककर्मसु देशकालादिनियमदर्शनादुदगयनादिपरिग्रह इति पूर्वपक्षं कृत्वा न नियम इति सिद्धान्तयन्ति, उक्तप्रकारेण पूर्वाधिकरणशेषत्वोपपत्तेर्नाधिकरणान्तरत्वं युक्तम्॥ ११॥

आसीनाधिकरणं समाप्तम्॥

आप्रयाणात्तत्रापि हि दृष्टम्॥ १२॥ सङ्गत्यादि स्पष्टम्, उक्तलक्ष-

ꣳ भावप्रकाशिका ꣳ

एकाग्रतातिरिक्तदेशकालविशेषाश्रवणात् एकाग्रतानुकूलासनानुकूलदेशादिविशेषस्य ध्यानापेक्षितत्वमित्युक्ते एकाग्रतापेक्षितस्य देशविशेषाद्यङ्गकस्याऽऽसननियमस्याऽपेक्षितत्वं किं वक्तव्यमित्यर्थः (उक्तप्रकारेणेति) कैमुतिकन्यायेनेति भावः॥ ꣳ॥

इति आसीनाधिकरणम्॥

भाष्ये— एकस्मिन्नेवाहनि शास्त्रार्थस्य कृतत्वादिति, इदमुपलक्षणं, ध्यानेन दर्शनसमानाकारभक्तिरूपध्याने निष्पन्ने शास्त्रार्थस्य कृतत्वान्न तत

वतैव परिसमापनीयम्-

इति प्राप्त उच्यते— आप्रयाणात्- इति । आमरणादनुवर्तनीयम् , कुतः ? तत्रापि हि दृष्टम्- उपासनोद्योगप्रभृत्याप्रयाणान्मध्ये यः कालस्तत्र सर्वत्रापि दृष्टमुपासनम् [1]"स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते" इति ॥ १२ ॥

आप्रयाणाधिकरणं समाप्तम् ।



* श्रुतप्रकाशिका *

णमुपासनं किमेकस्मिन्नहनि कर्तव्यम् ? उताप्रयाणादिति, किमेकदिनानुष्ठानेन शास्त्रार्थस्य कृतत्वं, नेति, कृतत्वं चेदेकस्मिन्नहनि कर्तव्यं, न चेदाप्रयाणात् कर्तव्यमिति ।

परे तु साक्षात्कृतात्मतत्त्वस्यानियोज्यत्वात् अनुवर्तयेदिति शासनमशक्यम् , अतोऽभ्युदयफलोपासनविषयेयं चिन्तेति, तदयुक्तं 'यावदायुषमेवं वर्तयन् ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' 'प्रायणान्तमोङ्कारमभिध्यायीत' इत्यत्रापुनरावृत्तिलक्षणमोक्षसाधनविद्यास्वेवाप्रयाणादनुवृत्तेः श्रुतत्वात्, यावच्छरीरपातं शास्त्रवश्यत्वादनियोज्य इति चायुक्तम् , अन्तिमप्रत्ययस्य मोक्षहेतुत्वदर्शनात् , तदौपयिकाहारशुद्ध्यादिसापेक्षत्वाच्च शास्त्रवश्यत्वमवर्जनीयं, न चान्तिमप्रत्ययशास्त्रममुमुक्षुविषयं, मुमुक्षुविषयतयैव प्रतिपादितत्वात्, 'प्रयाणकाले मनसा' इत्यारभ्य 'स तम्परम्पुरुषमुपैति दिव्य'मिति ह्युच्यते, न च साक्षात्कृततत्त्वस्य भेददर्शनाभावान्नान्तिमप्रत्ययापेक्षेति वाच्यं देहपोषणादिषु प्रवृत्तिदर्शनात् , तेषु मिथ्यात्वज्ञानमस्तीति चेत्— तथाऽप्यन्तिमप्रत्ययः कार्य

* भावप्रकाशिका *

ऊर्ध्वमुपासनं कार्यमित्यर्थः, 'स खल्वेवं वर्तयन्यावदायुषम्' इति श्रुतिस्तु कर्मणामेव यावज्जीवमनुष्ठेयत्वमाह , न तु विद्याया इति पूर्वपक्ष्यभिप्रायः, तत्रापि हि दृष्टमिति, यावज्जीवं कर्मानुष्ठानस्याऽपुनरावृत्तिफलकत्वमुच्यमानं विद्यां

१. छा० ८-१५-१ ॥

* श्रुतप्रकाशिका *

एव, तद्वैकल्येन ह्यादिभरतस्य मृगत्वप्राप्तिः, न च तस्य देहादिषु मिथ्यात्वधीर्नास्तीति वाच्यम्, विप्रजन्मनि पूर्वार्जितज्ञानातिरिक्तज्ञानाभावात्, अतः शास्त्रवश्यत्वमस्त्येव । किञ्च किमिदमशास्त्रवश्यत्वं नाम, किमुच्चार्यमाणमपि शास्त्रं भेददृष्ट्यभावान्न शृणोति? उत शृण्वन्नपि नार्थं प्रत्येति? उत सत्यामप्यर्थप्रतीतौ ब्राह्मण्याद्युपाधेः कर्तृत्वादेश्चाभावान्नाहं कर्मवश्य इति जानाति, अर्थे प्रतीतेऽपि किन्नानुतिष्ठति? उताननुतिष्ठतो न प्रत्यवायः? उतेष्टानिष्टप्राप्तिनिवृत्ती नेच्छतीति, न प्रथमद्वितीयौ– प्रतिबुद्धतत्त्वानां वसिष्ठादीनामप्युक्तिप्रत्युक्तिदर्शनात्, न तृतीयः– आत्मनि ब्राह्मण्याद्यभावेऽप्युपाधेरनिवृत्तत्वात्, तदभावज्ञानवतां वसिष्ठजनकभीष्मादीनामनुष्ठानदर्शनाच्च, न चतुर्थः– अज्ञस्याननुतिष्ठतोऽप्यशास्त्रवश्यत्वप्रसङ्गात्, न पञ्चमः- आदिभरतादीनां प्रत्यवायदर्शनात्, विप्रजन्मनि 'सतां मार्गमदूषय'न्निति वचनाच्च, न षष्ठः– अमुमुक्षुत्वप्रसङ्गात्, बन्धनिवृत्तीच्छा हि मुमुक्षा, मुक्तस्य न मुमुक्षेति चेन्न, क्षुदाद्युपशमाय प्रवृत्तिदर्शनात्, अतोऽनुवृत्तिविधिवश्यत्वादाप्रयाणात् परविद्याऽनुवर्तनीया ।-- अन्ये तु साक्षात्करणफलत्वादुपासनस्य तत्पर्यन्तत्वमिति पूर्वपक्षयन्ति, तदयुक्तं परमपुरुषप्रीतिफलकत्वादुपास-

* भावप्रकाशिका *

प्रति स्वरूपोपकारकत्वेनैवोपपादनीयमिति तदुक्तिसामर्थ्यात् विद्याया अपि यावज्जीवमनुष्ठेयत्वं तत्र विवक्षितमुन्नीयत इति तत्फलात् 'प्रायणान्तमभिध्यायीत' इति श्रुत्यन्तरदर्शनाच्च दर्शनसमानाकारतापत्त्यनन्तरमपि यथाश्रुतं यावज्जीवमुपासनमनुष्ठेयमिति भावः । एतेन 'प्रायणान्तमभिध्यायीत' इति श्रुत्यनुसारात् प्रायणशब्दस्य मरणे प्रसिद्धेश्च आप्रयाणादिति सूत्रपाठोऽयुक्त इति निरस्तम्, 'प्रयाणकाले मनसाऽचलेन' इत्यादि स्मृतिप्रसिद्धेः प्रयाणशब्दस्यापि समानत्वात्, ( उपाधेरनुवृत्तत्वादिति ) ब्राह्मणदेहावच्छिन्नत्वस्यैवोपाधित्वेन तस्यानुवृत्तेरित्यर्थः ( मुक्तस्य न मुमुक्षेति ) जीवन्मुक्तस्येत्यर्थः ( प्रीतेश्च यथाशास्त्रमनुष्ठानजन्यत्वादिति ) ननु 'वेदनं ध्यानविश्रान्त'मित्युक्तरीत्या छागपशुन्यायेन दर्शनसमानाकारभक्तिरूपापन्नज्ञानस्यैव शास्त्रार्थत्वाच्च दर्शनसमानाकारज्ञाननिष्पत्तिपर्यन्तमावृत्तिः भाष्यकृतापि पूर्वपक्षेऽभ्युपगन्तव्येति चेत्, सत्य-

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

७ अधिकरणम् ॥ एवं विद्यास्वरूपं विशोध्य विद्याफलं चिन्तयितुमारभते; ब्रह्मविद्याप्राप्तौ पुरुषस्योत्तरपूर्वाघयोरश्लेषविनाशौ श्रूयेते [1]"तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते", [2]"तस्यैवात्मा पदवित्तं विदित्वा न कर्मणा लिप्यते

* श्रुतप्रकाशिका *

नस्य, प्रीतेश्च यथाशास्त्रमनुष्ठानजन्यत्वात्, अतः शास्त्रार्थस्य कृतत्वादित्येव पूर्वपक्षयुक्तिर्युक्ता । अत एव सिद्धान्तेऽपि साक्षात्कारमात्रफलकत्वाभ्युपगमेनान्तिमप्रत्ययसिद्ध्यर्थमनुवर्तनीयतोक्तिरपि न युक्ता, किन्तु यथाशास्त्रमनुष्ठानसिद्धयेऽनुवर्तनीयत्वमेव वक्तव्यम् ॥ १२ ॥

आप्रयाणाधिकरणं समाप्तम् ॥



तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥ पेटिकासङ्गतिमाह (एवमिति) उपायभूतोपासनस्य उपास्यनिरतिशयप्रियत्वेन स्वयमपि प्रियरूपत्वादुपेयरूपत्वमप्यस्तीत्यत्र तन्निरूपणं कृतम्, 'दृश्यमानो महोरगैः । न विवे-

* भावप्रकाशिका *

मभ्युपगन्तव्या साक्षात्कारपर्यन्तावृत्तिः, तथापि साक्षात्कारफलकत्वेन नोपासनस्य तावत्पर्यन्तत्वम्, अपितु परमपुरुषप्रीतिसाधनतया दर्शनसमानाकारस्य चोदितत्वात्तावतैव च शास्त्रार्थस्य कृतत्वात् न तत ऊर्ध्वमुपासनमनुष्ठेयमिति पूर्वपक्षिणां युक्तमिति भावः ॥

इति आप्रयाणाधिकरणम् ॥

(पेटिकासङ्गतिरिति) साधनपेटिकाफलपेटिकयोः सङ्गतिरित्यर्थः, विद्यास्वरूपशोधनस्य फलाध्यायासङ्गतिं परिहरति (उपायभूतेति) (अश्लेषवि-

[1] छा० ४-१४-३ ॥ | [2] ॥

पापकेन" इत्युत्तराघाश्लेषः, [1]"तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" [2]"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति पूर्वाघविनाशः। एतावश्लेषविनाशौ विद्याफलभूतावुपपद्येते, नेति संशयः। किं युक्तम्? नोपपद्येते इति। कुतः [3]"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इत्यादिशास्त्रविरोधात्। अश्लेषविनाशव्यपदेशस्तु मोक्षसाधनभूतविद्याविधायिवाक्यशेषगतः कथञ्चिद्विद्यास्तुतिप्रतिपादनेनाप्युपपद्यते। न च विद्या पूर्वोत्तराघयोः प्रायश्चित्ततया विधीयते; येन प्रायश्चित्तेनाघविनाश

* श्रुतप्रकाशिका *

दात्मनो गात्रं तत्स्मृत्याऽऽह्लादसंस्थितः, 'तच्चित्तविमलाह्लादक्षीणपुण्यचयस्तदा' इत्यादिभिः प्रीतिरूपत्वं ह्यवगम्यते, (ब्रह्मविद्याप्राप्ताविति) ब्रह्मविद्याप्राप्तिः—साक्षात्कारावस्थोपासनलब्धिर्विवक्षिता, तस्मिन् दृष्टे क्षीयन्त इति हि विषयवाक्यम्, प्राप्तिः—उपक्रमः, विद्याप्राप्तिशब्दः साधारण्यात् प्रपदननिष्पत्तेरपि द्योतकः, संश्लिष्टस्य पूर्वाघस्याश्लेषायोगाद्विनाश एव, उत्तराघस्य त्वश्लेष एवेति योग्यतावशाद्विभागः, अश्लेषविनाशप्रतीतिसंशयाभावात् तयोरुपपत्त्यनुपपत्तिविषयः संशय उक्तः, किं विदुष उत्तरपूर्वाघयोरश्लेषविनाशौ सम्भवतः, नेति, किमश्लेषविनाशशास्त्रे यथाश्रुतार्थपरे, उत 'नाभुक्तं क्षीयते' इत्यनेन विरोधात् विद्यास्तुत्यर्थतया नेये, किमश्लेषविनाशशास्त्रयोरभुक्तकर्मापरिक्षयशास्त्रस्य च विरोध एव, उताविरोधः सम्भवति, विरोध एव चेद्विद्यास्तुत्यर्थत्वादश्लेषविनाशासम्भवः, अविरोधसम्भवे शास्त्रस्य यथाश्रुता-

❀ भावप्रकाशिका ❀

नाशप्रतीतिसंशयाभावादिति) अश्लेषविनाशौ प्रतीयेते नवेति संशयस्य वक्तु-

1. छा० ५-२४-३ ॥ | 2. मु० २-२-८ ॥ | 3. ब्रह्मव० प्रकृतिखण्डे. २६-७० अ० श्लो० ॥

उच्यते । विद्या हि [1]"ब्रह्मविदाप्नोति परम्" [2]"ब्रह्म वेद ब्रह्मैव भवति" इति ब्रह्मप्राप्त्युपायतया विधीयते । अतो विद्यार्थवादोऽयमघविनाशाश्लेषव्यपदेश इति ।

एवं प्राप्तेऽभिधीयते—तदधिगमे-इति । विद्याप्राप्तौ पुरुषस्य विद्यामाहात्म्यादुत्तरपूर्वाघयोरश्लेषविनाशावुपपद्येते; कुतः ? एवंविधं हि विद्यामाहात्म्यमवगम्यते "एवंविदि पापं कर्म न श्लिष्यते" "एवं ह्यस्य सर्वे पाप्मानः प्रदूयन्ते" इत्यादिव्यपदेशात् । न च "नाभुक्तं क्षीयते कर्म" इत्यनेन शास्त्रेणास्य विरोधः, भिन्नविषयत्वात् । तद्धि कर्मणां फलजननसामर्थ्यदृढिमविषयम्; एतत्तूत्पन्नाया विद्यायाः

---

* श्रुतप्रकाशिका *

र्थपरत्वादश्लेषविनाशसम्भव इति, नाभुक्तमित्यादिना पूर्वपक्षोपन्यासः, अननुभवेऽपि कर्मणां प्रायश्चित्तेन विनाशो दृश्यत इत्यत्राह (न चेति)।

(एवं प्राप्त इति) नाभुक्तमित्यादिवचनविरोधं परिहरति (न चेति) अत्र शक्तिशब्दः कर्मानुष्ठानजनितभगवन्निग्रहपरः, भिन्नविषयत्वेन वचसोर-

ꣻ भावप्रकाशिका ꣻ

मशक्यत्वादित्यर्थः, भाष्ये—शास्त्रविरोधादिति, नाभुक्तमिति शास्त्रेण कर्मणां भोगैर्नाश्यत्वावगत्या विरोधात् तयोर्विद्याफलत्वकल्पनं नोपपद्यत इत्यर्थः, भाष्ये—भिन्नविषयत्वादिति, इदमुपलक्षणम्, 'नाभुक्तं क्षीयते कर्मे'त्येतच्छास्त्रमौत्सर्गिकम्, प्रायश्चित्तादिना नाश्यत्वाभ्युपगमात्, ततश्च 'एवंविदि पापं कर्म न श्लिष्यते' इति विशेषशास्त्रविरोधे सङ्कुचितविषयमेव वक्तव्यम्, असत्यां ब्रह्मविद्यायाम् असति च प्रायश्चित्ते 'नाभुक्तं क्षीयते' इत्यर्थः, न च विद्याया मोक्षफलकत्वात् अश्लेषवचनं स्तुतिरिति मन्तव्यम्, एतस्य स्तुतित्वे अघानामानन्त्येन अनिर्मोक्षप्रसङ्गादिति द्रष्टव्यम् ॥ ꣻ ॥

---

१. तै० आन० १-१ ॥ २. मु० ३-२-९ ॥

प्राक्कृतानां पाप्मनां फलजननशक्तिविनाशसामर्थ्यम् उत्पत्स्यमानानां च फलजननशक्त्युत्पत्तिप्रबन्धकरणसामर्थ्यं च प्रतिपादयतीति द्वयोर्विषयो भिद्यते । यथाऽग्निजलयोरौष्ण्यतन्निवारणसामर्थ्यविषययोर्द्वयोः प्रमाणयोरपि विषयभेदात्प्रामाण्यम्, एवमत्रापीति न कश्चिद्विरोधः । अघस्याश्लेषकरणं— वैदिककर्मायोग्यतावासनाप्रत्यवायहेतुशक्त्युत्पत्तिप्रतिबन्धकरणम् । अघानि हि कृतानि पुरुषस्य वैदिककर्मायोग्यतां, सजातीयकर्मान्तरारम्भरुचिं, प्रत्यवायं च कुर्वन्ति । अघस्य विनाशकरणम्—उत्पन्नायास्तच्छक्तेर्विनाशकरणम् । शक्तिरपि परमपुरुषाप्रीतिरेव । तदेवं विद्या वेदितुर्वेद्यात्यर्थप्रियत्वेन स्वयमपि निरतिशयप्रिया सती वेद्यभूतपरमपुरुषाराधनस्वरूपा पूर्वकृताघसञ्चयजनितपरमपुरुषाप्रीतिं विनाशयति; सैव विद्या स्वोत्पत्त्युत्तरकालभाव्यघनिमित्तपरमपुरुषाप्रीत्युत्पत्तिं च प्रतिब-

---

* श्रुतप्रकाशिका *

विरोधे दृष्टान्तमाह ( यथेति ) अश्लेषविनाशौ विवृणोति ( अघस्येति ) उत्पत्स्यमानाया उत्पत्स्यमानस्य कर्मणः स्वकार्यकरणशक्तेः प्रतिबन्धोऽश्लेषः, उत्पन्नस्य कर्मणः उत्पन्नायाः कार्यकरणशक्तेर्विनाशकरणं विनाश इत्यर्थः । शक्तिशब्दार्थमाह ( शक्तिरपीति ) एतदुपपन्नमित्याह ( तदेवमिति ) ब्रह्मानुभवस्य स्वतःप्राप्तत्वेनासाध्यत्वात् प्रतिबन्धनिवृत्तिरूपसाध्ये प्रायश्चित्ततुल्यैव ब्रह्मविद्या, स्वर्गादेः साध्यत्वात्तत्साधनस्य कर्मणो न प्रतिबन्धानिवर्त्तकत्वम्, अत्र तु प्रतिबन्धनिवृत्तेरेव साध्यत्वा-

ध्राति । तदिदमश्लेषवचनं प्रामादिकविषयं मन्तव्यम्, "नाविरतो दुश्चरितात्" इत्यादिभिः शास्त्रैराप्रयाणादहरहरुत्पद्यमानाया उत्तरोत्तरातिशयभागिन्याः विद्यायाः दुश्चरितविरतिनिष्पाद्यत्वावगमात् ॥ १३ ॥

तदधिगमाधिकरणं समाप्तम् ॥



* श्रुतप्रकाशिका *

द्विद्यायास्तद्धेतुत्वं युक्तमित्यर्थः , तर्हि ब्रह्मविदो निषेधशास्त्रवश्यत्वं न स्यादित्यत्राह ( तदिदमिति ) । ननु ब्रह्मविद्याया अपि पापप्रायश्चित्तत्ववचनात् कृच्छ्रादीनामिव बुद्धिपूर्वपापनिवर्तकत्वमपि स्यात् , नैवं प्रामादिकाघप्रायश्चित्तत्वेनैव तद्विधानात् 'अपि चेत्पातकं किंचिद्योगी कुर्यात् प्रमादतः । योगमेव निषेवेत नान्यं यत्नं समाचरेत्' इति ह्युच्यते । ननु पूर्वं शरीरपातानन्तरं कर्मक्षय उक्तः, अत्र तूपासनारम्भे कर्मप्रहाणमुक्तम् , कथमिदमुपपद्यते ? उच्यते— उपासनारम्भसमाप्त्योर्भगवत्प्रीतिविशेषाभिप्रायत्वात् अधिकरणद्वयाविरोधः, उपासनारम्भप्रीतः परमात्मा तत्समाप्तावुपासकस्याघं क्षमिष्यामीति सङ्कल्पयति , समाप्तौ तु क्षान्तमिति सङ्कल्पयति , अतोऽधिकरणद्वयार्थ उपपन्नः ।

परेतु ज्ञानस्याविधेयत्वेन कर्मक्षयोद्देशेन विद्यायाः प्रायश्चित्तकर्मवद्विधानाभावात्तया कथं कर्मक्षय उक्त इत्याशङ्क्य— सगुणविद्यायां तावद्विधानमस्ति, निर्गुणविद्यायामपि वस्तुसामर्थ्यात् कर्मक्षयः कालत्रयेऽपि नाहं कर्ता भोक्तेत्यवगमादिति परिहरन्ति, तदयुक्तं— नाहं कर्ता नाहं भोक्तेति ज्ञाने सत्यपि चन्दनेन कण्टकेन स्वदेहं लिम्पतस्तुदतश्च पुरुषस्य लेपतोदकर्मकृतसुखदुःखान्वयदर्शनात् , साक्षात्कारवतो न सुखाद्यन्वय इति चेन्न 'व्युत्थानकाले राजेन्द्र आस्ते हेयतिरोहितः' इति

* भावप्रकाशिका *

( पूर्वं शरीरपातानन्तरं कर्मक्षय उक्त इति ) साम्पराये तर्तव्या-

* श्रुतप्रकाशिका *

योगव्युत्थाने देहसुखदुःखाद्यन्वयस्य प्रामाणिकत्वात्, निर्गुणविद्याया अप्रामाणिकत्वाच्च वन्ध्यासुतस्य व्याधिपरिहारवद् व्यर्थः प्रयासः, कर्मफलभोगानवश्यम्भावेऽपि देशकालनिमित्तापेक्षो मोक्ष इति पूर्वपक्षिणोक्ते तथा चेत् कर्मफलवदनित्यत्वप्रसङ्ग इति सिद्धान्तिना परिहारश्चानुपपन्नः, निवर्तकज्ञानोदयानन्तरभाविन्या अविद्यानिवृत्तेरनित्यत्वप्रसङ्गात्, प्रागप्यविद्यानिवृत्तिरस्ति चेत्– शास्त्रवैयर्थ्यम् ।— अपरे तु नाभुक्तमिति स्मरणमविद्वद्विषयमित्याहुः, तद्भाष्योक्तविषयव्यवस्थाफलम्, विद्यायाः कर्मणां फलोत्पादनशक्तिविनाशसामर्थ्ये ह्युक्ते कर्मणां फलजननसामर्थ्यं विद्यारहितेषु भवतीति ज्ञायते, अविद्वद्विषयत्वमूलेऽभिहिते तद्विषयत्वं सिध्यतीति भाष्ये मूलयुक्तिरुक्ता ।— अन्ये त्वाहुः— अघफलं द्विविधं—लेपो विपाकश्चेति, तत्र लेपः—अप्राशस्त्यं, स्नानाद्यपनेयं, विपाकः— नरकपातादिः, सुकृतस्यापि लेपः— महत्त्वपङ्क्तिपावनत्वशापानुग्रहसामर्थ्यकाम्यकर्मरुचिरूपः, विपाकः—स्वर्गादिः, तत्र महत्त्वं नाम 'सवनगतौ क्षत्रियवैश्यौ हत्वा ब्रह्महा भवति' 'अग्निर्वै दीक्षितस्तस्मादेनं नोपस्पृशेत्' इत्यवगम्यते, तत्र लेपः स्वसामर्थ्यप्रसूतं फलम्, विपाकः नैयोगिकफलम्, एवं ज्ञानस्यापि स्वसामर्थ्यप्रभावितं नैयोगिकं चेति फलं द्विविधं, तत्र पुरुषशुद्धिलक्षणेन माहात्म्यशब्दवाच्येन कल्मषविरोधिना पूर्वकल्मषविनाशः, उत्तराघानामप्रायत्यकरणरूपसंश्लेषविघातश्च, ज्ञानस्य नैयोगिकफलं तु देहपातेऽन्तिमप्रत्ययसापेक्षं सुकृतदुष्कृतप्रहाणं, ब्रह्मभावाविष्करणं च, उत्तरेषामघानामश्लेष एव न विनाशः, अत एव 'सुकृतदुष्कृते धूनुते तस्य प्रिया

* भावप्रकाशिका *

भावादित्यत्रेति शेषः, ( कर्मफलभोगानवश्यम्भावेपीति ) कर्मणां फलभोगावश्यम्भावेपि उपभोगेन सर्वकर्मक्षये ब्रह्मज्ञानं मोक्षमुत्पादयतीति पूर्वपक्षिणोक्त इत्यर्थः, ( तथा चेदिति ) देशकालादिसापेक्ष इत्यर्थः ( अविद्यानिवृत्तेरनित्यत्वप्रसङ्गादिति ) ननु ज्ञानव्यतिरिक्तदेशकालाद्यपेक्षत्वान्नानित्यत्वप्रसङ्ग इति चेन्न, ज्ञानव्यतिरिक्तासम्भावनाविपरीतभावनारूपप्रतिबन्धकाभावसापेक्षत्वेन अविद्यानिवृत्तेरनित्यत्वतादवस्थ्यात् । ( अन्ये त्वित्यादि ) ( अत एव सुकृतदुष्कृते इत्यादि ) उत्तराघविनाशे विधूननादेरसम्भवा-

* श्रुतप्रकाशिका *

ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृत'मिति धूननवचनमप्रियज्ञात्युपायनवचनं चोत्तराघविषयमिति, अत्रोच्यते— यद्यपि कर्मणामधिकारानधिकारसजातीयकर्मान्तररुचिस्वर्गनरकादिफलविभागोऽस्ति तथाऽपि सामर्थ्यप्रभावितनैयोगिकफलविभागो नोपपन्नः, भगवत्प्रीत्यप्रीतिव्यतिरेकेण सामर्थ्याभावान्नियोगाभावाच्च, तद्व्यतिरेकेण सामर्थ्यनियोगाभ्युपगमेऽप्यश्लेषवचनस्य लेपविघातमात्रविषयत्वं धूननोपायनवचनयोरुत्तराघमात्रविषयत्वं चानुपपन्नम्, तथाहि— उत्तराघस्य विपाकहेतुशक्तिरुत्पन्ना न वा, न चेल्लेपविघातोऽश्लेष इति विशेषोपादानवैयर्थ्यं स्यात्, अस्मदीयपक्षः परिगृहीतश्च भवेत्, उत्पत्तिपक्षे– क्रियोत्तीर्णा कर्मशक्तिरात्मधर्मभूता परमात्मप्रीत्यप्रीतिरूपा वा स्यात्, उभयथाप्यश्लेषवचनमनुपपन्नं स्यात्, आत्मधर्मत्वे तत्समवेतत्वात् परमात्मप्रीत्यप्रीत्योश्चेतनविषयत्वाच्च, विपाकशक्तेः श्लेषस्त्विष्टः, लेपविघात एवाश्लेषरूपतयाऽभिमत इति चेत्– तर्ह्यश्लेषवचनसङ्कोचः स्यात्, 'सुकृतदुष्कृते धूनुते' इति धूननश्रवणबलादवर्जनीयः सङ्कोच इति चेत्– तर्ह्यनुत्पन्नस्य धूननायोगाद्विपाकशक्त्युत्पत्तिकल्पनगौरवं च स्यात्, न चानुत्पन्नस्य धूननायोगात्तदुत्पत्तिः कल्पनीया भवेत्, उत्पन्नस्याप्यदृष्टस्य पांसुभसितकरीषादिवत् संयोगविभागार्हद्रव्यत्वाभावाद्धूननानुपपत्तेस्तत्कल्पनवैयर्थ्यात् धूननशब्देन विनाशो लक्ष्यत इति चेत्– न, विनष्टस्य प्रियाप्रियज्ञातिपरिग्रहायोगात् पुरुषगतादृष्टविनाशेऽपि प्रियाप्रियेषु नष्टसजातीयादृष्टान्तरोत्पत्तिरेव तत्संक्रमणमिति चेत्, कर्तृगतादृष्टविनाशस्य पुरुषान्तरगतादृष्टान्तरोत्पत्तेश्च किं कर्मस्वभाव एव कारणं, तर्हि सर्वेषां सर्वाणि कर्माणि नश्येयुः, पुरुषान्तरेष्वदृष्टं जनयेयुश्च, ततश्च

❀ भावप्रकाशिका ❀

दित्यर्थः । ( उत्तराघस्येति ) अभक्ष्यभक्षणादिक्रियारूपकर्मण इत्यर्थः । ननु क्रियाजन्यादृष्टरूपकर्मण इति मन्तव्यम्, तदतिरिक्तशक्तेरभावात्, ( विपाकहेत्विति ) विपाको नरकादिरुच्यते, ( विशेषोपादानवैयर्थ्यं स्यादिति ) विपाकविघातस्याभ्युपेतत्वेन लेपांशविघात इति वचनस्यायुक्तत्वादिति भावः, शङ्कते ( विपाकशक्तेः श्लेषस्त्विष्ट इति ) ( अश्लेषवचनसङ्कोचः स्यादिति ) ननु कथमत्राश्लेषवचनसङ्कोचः, ब्रह्मविद्याश्लेषो हि तत्र कार्यानार्जकत्वम्,

* श्रुतप्रकाशिका *

कर्तॄणां भोगाभावोऽन्येषां भोगनियमश्च स्यात्, अभुक्तफलस्याकृतप्रायश्चित्तस्य कर्मणोऽयं स्वभाव इति चेत्, तर्हि द्वादशवार्षिकादिषु केनचिदननुष्ठितेषु तद्द्विषतां ब्रह्महत्यादिदोषान्वयेन संव्यवहारादिषु बहिष्कार्यता स्यात्, यद्युच्येत नात्र कर्मस्वभावः कारणम्, अपि तु परविद्यामाहात्म्यमेव, तत्तु विद्वद्गतं पूर्वाघं विनाश्य तदप्रियेषु तादृशमघं जनयतीति, तर्ह्युत्तराघप्रतिबन्धं प्रियाप्रियेषु तादृशादृष्टं च विद्या करोतीत्यभ्युपगमो वरं, तथा सति उत्पत्तिकल्पनगौरवाभावात्, एवं च धूननोपायनयोरुत्तराघमात्रविषयत्वनिर्बन्धो निर्निबन्धनः स्यात्, विदुषः पूर्वाघविनाशने ज्ञातिषु तादृशाघजनने च विद्यासामर्थ्यस्योपपन्नत्वात्, एवं च सति 'सुकृतदुष्कृते धूनुते' इत्यत्र सुकृतदुष्कृतशब्दयोरसङ्कोचः स्यात्, अन्यथा सङ्कोचो निर्निबन्धनः स्यात्, नष्टस्य कर्मणोऽन्यत्र संक्रमणायोगरूपस्य सङ्कोचहेतोः परिहृतत्वात्, पुरुषान्तरे तादृगदृष्टान्तरोत्पत्तिरुपायनमिति त्वयैव ह्युक्तम्। इयान्विशेषः— एकस्मिन् पक्षेऽश्लेषवचनस्य धूननोपायनवचनयोश्च सङ्कोचो विपाकशक्त्युत्पत्तिकल्पनगौरवं च, पक्षान्तरे तु सर्वश्रुत्यसङ्कोचो लाघवं चेति।— अत्रायमर्थोऽनुसन्धेयः—विदुषः कर्मणां चतस्रोऽवस्थाः श्रुताः-विनाशोऽश्लेषो धूननमुपायनं चेति, क्रियामात्रविनाशस्य लोकसिद्धत्वात् क्रियाया अश्लेषधूननसंक्रमणानामयोग्यत्वाच्चावस्थाचतुष्टयं क्रियोत्तीर्णशक्तिविषयं निर्णीतम्, सा च शक्तिरिष्टानिष्टफलदित्सालक्षणपरमात्मप्रीत्यप्रीतिरूपा, अन्यथा श्रुतहानाश्रुतकल्पनप्रसङ्गादिति प्रागेवोपपादितम्, तत्र विनाशाश्लेषवचनयोः पूर्वोत्तराघविषयत्ववदुपायनवचनस्य पुरुषान्तरे तत्समानादृष्टोत्पत्तिविषयत्वं चार्थसामर्थ्यात् सर्वैरभ्युपगन्तव्यम्। अश्लेषवचनं च कृत्स्नोत्तराघविषयम्, अपा-

ॐ भावप्रकाशिका ॐ

ततश्चोत्पन्नस्याप्यस्य ब्रह्मविदि कार्यानार्जकत्वात् अश्लेषवचनं सुश्लिष्टम्, नह्यश्लेषवचनस्याऽनुत्पत्तिवचनत्वं पुष्करपलाशजलदृष्टान्तविरोधादिति चेत्, उच्यते नहि निषिद्धकर्मजन्यपापस्याश्लेषं श्रुतिर्ब्रवीति, येनायं उपालम्भः स्यात्, किन्त्वेवंविदि पापं कर्म न श्लिष्यत इति निषिद्धकर्मणोऽभक्ष्यभक्षणादेरेवाश्लेषं ब्रवीति, तस्य च कर्मणो ब्रह्मण्यश्लिष्टत्वं हि ब्रह्मविदि पापाना-

* श्रुतप्रकाशिका *

ङ्कोचस्य स्वतःप्राप्तत्वात्, अश्लेषश्च प्रतिबद्धोदयत्वम् उत्पत्तिकल्पनगौरवाभावात् तत्कल्पनेऽपि धूननसंक्रमणायोगात्, एवं च विद्यायाः पूर्वाघविनाशने उत्तराघप्रतिबन्धे प्रियाप्रियेषु सजातीयादृष्टजनने सामर्थ्यं च सिद्धम् । एवं विद्याया विनष्टप्रतिबद्धादृष्टसजातीयादृष्टजननसामर्थ्यादुपायनश्रुतिश्च नोत्तराघमात्रविषया, अपि तु पूर्वोत्तराघविषया स्यात्, तथा चोपायनवाक्यस्थसुकृतदुष्कृतशब्दासङ्कोचश्च भवेत्, तत्र विनाशः— भगवतः पूर्वोत्पन्नकर्मफलदित्सानिवृत्तिः, अश्लेषश्च— उत्तरकर्मफलदित्साप्रतिबन्धः, तौ च यद्यर्थोपहितौ, यद्यय प्रक्रान्तमुपासनं समापयेत् पूर्वोत्तरयोः कर्मणोः फलं न दास्यामीति सङ्कल्परूपौ हि तौ, समाप्ते तु कर्मफलं नैव दास्यामीति सङ्कल्पो विधूननश्रुत्यभिप्रेतः, लोके सेवारम्भसमापनयोः प्रीतितारतम्यदर्शनात्, शास्त्रेषु तीर्थसेवाद्युपक्रमसमापनयोः फलतारतम्यदर्शनाच्च । लोके राजादीनामिव परमात्मनोऽपि स्वसेवकविषयप्रीत्यतिशयेन तत्प्रियाप्रियजनेषु तदनुरूपेष्टानिष्टफलदित्सा च भवति, एवं पूर्वोत्तराघविनाशप्रतिबन्धधूननोपायनहेतुर्विद्यामाहात्म्यमिति ॥ १३ ॥

तदधिगमाधिकरणं समाप्तम् ॥

* भावप्रकाशिका *

जेकत्वमेव, नतु पापोत्पत्तिमभ्युपगम्य ब्रह्मविदि लेपमात्रानार्जकत्वमिति सङ्कोच आश्रयणीय इत्यभिप्रायात्, नन्वेवं 'क्षीयन्ते चास्य कर्माणि' इत्यादिश्रुत्यनुसारेण पूर्वाघविनाशेऽप्यभक्ष्यभक्षणादिनिषिद्धकर्मविनाश एव स्यादिति चेन्न, तेषां कर्मणां क्षणिकतया तदानीमेव नष्टत्वेन तत्राघविनाशश्रुतेः निषिद्धकर्मजन्यपापविनाशपरत्वेन 'पापं कर्म न श्लिष्यते' इत्यादौ निषिद्धकरणस्यैव तन्निष्ठकार्यानार्जकत्वरूपाश्लेषस्य वक्तव्यत्वात्, नचावस्थाचतुष्टयमुत्तीर्णशक्तिविषयमित्युत्तरग्रन्थविरोध इति वाच्यं, तस्याप्यत्रैव तात्पर्यात् ॥ * ॥

इति तदधिगमाधिकरणम् ॥

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

८ अधिकरणम् उत्तरपूर्वाघयोर्विद्ययाऽश्लेषविनाशावुक्तौ, इतरस्य—पुण्यस्यापि, एवम्—उक्तेन न्यायेनाश्लेषविनाशौ विद्यया स्याताम्, विद्याफलविरोधित्वसामान्याद्व्यपदेशाच्च। भवति च व्यपदेशः—उभे सुकृतदुष्कृते निर्दिश्य

---

* श्रुतप्रकाशिका *

इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥ अवान्तरसङ्गतिः स्फुटा, इतरस्याप्यसंश्लेष इति प्रतिज्ञानिर्देशः, एवमिति न्यायातिदेशः, उत्तरपूर्वसुकृतयोरश्लेषविनाशौ किं सम्भवतः, नेति, किं 'पापं कर्म न श्लिष्यते' 'सर्वे पाप्मानः प्रदूयन्ते' इति वाक्यद्वयं सुकृतदुष्कृताश्लेषविनाशपरम्? उत दुष्कृतमात्राश्लेषविनाशपरं, किमत्र पापकर्मशब्दो निषिद्धपरः, उत विद्याविरोधिफलकर्मपरः? 'सर्वे पाप्मानः' इति वाक्यं किं पापशब्दस्य विद्याविरोधिफलकर्मपरतामवगमयति? नेति, 'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्त्तन्ते' इति हि श्रूयते, न चेत्— पापशब्दस्य निषिद्धमात्रपरतया वाक्ययोर्दुष्कृतमात्राश्लेषविनाशपरत्वान्न सुकृताश्लेषविनाशसम्भवः, अवगमयति चेत् पापशब्दस्य विद्याविरोधिफलकर्मपरत्वेन वाक्ययोः सुकृतदुष्कृताश्लेषविनाशपरत्वात् पूर्वोत्तरसुकृतयोरश्लेषविनाशसंभव इति,। एवंशब्दं व्याचष्टे ( उक्तेनेति ) उक्तन्यायं विवृणोति ( विद्याफलेति ) एवंशब्देन पूर्वसूत्रानुकृष्टव्यपदेशशब्दार्थमुपपादयति ( भवति चेति )

छ भावप्रकाशिका छ

( एवमिति न्यायातिदेश इति ) न त्वसंश्लेषातिदेशः तस्य प्रतिज्ञयैव निर्दिष्टत्वादिति भावः। 'सर्वे पाप्मान' इत्यत्र पाप्मशब्दस्य सुकृतसाधारण्यकोटिबीजं प्रकटयति ( न सुकृतं न दुष्कृतमिति ) सुकृतदुष्कृते निर्दिश्य सर्वे पाप्मान इति निर्देशः पाप्मशब्दस्य सुकृतसाधारण्यमवगमयति नेति पर्यवसितोऽर्थः ( उक्तं न्यायमिति ) पूर्वाधिकरणाभिप्रेतन्यायमित्यर्थः। ( पूर्वसूत्रानुकृष्टव्यपदेशशब्दार्थमिति ) व्यपदेशं प्रदर्श-

"सर्वे पाप्मानोऽतो निवर्त्तन्ते" इति, "तत्सुकृतदुष्कृते धूनुते" इति च मुमुक्षोरनिष्टफलत्वात्सुकृतस्यापि पाप्मशब्देन व्यपदेशः। सुकृतस्यापि शास्त्रीयत्वात्तत्फलस्य केषांचिदिष्टत्वदर्शनाच्च विद्याया अविरोधशङ्कां निवर्तयितुमतिदेशः । ननु विदुषोऽपि सेतिकर्तव्यताकोपासननिर्वृत्तये वृष्ट्यन्नादिफलानीष्टान्येव; कथं तेषां विरोधाद्विनाश उच्यते; तत्राह—पाते तु—इति। शरीरपाते तु तेषां विनाशः, शरीरपातादूर्ध्वं तु विद्यानुगुणदृष्टफलानि सुकृतानि नश्यन्तीत्यर्थः ॥ १४ ॥

इतराधिकरणं समाप्तम् ॥



* श्रुतप्रकाशिका *

पुण्यस्यापि पाप्मशब्दवाच्यत्वे श्रुतिं दर्शयति (उभे इति) उभयोः पृथगभिधाने श्रुतिमाह (तत्सुकृतेति) अतिदेशस्याधिकाशङ्कामाह—(सुकृतस्येति) सूत्रखण्डान्तरस्य शङ्कामाह (नन्विति) विद्यानुगुणदृष्टफलानि तिष्ठन्ति चेत्तानि शरीरपातादूर्ध्वं नश्यन्तीत्यर्थः ।

परे चापरे च 'पाते तु' इति सूत्रखण्डमेवं व्याचक्षते— अश्लेषविनाशसिद्धेर्देहपाते मुक्तिरवश्यंभाविनी, तुशब्दोऽवधारण इति, तन्निष्प्रयो-

* भावप्रकाशिका *

यतीत्यर्थः, तत्र एवंशब्देन पूर्वसूत्रे आभिप्रायिकफलविरोधित्वन्यायात् कण्ठोक्तस्तद्व्यपदेशोऽप्यतिदिष्टः, तद्व्यपदेशो हि तस्य फलत्वव्यपदेशः, तत्र ह्यत्रासत्वशङ्का प्राप्ता 'एवंविदि पापं कर्म न श्लिष्यते तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति पापानामेव

* श्रुतप्रकाशिका *

जनं– सर्वबन्धकविरहे मोक्षस्य वक्ष्यमाणप्रकारेण निःसंशयत्वात् सर्वप्रारब्धकर्मनिपक्षये सति देहपाते मोक्षस्योपरितनाधिकरणविरुद्धत्वाच्च ।— अन्ये त्वनेनाधिकरणेनाश्लेषमात्रातिदेशः, न विनाशातिदेश इति वदन्ति, तदयुक्तं विनाशश्रवणरूपहेतोरसिद्धत्वात्, पाप्मशब्दस्यैवोभयवाचित्वोपपादनाच्च, देहान्ते ज्ञातिभिः परिग्रहादविनाश इति चेन्न, द्विषद्भिः परिग्रहेण दुष्कृतस्याप्यविनाशप्रसङ्गात्, सुकृतस्याश्लेषो नाम– काम्यकर्मरुच्यनुत्पत्तिः, पङ्क्तिपावनत्वादिलक्षणमाहात्म्यस्य तु विद्यया विरोधाभावान्नाश्लेषः, एवं स्वसामर्थ्यप्रभावितं ज्ञानफलं निरूपितं, कदा तर्हि नैयोगिकफलं सुकृतदुष्कृतप्रहाणमित्यपेक्षायामाह पाते त्विति– देहपात एवेत्यर्थ इत्याहुः, पात इत्यस्य व्याख्यानमनुपपन्नं निष्फलत्वादेव, तच्च 'साम्पराय' इत्यत्र प्रागुक्तत्वात्, अपेक्षिताकथनं च भाष्योक्तशङ्कायाः परिहरणीयत्वात्, अतो यथाभाष्यमेवार्थः ॥ १४ ॥

इतराधिकरणं समाप्तम् ॥

---

* भावप्रकाशिका *

श्रवणात् एवंशब्दोनुकृष्टस्तद्व्यपदेशो न सम्भवतीति, अतस्तच्छङ्कां व्युदसितुं एवंशब्दानुकृष्टव्यपदेशसिध्यर्थमुभे सुकृतदुष्कृते निर्दिश्य सर्वे पाप्मानोऽतो निवर्तन्त इति साधारण्येन सुकृतस्यापि मुमुक्षवनाविष्करणात् 'सुकृतदुष्कृते धूनुते' इति वाक्येन अनिष्टत्वाविष्करणाच्च, अनिष्टफलत्वरूपप्रकृतिनिमित्तसत्वात् 'सर्वे पाप्मानः प्रदूयन्ते' इति सुकृताश्लेषविनाशस्यापि विद्यमानफलत्वव्यपदेशोस्तीति प्रदर्शयतीति भावः । भाष्ये– सुकृतस्यापि शास्त्रीयत्वादिति, ज्योतिष्टोमदर्शपूर्णमासादीनां शास्त्रीयत्वेन परस्परानुपमर्दकत्वादिति भावः, नच तत्सुकृतदुष्कृते धूनुते इति विशिष्य सुकृतस्यापि विनाशश्रवणात् कथमभ्यधिकाशङ्केति वाच्यं, तस्य शरीरपातानन्तरभाविसुकृतनाशविषयत्वादिति भावः ॥ * ॥

इतीतराधिकरणम् ॥

# अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

९ अधिकरणम्

ब्रह्मविद्योत्पत्तेः पूर्वोत्तरभाविनोः सुकृतदुष्कृतयोरश्लेषविनाशावुक्तौ; ततः पूर्वभाविनोः सुकृतदुष्कृतयोः किमविशेषेण विनाशः? उतानारब्धकार्ययोरेवेति विशये [१]"सर्वे पाप्मानः प्रदूयन्ते" इति विद्याफलस्याविशेषश्रवणाद्विद्योत्पत्त्युत्तरकालभाविन्याश्च शरीरस्थितेः कुलालचक्रभ्रमणादिवत्संस्कारवशादप्युपपत्तेरविशेषेण—

* श्रुतप्रकाशिका *

अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥ अवान्तरसङ्गतिमाह (ब्रह्मविद्योत्पत्तेरिति) ततः पूर्वभाविनोः—ब्रह्मविद्योत्पत्तिपूर्वभाविनोरित्यर्थः किं पूर्वे सुकृतदुष्कृते अविशेषेण नश्यतः? उतानारब्धफले, किं 'सर्वे पाप्मानः' इति सर्वशब्दस्वारस्यानुरोधो न्याय्यः? उत 'तस्य ताव'दिति विलम्बश्रुत्यनुरोधः, किं कुलालचक्रभ्रमणवत् कर्मविनाशे संस्कारेण शरीरधारणमुपपद्यते? नेति, किमीश्वरप्रीत्यप्रीतिव्यतिरेकेण संस्कारकल्पनायां प्रमाणमस्ति? नेति, अस्ति चेत्—तेन शरीरधारणोपपत्तेः सर्वशब्दस्वारस्यानुरोधस्य न्याय्यत्वादविशेषेण नश्यतः, न चेत्संस्कारेण शरीरधारणायोगा-

* भावप्रकाशिका *

भाष्ये—उतानारब्धकार्ययोरेवेति, विद्यायोनिशरीरानारम्भकयोरित्यर्थः, भाष्ये— विद्याफलस्याविशेषश्रवणादिति, 'तस्य ताव' दिति श्रुतेः एतावन्मे चिरं यावद्भुञ्जानस्येत्यत्रैव क्षेपीयस्ताप्रतिपादनपरत्वेनावधिपरत्वाभावात्, इतरथा—अवधेश्चिरत्वस्य च प्रतिपादने वाक्यभेदप्रसङ्गादिति भावः, (यावन्न विमोक्ष्ये अथ संपत्स्ये' इति, यावत्प्रारब्धकर्मणा न विमोक्ष्यते अथ संपत्स्यत इत्यर्थः, पुरुषव्यत्ययश्छान्दसः, नचावधिपरत्वे चिरत्वावधित्वरूपार्थद्वयप्रतिपादनेन वाक्यभेदप्रसङ्ग इत्युक्तमिति वाच्यं. वाक्यान्तरसिद्धचिरत्वानुवादेनाव-

१. छा० ६-१४-२ ॥

इति प्राप्ते उच्यते- अनारब्धकार्ये एव तु पूर्वे- इति। विद्योत्पत्तेः पूर्वे सुकृतदुष्कृते अनारब्धकार्ये- अप्रवृत्तफले एव विद्यया विनश्यतः, कुतस्तदवधेः-[1] "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति शरीरपातविलम्बावधिश्रुतेः। न च पुण्यापुण्यकर्मजन्यभगवत्प्रीत्यप्रीतिव्यतिरेकेण शरीरस्थितिहेतुभूतसंस्कारसद्भावे प्रमाणमस्ति॥ १५॥

अनारब्धकार्याधिकरणं समाप्तम् ॥



* श्रुतप्रकाशिका *

द्विलम्बश्रुत्यनुरोधेनानारब्धफले एव नश्यत इति सिध्यति।

सर्वमिथ्यात्ववादिनामिदमधिकरणं विरुद्धं- प्रारब्धकर्मणोऽपि मिथ्यात्वेन बाधात् स्थित्यनुपपत्तेः, द्वितीयचन्द्रज्ञानवैषम्यं प्रागेवोक्तं, प्रवृत्तफलस्य कर्मणः कुलालचक्रवेगवदन्तराले प्रतिबन्धासम्भव इत्यपि दुरुक्तं, स्वाप्नकुलालचक्रभ्रमणवद् द्वितीयक्षणे प्रबोधे सति तद्वेगस्य बाधितत्वदर्शनात्, संस्काराद्देहधारणं चेत्-क्षीणायुषामविदुषामपि देहधारणं स्यात् ॥ १५ ॥

अनारब्धकार्याधिकरणं समाप्तम् ॥



* भावप्रकाशिका *

धिमात्रप्रतिपादनपरत्वादस्य वाक्यस्येत्यदोषः, ( मिथ्यात्वेन बाधादिति ) नच यतो ज्ञानमज्ञानस्यैव निवर्तकमिति ज्ञानस्य अज्ञानमात्रनिवर्तकत्वेन ज्ञानकार्यभूतप्रारब्धकर्मानिवर्तकत्वात् तस्य कर्मणः स्वोत्पादनभूताविद्यानिवृत्तिप्रतिबन्धकत्वमस्तीति वाच्यम्, अज्ञानवत्तत्कार्यस्यापि निवर्त्यत्वस्य वक्तव्यत्वात्, इतरथा ज्ञाननिवर्त्यत्वरूपमिथ्यात्वस्याऽभावप्रसङ्ग इति भावः ॥ * ॥

इति अनारब्धकार्याधिकरणम् ॥



1. छा० ६-१४-२ ॥

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

१० अधिकरणम्

'इतरस्याऽप्येवमसंश्लेषः' इति विद्याबलात्सुकृतस्याप्यसंश्लेष उक्तः, अग्निहोत्रादीनां नित्यनैमित्तिकानां स्वाश्रमधर्माणामपि सुकृतत्वसामान्येन तत्फलस्याश्लेषादनिच्छतोऽननुष्ठाने प्राप्ते उच्यते— अग्निहोत्रादि तु— इति । तुशब्दः सुकृतान्तरेभ्यो विशेषणार्थः, अग्हिोत्राद्याश्रमधर्माः फला-

---

* श्रुतप्रकाशिका *

अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥ अवान्तरसङ्गतिमाह ( इतरस्यापीति ) ऊर्ध्वरेतस्स्वग्निहोत्रादिनैरपेक्ष्यदर्शनादनूर्ध्वरेतसामपि तन्नैरपेक्ष्यशङ्कायां 'सर्वापेक्षा' इति सूत्रं, यज्ञादेराश्रमधर्मत्वे विद्याङ्गत्वे च नित्यानित्यसंयोगविरोधपरिहारार्थं 'सहकारित्वेन च' इति सूत्रं, सुकृतफलाश्लेषादननुष्ठेयत्वशङ्कापरिहारार्थम् 'अग्निहोत्रादि' इति सूत्रम् । एवं सूत्राणामपौनरुक्त्यावहेषु शङ्काविशेषेषु सूत्राणामुत्थानात् समुच्चयवादो निरवकाशः, किमग्निहोत्राद्याश्रमधर्मो विदुषः कार्याश्लेषादननुष्ठेयः ? उतानुष्ठेयः ? किमश्लेषवचनं सर्वसुकृतविषयम् ? उत विद्याङ्गाश्रमधर्मव्यतिरिक्तसुकृतविषयं ? किं विद्वत्संबन्ध्याश्रमधर्मस्यापि फलं विद्याव्यतिरिक्तम् ? उत विद्यैवेति, व्यतिरिक्तं चेत्— अश्लेषवचनस्य सर्वसुकृतविषयतया कार्याश्लेषादननुष्ठेयता,

* भावप्रकाशिका *

भाष्ये— अनिच्छतोऽननुष्ठाने प्राप्त इति, निष्फलकर्मणि चिकीर्षाया अभावादित्यर्थः, यद्यग्निहोत्रादीनां फलवत्त्वं तर्हि अश्लेषो नोपपद्यत इति भावः, यज्ञेनेत्यादिश्रुतेः, दर्शनसमानाकारविद्योदयात्प्राक् तादर्थ्येन विधानार्थतयाप्युपपत्तेर्विद्योत्पत्त्यनन्तरं यावज्जीवमग्निहोत्रादेरनुष्ठेयत्वे प्रमाणाभावादित्यर्थः ( समुच्चयवादो निरवकाश इति ) सर्वापेक्षेति सूत्रं विद्याङ्गत्वपरम्,

श्लेषासम्भवादनुष्ठेया एव, तदसम्भवश्च तत्कार्यार्थत्वात्तेषाम्, विद्याख्यकार्यायैव हि विदुषोऽग्निहोत्राद्यनुष्ठानम्, कथमिदमवगम्यते? तद्दर्शनात्, दृश्यते हि "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इत्यादिनाऽग्निहोत्रादीनां विद्यासाधनत्वं विद्यायाश्चाप्रयाणादभ्यासाधेयातिशयाया अहरहरुत्पाद्यत्वात्तदुत्पत्त्यर्थमाश्रमकर्माप्यहरहरनुष्ठेयमेव, अन्यथाऽऽश्रमकर्मलोपे दूषितान्तःकरणस्य विद्योत्पत्तिरेव न स्यात् ॥ १६ ॥

यदि अग्निहोत्रादिसाधुकृत्या विद्योत्पत्त्यर्थाः, विद्योत्पत्तेः प्राचीनं च सुकृतं "यावत्सम्पातमुषित्वा" "प्राप्यान्तं कर्मणः" इत्यनुभवेन विनष्टम्; भुक्तशिष्टं च प्रारब्धफलं "सुहृदः साधुकृत्याम्" इत्यस्य को विषयः? तत्राह—

* श्रुतप्रकाशिका *

यदा विद्यैव फलं तदा चाश्लेषवचनस्य विद्वत्सम्बन्ध्याश्रमधर्मव्यतिरिक्तविषयत्वेन कार्याश्लेषाभावादनुष्ठेयता, पूर्वपक्षमाह ( इतरस्येत्यादिना )

राद्धान्तस्तु ( अग्निहोत्रादि त्वित्यादि ) तर्हि सकृदनुष्ठेयमित्यत्राह ( विद्यायाश्चेति ) ॥ १६ ॥

उत्तरसूत्रस्य शङ्कामाह ( यद्यग्निहोत्रादीति ) ( सुहृदः साधुकृत्यामित्यस्य को विषय इति ) उत्तरपापकृत्यायाः प्रागभुक्तफलत्वात् प्रारब्धफलत्वा-

७ भावप्रकाशिका ७

सहकारित्वेनचेति सूत्रं फलविरोधिनिरसनेन समुच्चयपरमिति यादवमतानवकाश इत्यर्थः ॥ ७ ॥

अतोऽन्यापि ह्येकेषामुभयोः ॥१७॥

अतोऽग्निहोत्रादिसाधुकृत्याया विद्योत्पत्त्यर्थाया अन्यापि विद्याधिगमात् पूर्वोत्तरयोरुभयोरपि पुण्यकर्मणोः प्रबलकर्मप्रतिबद्धफला साधुकृत्याऽनन्ता सम्भवत्येव, तद्विषयमिदमेकेषां शाखिनां वचनम् "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्या" मिति। विद्ययाऽश्लेषविनाशश्रुतिश्च तद्विषया ॥ १७॥

अनुष्ठितस्यापि कर्मणः फलप्रतिबन्धसम्भवं पूर्वोक्तं स्मारयति—

---

* श्रुतप्रकाशिका *

भावात् विद्यार्थत्वाभावाच्च 'द्विषन्तः पापकृत्या'मित्यस्योत्तरार्धं विषयः स्यादिति मत्वा सुहृदः साधुकृत्यामित्यस्य को विषय इत्युक्तम् ।

अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥ भुक्तं, भुज्यमानं, भोक्ष्यमाणं, प्रतिबद्धफलं चेति विविधं कर्म, तत्र पूर्वकृतं पश्चाच्च वृष्ट्यन्नादिहेतोः कृतं प्रतिबद्धफलं कर्मास्ति, तद्विषया 'सुहृदः साधुकृत्या'मिति श्रुतिरश्लेषविनाशश्रुतिश्चेत्यर्थः ॥ १७ ॥

अनन्तरसूत्रसङ्गतिमाह (अनुष्ठितस्यापीति) (पूर्वोक्तं स्मारयतीति) 'पृथगृध्यप्रतिबन्धः फलम्' इति सूत्रेण कण्ठोक्तमत्र स्मारयतीत्यर्थः ।

* भावप्रकाशिका *

(उत्तरार्धं विषयः स्यादिति) इदमुपलक्षणं—प्रारब्धव्यतिरिक्तपूर्वोत्तरसुकृतदुष्कृतानां विनष्टाश्लिष्टतया उपायनश्रुतेर्निर्विषयत्वमित्येवाक्षेपाभिप्रायः, अत्रोपायनस्य विनष्टाश्लिष्टपूर्वोत्तरसुकृतसजातीयोत्पत्तिरूपत्वेन विनाशाश्लेषयोरुपायनवचनेनाऽविरोधादिति परिहाराभिप्रायः, अयमर्थः— 'तदधिगम उत्तरपूर्वाघयोः' इत्यत्र सम्यक् विवृतस्तत्रैवानुसन्धेयः ।

## यदेव विद्ययेति हि ॥ १८ ॥

"यदेव विद्यया करोति तदेव वीर्यवत्तरम्" इत्युद्गीथविद्यायाः क्रतुफलाप्रतिबन्धफलत्ववचनेनानुष्ठितस्यापि कर्मणः फलप्रतिबन्धः सूच्यते हि । अतो विदुषोऽनुष्ठितप्रतिबद्धफलविषयं "सुहृदः साधुकृत्याम्" इति शाट्यायनिकम् ॥ १८ ॥

अग्निहोत्राद्यधिकरणं समाप्तम् ॥

---

* श्रुतप्रकाशिका *

यदेव विद्ययेति हि ॥ १८ ॥ ( सूच्यते हीति ) अयं हिशब्दः 'पृथगप्यप्रतिबन्धः फल'मित्यत्र हिशब्दवन्नोपपत्तिप्रसिद्धिद्योतकः, किन्तूपपादितप्रसिद्धिद्योतकः ।

परे तु तत्कार्यायेति ज्ञानस्य यत्कार्यं मोक्षस्तदर्थमिति व्याख्याय ज्ञानकार्यस्य मोक्षस्य कर्मकार्यत्वं विद्योत्पत्तिद्वारेणेत्यौपचारिकमिति वदन्ति, ततो वरं ज्ञानाख्यकार्यायेति व्याख्यानम्, उत्पन्ने सम्यग्दर्शने विदुषः शास्त्रवश्यत्वाभावात् विद्यायाः प्रागनुष्ठितकर्मविषयं तत्कार्यार्थत्वाभिधानम् । यद्वा सगुणविद्यासु कर्तृत्वानतिवृत्तेर्विद्योत्पत्तावपि तस्याग्निहोत्रादिसम्भवात् तद्विषयमिति चाहुः, तदपि सम्यग्दर्शनवतामपि प्रत्यहमन्तःकरणशुद्ध्यर्थमग्निहोत्रादेरनुवर्तनीयतायाः 'स खल्वेवं वर्तयन् यावदायुष'मिति श्रुतिसिद्धत्वात्सगुणनिर्गुणविद्याविभागस्याप्रामाणिकत्वाच्चानुपपन्नम् । 'अतोऽन्यापी'ति साधुकृत्यावाक्यं काम्यविषयमित्याहुः ।

यदेव विद्ययेति सूत्रमधिकरणान्तरमाहुः, 'तेनोभौ कुरुतः यश्चैतदेवं वेद यश्च न वेद' इत्युद्गीथादिविद्यासंयुक्तमसंयुक्तं च कर्म, तत्र विद्यासंयुक्तं कर्म

* भावप्रकाशिका *

( परे त्वित्यादि ) ( ततोपि वरं ज्ञानाख्यकार्यायेति ) नच तथासति कार्यपदं व्यर्थमिति वाच्यं, यस्य ज्ञानस्य सुकृताश्लेषोत्पादकत्वं तस्मा एव ज्ञानायेति स्फोरक-

* श्रुतप्रकाशिका *

प्रकृष्टं, 'ब्राह्मणाय दद्या'दित्युक्तत्वेऽपि 'विद्यां व्रतवते दद्यान्न मूर्खाय' इति विशिष्टविषयत्वसिद्धिवद् यज्ञेनेत्यविशेषेणोक्तेऽपि विद्यासंयुक्तविशिष्टकर्मविषयत्वसिद्धेर्विद्यासंयुक्तकर्मण एव ज्ञानार्थत्वमिति पूर्वपक्षं कृत्वा 'तदेव वीर्यवत्तर'मिति श्रवणाद्विद्याविधुरस्य वीर्यवत्त्वमात्रं गम्यत इति तावदुपकारहेतुत्वादविशेषेणासंयुक्तमपि कर्म ज्ञानार्थमनुष्ठेयमिति सिद्धान्तयन्ति, तदयुक्तं— यज्ञेनेत्यविशेषश्रवणाद्वेदानुवचनदानादीनामिव विद्याविधुरस्य यज्ञस्य ज्ञानार्थत्वप्रतीतेः, यज्ञस्यैव यज्ञाश्रयोपासनं न दानादेः, ब्राह्मणायेत्युक्तेऽपि विलक्षणपात्रसिद्धिवदित्यप्ययुक्तं— 'दानमश्रोत्रिये यथा' 'अश्रोत्रिये श्राद्धमशीतमव्रत'मित्यादिनिषेधवचनान्तरवासितमनस्कस्य तदैकार्थ्याद्विशेषविषयत्वप्रतीतेर्न तु वचनान्तरनिरपेक्षा, इह तु वाक्यान्तरेण विद्याविधुरयज्ञस्य ज्ञानार्थत्वप्रतिषेधादर्शनाद्यज्ञविशेषविषयप्रतीत्यभाव एव— यथा 'स्वर्गकामो यजेत' 'यज्ञेन देवेभ्यः' इत्यादिषु विद्यासंयुक्तयज्ञप्रतीतिः, अतः पूर्वपक्षानुत्थानादनारम्भणीयतैव । अपरे तु— तत्कार्याय— अपवर्गायेति समुच्चयपरमाहुः, तदयुक्तं— ज्ञानकर्मसमुच्चयस्याप्रामाणिकत्वात् । ते च 'यदेव विद्यया' इति सूत्रमुपेक्षन्त, तदयुक्तं— तदा परोक्तयोजनैव स्यात्, तदा ह्यानर्थक्यं प्रतिबद्धकर्मद्योतनरूपप्रयोजनसद्भावादपरेषां मतिमान्द्यमेव तेन द्योतितम् । समुच्चयाप्रामाणिकत्वदोषोऽन्येषामपि तुल्यः । अन्ये तु विद्यासहकारिणां कर्मणां विद्यया प्रहाणसम्भावनाया एवाभावाद्विद्याधिगमात् प्राक् जन्मान्तरे चानुष्ठितकाम्यव्यतिरिक्तनित्यनैमित्तिककर्मविषयमिदमधिकरणं व्याचक्षते, राजनियोगानुष्ठायिनां सम्मानप्राप्ति-

* भावप्रकाशिका *

त्वेन साफल्यात् ( अन्ये त्वित्यादि ) ( विद्यासहकारिणामिति ) विद्योत्पत्तेः प्राचीनानि नित्यनैमित्तिकानि विद्योत्पत्त्यर्थानि अपवर्गार्थानि च तदनन्तरभावीनि च विद्यया समप्रधानानि विद्यासहकारीणीति तेषां मर्यादा ( प्रहाणसम्भावनाया इति ) 'तत्सुकृतदुष्कृते धूनुते' इति धूननसम्भावनाया इत्यर्थः, विद्यासहकारिणो विद्यया धूननासम्भवात् पूर्वपक्षानुत्थितेरिति भावः ( काम्यव्यतिरिक्तेति ) काम्येषु कर्मसु मोक्षार्थत्वासम्भवात् सिद्धा-

* श्रुतप्रकाशिका *

वत् स्वाधिकारार्थानामप्यग्निहोत्रादीनामपवर्गोऽवान्तरफलं भवतीत्यप्रहाणमिति सिद्धान्तयन्ति, 'य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते' इति वचनमत्र प्रमाणयन्ति, 'यस्य तु खलु संस्काराणामेकदेशोऽप्यष्टावात्मगुणा अथ स ब्रह्मणः सायुज्यं सालोक्यं च गच्छती'ति गर्भसंस्कारादेरपवर्गार्थत्वविषयस्मृत्युपबृंहितत्वात् प्रागनुष्ठितस्यापवर्गार्थत्वसिद्धिरिति, तदयुक्तम्— उदाहृतवचनस्य विद्याधिगमात् प्रागनुष्ठितकर्मविषयत्वे स्वरसतः प्रामाण्याभावात् कथंचिदापाद्यमानस्यानुपपन्नत्वाच्च, कर्तृत्वममताफलविषयत्रिविधत्यागाभावे कर्मणोऽपवर्गार्थत्वायोगाद्वेदान्तज्ञानात् पूर्वं त्रिविधपरित्यागानुपपत्तेश्च तदानुष्ठितस्यापवर्गार्थत्वायोगाद्विद्यासहकारिणां कथं विद्यया प्रहाणशङ्केति चेन्न, अश्लेषविनाशश्रुतिबलेन विद्यासहकारित्वनिश्चयस्य प्रतिबद्धत्वात् तद्विषयश्रुतेरर्थवादत्वाश्रयणोपपत्तेः, परविद्याकार्यमपि जनयन्ति यज्ञादयः किं पुनः स्वर्गमिति हि स्तोतुं शक्यम्, अतः प्रागनुष्ठितविषयत्वमनादृत्य विद्वत्सम्बन्ध्याश्रमधर्मविषयत्वाश्रयणं युक्तम्, अतोऽन्यापीति सूत्रेण प्रहाणवचनं विनियोगवचनं च काम्यविषयमित्युक्ते मोक्षार्थं कर्म तु न प्रहीयते, किं त्वाब्रह्मलयात्तमनुगच्छति, एवं काम्यानि विज्ञानानि च देहान्ते प्रहीयन्ते, नित्यानि विज्ञानानि विद्वांसमनुगच्छन्तीति कर्मसु ज्ञानेषु च विभागमुक्त्वा नित्यानि विज्ञानानि न सन्तीति शङ्कामापाद्य तत्परिहारपरं 'यदेव विद्यया' इति सूत्रं व्याचक्षते, कर्मसमृच्च्यर्थं विज्ञानं हि विहितं, तत्र काम्यकर्मसमृच्च्यर्थं विज्ञानं प्रहीयते, मोक्षार्थकर्मसमृच्च्यर्थं विज्ञानमनुगच्छतीति, अत्र ब्रूमः—मोक्षार्थं कर्म विद्वांसमनुगच्छतीत्येतन्मुमुक्षोश्चरमदेहपाते ? उत तद्व्यतिरिक्तदेहपाते, प्रथमे कल्पे नायं विभागः— ज्ञानकर्मसमुच्चयस्य

ଓ भावप्रकाशिका ଓ

न्तानुस्थितेरिति भावः (स्वाधिकारार्थानामिति) नियोगानामित्यर्थः (अपवर्गार्थत्वायोगादिति) ततश्च 'न हास्य कर्म क्षीयते' इतिश्रुतेर्विद्यासहकारिविषयत्वमेव वक्तव्यं, ततश्च पूर्वपक्षसिद्धान्तावपि तद्विषयावेवोचिताविति भावः (विद्वत्सम्बन्ध्याश्रमधर्मविषयत्वमिति) विदुषा यावज्जीवमग्निहोत्रादीनि कर्तव्यानि नचेत्येवं विचारो युक्त इति भावः (विनि-

भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते ॥ १९ ॥

११ अधिकरणम्

ययोः पुण्यपापयोरश्लेषविनाशावुक्तौ । ताभ्यामितरे आरब्धकार्ये पुण्यपापे किं विद्यायोनिशरीरावसाने? उत तच्छरीरावसाने ? शरी-

* श्रुतप्रकाशिका *

निरस्ततया विद्योत्पादनमात्रचरितार्थस्य कर्मणो मोक्षार्थमनुगत्यनुपपत्तेः, द्वितीये तु– कृत्स्नसुकृतदुष्कृतप्रहाणाभावात्काम्यं कर्म प्रहीयते, मोक्षार्थमनुगच्छतीति विभागोऽनुपपन्नः, यतः कर्मणां विद्याङ्गत्वमेव न मोक्षार्थत्वम्, अत एव मोक्षार्थकर्मसमृद्ध्यर्थं विज्ञानमनुगच्छति, काम्यकर्मसमृद्ध्यर्थं विज्ञानं प्रहीयत इति च विभागोऽनुपपन्नः । ननु मुमुक्षोश्चरमेतरदेहपातेऽपि विद्याङ्गकर्मसमृद्ध्यर्थं विज्ञानमनुगच्छति इतरत्प्रहीयत इति विभागपरं सूत्रं स्यादिति चेत्, चरमदेहपातात् पूर्वमशेषसुकृतदुष्कृतप्रहाणाभावेन सुकृतसमृद्ध्यर्थज्ञानस्यापि प्रहाणायोगात् उपकार्यानुगमाननुगमानुगुणौ हि उपकारकानुगमाननुगमौ, अत एव हि मोक्षार्थकर्मसमृद्ध्यर्थं विज्ञानानुगमस्त्वयोत्प्रेक्ष्यते, अतः प्रतिबद्धफलसाधुकृत्योपपादनमाकाङ्क्षितमिति तत्परत्वमेव सूत्रस्य युक्तम् ॥ १८ ॥

अग्निहोत्राद्यधिकरणं समाप्तम् ॥



भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते ॥ १९ ॥ सङ्गतिः स्फुटा, आरब्धकार्ये पुण्यपापे किं विद्यायोनिशरीरावसाने ? उत तच्छरीरावसाने ? देहान्तरावसाने वेत्यनियमः, किं 'तस्य तावत्' इति वाक्यं विद्यायोनिश-

* भावप्रकाशिका *

योगवचनमिति ) सुहृत्संक्रमणवचनमित्यर्थः ( विद्याङ्गकर्मसमृद्ध्यर्थेति ) मोक्षस्थाने विद्यां निवेशयाम इत्यर्थः ॥ * ॥

इति अग्निहोत्राद्यधिकरणम् ।

शान्तरावसाने वेत्यनियमः ? इति संशये, "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" इति तच्छरीरविमोक्षावसानत्वश्रवणात्तदवसाने- इति प्राप्त उच्यते— भोगेन तु-इति । तुशब्दः पक्षव्यावृत्त्यर्थः, इतरे आरब्धकार्ये पुण्यपापे स्वारब्धफलभोगेन क्षपयित्वा तत्फलभोगसमाप्त्यन- न्तरं ब्रह्म सम्पद्यते । ते च पुण्यपापे एकशरी- रोपभोग्यफले चेत्, तच्छरीरावसाने सम्पद्यते, अनेकशरीरोपभोग्यफले चेत्, तदवसाने सम्पद्यते,

* श्रुतप्रकाशिका *

रीरावसानमवगमयति ? उत शरीरमतन्त्रीकृत्य फलभोगावसानमवगमयतीति, प्रथमे विद्यायानिशरीरावसानत्वं, द्वितीये त्वनियमः ।

पूर्वपक्षहेतुं परिहरति ( तस्य तावदिति ) 'यावन्न विमोक्ष्ये' इत्यत्र देहस्तदवधिश्च न श्रुतौ, 'धूत्वा शरीरमकृतं कृतात्मा' इत्यत्र शरीरं श्रुतम्, अव- धिस्तु न श्रुतः, शरीरमिति एकवचनमपि जातिविषयम्, 'अश्व इव रोमाणि विधूय पाप'मिति पूर्वखण्डस्थपापशब्दैकवचनवदित्यभिप्रायेण देहावधिनियमाश्रवणा-

* भावप्रकाशिका *

भाष्ये— तच्छरीरविमोक्षावसानत्वश्रवणादिति, 'धूत्वा शरीरमकृतं कृतात्मा' इति श्रुत्यन्तरदर्शनात् तस्य तावदित्येतत् शरीरस्याश्रुतत्वेपि शरीरमोक्षाव- धिपरम्, नच धूत्वा शरीरमित्येतत् प्रारब्धकार्ययावच्छरीरपरम्, एकवचनश्रव- णात्, एकत्वाविवक्षाकल्पने प्रमाणाभावात्, अस्माच्छरीरात्समुत्थायेति श्रुत्य- न्तरे अस्मादिति विशेषणेन विद्यायोनिशरीरस्यैव विवक्षितत्वाच्च, अन्यथा तद्वैयर्थ्यापत्तेरिति भावः ( देहस्तदवधिश्च न श्रुताविति ) तदवधिशब्दः तदवधित्वपरः देहस्तदवधित्वेन न श्रूयत इत्यर्थः । ननु धूत्वा शरीरमिति श्रुत्यन्तरदर्शनात् तदवधित्वनिश्चय इत्यत आह ( धूत्वा शरीरमिति )

भोगेनैव च क्षपयितव्यत्वादारब्धफलयोः कर्मणोः । "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति च भोगेन तयोः कर्मणोर्विमोक्ष उच्यते, देहावधिनियमाश्रवणात् । तदेवं ब्रह्मविद्यायाः प्रागनुष्ठितमभुक्तफलमनारब्धकार्यं पुण्यपापरूपं कर्मानादिकालसञ्चितमनन्तं विद्यामाहात्म्याद्विनश्यति । विद्यारम्भोत्तरकालमनुष्ठितञ्च न श्लिष्यति । तत्र पुण्यरूपं सर्वं विदुषः सुहृदो गृह्णन्ति, पापं च द्विषन्त इति निरवद्यम् ॥ १९ ॥

इतरक्षपणाधिकरणं समाप्तम् ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

चतुर्थस्याध्यायस्य प्रथमः पादः ॥



* श्रुतप्रकाशिका *

दित्युक्तम्, अस्मिन्पादे बह्वधिकरणोक्तार्थस्य सुग्रहत्वायाह ( तदेवमिति ) ।

परे तु— 'अनारब्धकार्ये' इत्यत्र यद्व्यावर्तितं तस्य कर्मणः क्षयप्रकारं दर्शयतीदं सूत्रमित्याहुः, तत्प्रयोजनशून्यत्वादनादरणीयम्, अनारब्धकार्ययोर्ज्ञानदाह्यत्वेऽभिहिते तदितरयोर्हि भोगेन क्षयः स्फुटः ।— अपरे तु

७ भावप्रकाशिका ७

'अस्माच्छरीरात्समुत्थाय' इत्यत्रापि शरीरपदं प्रारब्धकार्यशरीरसामान्यपरम्, अस्मादिति विशेषणं च श्रुतिस्मृतिप्रसिद्धत्याज्यत्वहेत्वनुभवसिद्धहेयताप्रदर्शनार्थमिति भावः ।

( परे त्वित्यादि ) ( तस्य तावदिति श्रुतिवशेनेति ) तस्य तावदिति श्रुत्या विद्यायोनिशरीरपात एव ब्रह्मसम्पत्तेः श्रवणेन शरीरान्तरे 'अने-

* श्रुतप्रकाशिका *

कर्तृत्वस्याविद्यामूलत्वाद्विदुषश्चाविद्यानिवृत्तौ भोक्तृत्वासम्भवात् बहुशरीरप्रदैक-कर्मणो देहान्तरोपाधौ तस्य तावदेवेति श्रुतिवशेन भोगासंभवाच्च प्रारब्ध-स्यापि ज्ञानेनैव क्षय इति पूर्वपक्षं कृत्वा तस्य तावदित्यवशेषितस्य कर्मणो ज्ञानदाह्यत्वायोगाद्विदुषोऽपि सुखदुःखानुभवदर्शनेन प्रारब्धभोगानुगुणा-विद्यालेशानुवृत्तेरभ्युपगन्तव्यत्वात्तस्य तावदिति श्रुतेः प्रारब्धसर्वकर्मक्षयावधि-परत्वोपपत्तेः, अत एव प्रारब्धस्य देहान्तरोपाधौ ज्ञानदाह्यत्वाश्रयणायोगाच्च भोगेनैव क्षय इति सिद्धान्तयन्ति, तदयुक्तम्--अनारब्धकार्ये एवेत्यत्र समर्थितत्वात्, एवकारार्थो हि प्रारब्धस्य ज्ञानादाह्यत्वं, तच्च तस्य ताव-दित्यवधिश्रवणेन समर्थितम्, अविद्यापूर्वकत्वात कर्तृत्वस्य, तदभावात् भोगानुपपत्तिः परिहरणीयेति चेत् , यदि सा परिहार्या तर्हि तत्रैव परिहर्तव्या, इह सूत्रेऽपि तत्परिहारस्याभिप्रायिकत्वं वक्तव्यं, तत्तत्रैव वक्तुं युक्तं, साध्यसिद्ध्युपयोगस्याविशिष्टतया तदौपयिकार्थानां तत्रैव वक्तव्यत्वात्, युक्तिरपि निर्मूला 'जक्षत् क्रीडन् रममाणः' इति मुक्तौ परं ब्रह्मोपसम्प-न्नस्यापि कर्तृत्वश्रवणेन तस्याविद्यापूर्वकत्वाभावात् , कर्मफलभोगादिकर्तृत्वं चौपाधिकमिति पूर्वपक्षयुक्तेर्निर्मूलतयाऽनारम्भणीयता । अतः अनारब्धकार्ये इत्यत्र प्रारब्धस्य भोगविनाश्यत्वे सिद्धे तदवधेरेव चिन्तनीयत्वं युक्तम् । अन्ये तु एकस्यापि कर्मणो बहुशरीरप्रदत्वसम्भवात्तस्य तावदित्यस्य कर्मक्षयाव-धिपरत्वोपपत्तेर्व्यासादीनां पुनर्जन्मदर्शनाच्च विद्यायोनिशरीरावसानत्वनियमाभावं पूर्वपक्षीकृत्य विद्यायोनिशरीरावसाने प्रारब्धस्यापि कर्मणो विरतव्यापारत्वाद्विरत-व्यापारस्यानारब्धतुल्यत्वेन विद्याविनाश्यत्वात्, तस्य तावदिति वाक्यस्य तद्देहावधिविषयत्वोपपत्तेर्व्यासादीनामाधिकारिकत्वादविरतव्यापारेण पूर्वकर्मणैव बहुशरीरग्रहणोपपत्तेश्च विद्यायोनिशरीरावसानत्वं सिद्धान्तयन्ति, तदयुक्तं-विद्यायोनिशरीरपाते प्रारब्धकर्मणो विरतव्यापारत्वे प्रामाणाभावात् , प्रत्युत व्यासादीनां बहुदेहपरिग्रहस्तद्विरुद्ध उपलभ्यते, तेषां कर्मणोऽविरतव्यापारत्वे संप्रतिपन्ने तदितरेषामेकस्मिन् विद्यायोनिदेहान्त एव विरतव्यापारत्वे

* भावप्रकाशिका *

कशरीरारम्भककर्मफलभोगासम्भवेन .क्षयायोगात् ज्ञानेनैव प्रारब्धस्य क्षयो

* श्रुतप्रकाशिका *

किं प्रमाणं, तस्य तावदिति श्रुतेस्त्ववधिविशेषाश्रवणात् तद्देहपातावधिपरत्वमनुपपन्नं, न हि विद्यायोनेः शरीरावावन्न विमोक्ष्य इति श्रूयते, तस्माद्विद्यायोनिशरीरावसानत्वनियमाभाव एव सिद्धान्तीकर्तव्यः ॥ १९ ॥

इतरक्षपणाधिकरणं समाप्तम् ॥

इति श्रीहारीतकुलतिलकवाग्विजयसूनुना श्रीरङ्गराजदिव्याज्ञालब्ध-
वेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधि-
गतभगवद्रामानुजविरचितशारीरकमीमांसा-
भाष्यहृदयेन श्रीसुदर्शनसूरिणा विलि-
खितायां श्रुतप्रकाशिकायां चतुर्थ-
स्याध्यायस्य प्रथमः पादः ॥

* भावप्रकाशिका *

वाच्य इत्यर्थः । शिष्टं स्पष्टम् ॥

इति दशोपनिषद्भाष्यकारैः श्रीरङ्गरामानुज-
मुनिभिर्विरचितायां श्रुतप्रकाशिका-
व्याख्यायां भावप्रकाशिका-
यां चतुर्थस्याध्यायस्य
प्रथमः पादः ॥

समाप्तश्चाध्यायः ।

समुदिताधिकरणसङ्ख्या—१३४—समुदितसूत्रसङ्ख्या—४८७ ।





श्रीमते रामानुजाय नमः ॥

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

## चतुर्थेऽध्याये द्वितीयः पादः ।



### वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

१ अधिकरणम्

इदानीं विदुषो गतिप्रकारं चिन्तयितुमारभते । प्रथमन्तावदुत्क्रान्तिश्चिन्त्यते ; तत्रेदमाम्नायते "अस्य सोम्य पुरुषस्य प्रयतो वाङ्म-

* श्रुतप्रकाशिका *

वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥ शरीरस्थितिसमये यद्विद्याफलं तदुक्तम्, अथ गत्युपक्रमश्चिन्त्यत इति पादसङ्गतिः, गतेरुपक्रमः— उत्क्रान्तिः, सा चिन्त्यते, किमियं सम्पत्तिर्वाग्वृत्तिविषया ? उत वाक्स्वरूपविषयेति, किं वाक्शब्दस्य मुख्यार्थपरिग्रह उपपन्नो नेति, किमियं सम्पत्तिर्लयरूपा उत व्यापारनिवृत्तिपूर्वकसंयोगरूपेति, इन्द्रियान्तरसम्पत्तिवचनं किं लयपरत्वेऽप्युपपद्यते ? उत संयोगपरत्व एवेति, यदा लयपरत्वेऽप्युपपद्यते, तदा सम्पत्तेर्लयरूपतया वाक्छब्दस्य मुख्यार्थपरिग्रहा-

* भावप्रकाशिका *

( यदा लयपरत्वेप्युपपद्यत इति ) ननु इन्द्रियान्तरसम्पत्तिवाक्सम्प-

१. छां० ६-८-६ ॥

नसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्" इति । अत्र "वाङ्मनसि संपद्यते" इति वाचो मनसि संपत्तिश्रुतिः किं वाग्वृत्तिमात्रविषया? उत वाग्विषयेति विशये—वृत्तिमात्रविषयेति युक्तम् । कुतः? मनसो वाक्प्रकृतित्वाभावात्, तत्र वाक्स्वरूपसम्पत्त्यसम्भवात् । वागादिवृत्तीनां मनोधीनत्वेन वृत्तिसम्पत्तिश्रुतिः कथंचिदुपपद्यत इति ।

* श्रुतप्रकाशिका *

योगात्सम्पत्तिर्वृत्तिविषया स्यात्, यदा संयोगपरत्व एवोपपत्तिस्तदा सम्पत्तेः संयोगरूपत्वेन वाक्छब्दस्य मुख्यार्थत्वात्सम्पत्तिः स्वरूपविषया स्यात् (कुत इत्यादि) कारणे हि लयः, न वाचो मनःकारणं, तत्प्रवृत्तेरेव कारणं मन इति वृत्तिविषया सम्पत्तिरित्यर्थः, वाग्वृत्तेर्हि वागाश्रयभूता न मनः, अतस्तद्वृत्तिहेतुस्वरूपव्यापारस्य मनसि लय इत्यस्वारस्याभिप्रायेण कथञ्चिदित्युक्तम् ।

* भावप्रकाशिका *

त्तिवचनयोर्विशेषानुपलम्भात्, अत एव 'सर्वाण्यनु' इति सूत्रे श्रीभाष्ये च वाक्सम्पत्तिवचनन्यायस्यैव इन्द्रियसम्पत्तावतिदेशाच्च इन्द्रियान्तरवचनस्य कथमुपपादककोटौ निवेश इति चेन्न, तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः' इत्यस्य ह्ययमर्थः— उपशान्ततेजाः उपशान्तौष्ण्यः पुनर्भवं पुनर्जन्म उद्दिश्य मनसि सम्पद्यमानैरिन्द्रियैस्सह प्राणमायातीति, अत्र हि पुनर्जन्मोद्दिश्य मनसि इन्द्रियाणां सम्पत्तिर्लयरूपा, इन्द्रियाणां मनसि लये हि पुनर्जन्मन एवाभावप्रसङ्गात् अतस्तत्र सम्पत्तिशब्दस्य संयोगपरत्वं वक्तव्यमिति वाक्सम्पत्तिवचनेप्यवैरूप्यात् तथात्वं वक्तव्यमिति इन्द्रियसम्पत्तिवचनमप्युपपादककोटौ निवेशितमिति भावः । वस्तुतस्तु इन्द्रियैर्मनसि स-

एवं प्राप्तेऽभिधीयते—वाङ्मनसि—इति। वाक्स्वरूपमेव मनसि संपद्यते। कुतः? दर्शनात्। दृश्यते

* श्रुतप्रकाशिका *

( वाङ्मनसीति ) वाक्छब्दस्य वृत्तिपरत्वे लक्षणा स्यात्, स्वरूपपरत्वे तु न लक्षणा, सम्पत्तिशब्दो लयवाची संयोगवाची च, लयवाचित्वे प्रसिद्धिप्राचुर्यात् संयोगवाचित्वमस्वरसमिति चेत्, पूर्वपक्षिणोऽपि लयवाचित्वमयुक्तम्, उपादाने हि लयः, वाग्वृत्तेर्वागेवोपादानं, मनस्तु निमित्तम्, एवं वाक्छब्दसम्पत्तिशब्दयोरुभयोरपि लाक्षणिकत्वास्वारस्यप्रसङ्गः पूर्वपक्षे। अस्माकं तु सम्पत्तिशब्दास्वारस्यमेव न वाक्छब्दलक्षणेति विशेष इत्यर्थः। ( दृश्यते हीति ) प्रवृत्तव्यापारं मनोनिवृ-

* भावप्रकाशिका *

स्पद्यमानैरिति वाक्यस्य न वाक्सम्पत्तिवाक्यापेक्षया वैलक्षण्यमस्ति, अथाप्याचार्यैः गुणसूत्राणां सर्वेषामपि प्रकृताधिकरणार्थोपपादकत्वं वक्तव्यमित्यभिनिवेशादुपपादककोटौ निवेशितमिति द्रष्टव्यम्। नन्वयं विचारः काकदन्तपरीक्षासदृशः, पूर्वोत्तरपक्षयोरर्थभेदाभावात् वाक्स्वरूपस्य मनसि लयो नास्तीति पूर्वोत्तरपक्षयोस्सम्प्रतिपन्नमेव, नच सिद्धान्त्यभिमतो मनसि वाक्संयोगः पूर्वपक्षिणानभ्युपगत इति शक्यते वक्तुं, वाचो मनसि संयोगाभावे वागुक्तेर्मनसि लयवार्ताया अप्यसम्भवात्, इयांस्तु विशेषः, वाक्छब्दस्य स्वरूपपरत्वे सम्पत्तिशब्दस्य वागुक्तिनिष्पादनलक्षणमनोव्यापारलयपरत्वं वाक्छब्दस्य वागुक्तिपरत्वे तु सम्पत्तिशब्दस्य तद्धेतुव्यापारविलयपरत्वमिति नैतद्व्यापारस्य उपयोगोस्ति, उत्क्रान्तिस्वरूपविशेषपर्यवसायित्वाभावात्, देवदत्तपुत्राभिप्रायेण काञ्च्यां देवदत्तो नष्ट इत्युक्ते देवदत्तशब्दस्य तत्पुत्रलक्षणयापि समर्थयितुं शक्यते, नष्टपदस्य विनष्टपुत्रलक्षणामाश्रित्यापि तदर्थः प्रतिपादयितुं शक्यते, नैतावता अर्थे कश्चन विशेषोभिहितो भवति, तत्तुल्यश्चायं विचारः, नच मुख्यजघन्ययोरन्यतरस्यामुख्यार्थत्वे समाश्रयणीये जघन्यस्यैव अस्वरसार्थसमाश्रयणन्यायव्युत्पादनार्थमिदमधिकरणमिति वाच्यम्, तस्य पूर्वतन्त्र एव सुगमत्वादिति चेत्, अत्र केचित्—अस्मिन्नधिकरणे

हि वागिन्द्रिये उपरतेऽपि मनःप्रवृत्तिः । वृत्तिमात्रसम्पत्त्याऽपि तदुपपद्यत इति चेत्तत्राह—शब्दाच्च—इति । "वाङ्मनसि सम्पद्यते" इति वाक्स्वरूपसंपत्तावेव हि शब्दो न वृत्तिमात्रसम्पत्तौ । न हि तदानीं वृत्त्युपरमे वागिन्द्रियं प्रमाणान्तरेणोपलभ्यते, येन वृत्तिमात्रं संपद्यत इत्युच्येत । यदुक्तं मनसो वाक्प्रकृतित्वाभावाद्वाचो मनसि संपत्ति-

* श्रुतप्रकाशिका *

त्तव्यापारं वागिन्द्रियं, तत्र प्रवृत्तस्वकार्ये मनसि निवृत्तस्वकार्यं वागिन्द्रियमन्तर्गतम्भवितुमर्हति, यथा प्रवृत्तस्वकार्ये दारुणि निवृत्तस्वकार्योऽग्निरन्तर्भूत इति भावः । (वृत्तिमात्रेति) यद्यन्निवृत्तस्वकार्यं तत्तत्प्रवृत्तस्वकार्येऽन्तर्गतम्भवतीति न व्याप्तिरस्ति, अतो वृत्तिमात्रसम्पत्त्यापि

* भावप्रकाशिका *

वाक्स्वरूपस्य मनसि लय इत्येव प्रधानपूर्वपक्षः, सम्पत्तिश्रुतिः कथञ्चिदुपपद्यत इति, अस्मिन्पक्षे अनुशयं प्रदर्शयता भाष्यकारेण पूर्वपक्षान्तरस्य सूचनात् 'तन्मनः प्राण उत्तरा'दित्यतिदेशाधिकरणे अधिकाशङ्कोपपादकभाष्यग्रन्थपरिचयशालिनाम् किमत्र मनसो लय उच्यते, उत संयोगः— इति टीकाग्रन्थदर्शिनां च अस्यार्थस्य सुगमत्वात्, यदि ह्यत्र वाग्लयपूर्वपक्षो नाभिमतः स्यात्, तर्हि अतिदेशाधिकरणे भाष्ये— मनोलयसाधकाधिकाशङ्काकथनं विरुद्धमेव स्यात्, अतस्तत्रापि वाक्स्वरूपलयकथनमेव प्रधानपूर्वपक्षः, सम्पत्तिशब्दस्य व्यापारनिवृत्तिपूर्वकसंयोगार्थकत्वेनाप्युपपन्नत्वात् अप्रकृतौ लयो न युक्त इति सिद्धान्त इत्येव तत्त्वम् । परं तु वाचो मनसि संयोगाभावे वाग्वृत्तेरपि मनसि लयोक्तिर्न सम्भवतीत्येतत्सत्यमेव, तथापि सिद्धान्त्यभिमतसंयोगविशेषस्य पूर्वपक्षिणानभ्युपगमात् न पक्षद्वयेऽप्यर्थाविशेष इति वदन्ति, भाष्ये— वागिन्द्रिये उपरतेपि मनःप्रवृत्तिरिति, अत्र मन प्रवृत्तिसत्त्वाभिधानं वाक्सम्पत्तिहेतु-

नोपपद्यत इति; तत् 'वाङ्मनसि सम्पद्यते' इति वचनान्मनसा वाक् संयुज्यते न तु तत्र लीयत इति परिहर्तव्यम् ॥ १ ॥

अत एव सर्वाण्यनु ॥ २ ॥

यतो वाचो मनसा संयोगमात्रं सम्पत्तिर्न तु लयः; अत एव वाचमनु सर्वेषामिन्द्रियाणां मनसि सम्पत्तिश्रुतिरुपपद्यते, "तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः" इति ॥ २ ॥

वागधिकरणं समाप्तम् ॥

* श्रुतप्रकाशिका *

वागिन्द्रियोपरमे मनःप्रवृत्तिदर्शनमुपपद्यत इत्यर्थः । दर्शनाच्छब्दाच्चेति द्वयमप्येको हेतुः ॥ १ ॥

अत एव सर्वाण्यनु ॥ २ ॥ वाचमनु—वाचः पश्चादित्यर्थः ॥ २ ॥

वागधिकरणं समाप्तम् ॥

* भावप्रकाशिका *

त्वोपपत्त्यर्थम्, अन्यथा हि तत्प्रलीनवृत्तित्वं न सम्पत्तिहेतुतां भजेतेत्यर्थः । प्रवृत्तव्यापारमित्यादिटीकाया अप्यत्रैव तात्पर्यम् ॥ ६ ॥

भाष्ये— वाचमनु सर्वेषामिन्द्रियाणामिति, अनुशब्दस्तृतीयार्थ इति कर्मप्रवचनीयः, वाचा सहेत्यर्थः, नतु पश्चादर्थवाची, तथा सति 'अव्ययं विभक्ती'ति पश्चादर्थेऽव्ययीभावसमासप्रसङ्गात्, तस्य च नित्यसमासत्वेन वाक्याभावात्, तदर्थे च द्वितीयाया अपि दुर्लभत्वाच, अतः सहार्थ एवायं कर्मप्रवचनीयः 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया, अतः टीकाग्रन्थः कथञ्चिन्नेय इति केचिदाहुः, केचित्तु वाचमनु—वाचमनुरुध्य सम्पद्यत इत्यर्थः, अनुशब्दस्ससाधनक्रियावचनः, शाकल्यस्य संहितामनुप्रा-

## तन्मनः प्राण उत्तरात् ॥ ३ ॥

२ अधिकरणम्

तत्सर्वेन्द्रियसंयुक्तं मनः प्राणे सम्पद्यते– प्राणेन संयुज्यते न मनोवृत्तिमात्रम् । कुतः ? उत्तरात्– मनः प्राणे' इति वाक्यात् ।

अधिकाराशङ्का तु, "अन्नमयं हि सोम्य मनः" इति वचनान्मनसोऽन्नप्रकृतिकत्वमवगम्यते, अन्नस्य च "ता अन्नमसृजन्त" इत्यम्मयत्वं सिद्धम् । "आपोमयः प्राणः" इति चाप्प्रकृतित्वं प्राणस्यावगम्यते । अतो मनः

* श्रुतप्रकाशिका *

तन्मनः प्राण उत्तरात् ॥ ३ ॥ सङ्गतिः स्फुटा, किमत्र मनसो लय उच्यते ? उत संयोगः, किमत्र प्राण इत्यपां निर्देशः ? उत प्राणस्यैव, 'आपोमय' इति वाक्यं किं प्रकृतिविकारभावपरम् ? उताप्यायनपरं, प्रकृतिविकारपरत्वे प्राण इत्यपां निर्देशात् सम्पत्तिर्लयः स्यात्, आप्यायनपरत्वे प्राणस्यैव निर्देशात् सम्पत्तिः संयोगः स्यात्, तच्छब्दं व्याचष्टे ( सर्वेन्द्रियेति ) ।

( अधिकाराशङ्केत्यादि ) ।

ॐ भावप्रकाशिका ॐ

वर्षदित्यादिवत् शाकल्यस्य संहितामनु निशम्य प्रावर्षदित्यर्थप्रत्ययात् प्रवर्षणस्य पश्चाद्भावोर्थः सिध्यति, यथा च पुमांसमनुजायत इतिपुमनुज इत्यादौ पुमांसमनुरुध्य जायत इत्यर्थप्रत्ययात् ततः पश्चाज्जननं सिध्यति, एवमिहापि वाचमनुरुध्य इत्यर्थावगमात् पश्चादित्यर्थस्सिध्यतीत्यभिप्रेत्याचार्यैरित्थमुक्तमिति प्रतिपादयन्ति ॥ ७ ॥

इति वागधिकरणम् ॥

भाष्ये–अतो मनः प्राणे सम्पद्यत इत्यत्रेत्यादि, अत्र केचिदेवं वर्णयन्ति, पूर्वपक्षे प्राणशब्दे लक्षणा अभ्युपगन्तव्या, तथा सम्पत्ति-

प्राणे संपद्यते" इत्यत्र प्राणशब्देन प्राणप्रकृतिभूता अपो निर्दिश्य तासु मनःसम्पत्तिप्रतिपादने परम्परया स्वकारणे लय इति सम्पत्तिवचनमुपपन्नं भवति— इति ।

परिहारस्तु "अन्नमयं हि सोम्य मनः, आपोमयः प्राणः" इति मनःप्राणयोरन्नेनाद्भिश्चाप्यायनमुच्यते, न तत्प्रकृतित्वम्, आहङ्कारिकत्वान्मनसः, आकाशविकारत्वाच्च प्राणस्य । प्राणशब्देनापां लक्षणा च स्यादिति ॥ ३ ॥

मनोधिकरणं समाप्तम् ॥

---

* श्रुतप्रकाशिका *

(परम्परया स्वकारणे लय इति) स्वकारणपृथिवीद्वारेणान्नमयस्य मनसः प्राणशब्दलक्षितास्वप्सु लय इत्यर्थः ।

परिहरति (परिहारस्त्विति)

ॐ भावप्रकाशिका ॐ

वचनस्याप्यस्वारस्यमेव अप्रकृतित्वात्, नहि प्रकृतिमात्रे लय उपपद्यते । किञ्च प्राणशब्दस्याऽलक्षकत्वे प्राणस्तेजसीत्युत्तरवाक्येपि प्राणशब्दस्याऽवैरूप्येण जलपरत्वे जलस्य तेजसि लय इत्यर्थः स्यात्, नचैतदयुक्तं प्रयाणकालेषु भूतलयासम्भवात् । किञ्च वाङ्मनसि सम्पद्यत इतिवाक्येपि मनश्शब्देन मनःप्रकृत्यहंकारलक्षणायां मुख्यसम्पत्तिसम्भव इति पूर्वपक्षस्यापि सम्भवेन तत्समाधानस्य एतदधिकरणसिद्धान्तयुक्त्यापि कर्तुमशक्यत्वात्, तस्मात् श्रुतार्थस्योपपत्तिरस्तीत्येव पूर्वपक्षो वक्तव्यः, नतु लक्षणामादाय पूर्वपक्ष इति, तत्रैवं केचित्समादधते—प्रकृतिविकृत्योरभेदादन्नमनसोरभेदः जलप्राणयोश्चाभेदः, ततश्चान्नस्याप्सु लय इत्युक्तेस्सोपपत्ति-

* श्रुतप्रकाशिका *

परे तु श्रुतिलक्षणाविशये श्रुतेर्बलीयस्त्वाद्वागेव सम्पद्यत इति पूर्वपक्षं कृत्वा वाचो मनःप्रकृतिकत्वाभावेन तत्र तल्लयायोगात् पार्थिवेन्धनजन्याया अग्निवृत्तेरप्सूपशमदर्शनेन वृत्त्युद्भवाभिभवयोः प्रकृतिसमाश्रयत्वासम्भवाच्च वाग्वृत्तिर्मनसि संपद्यते, एवमेवेन्द्रियान्तरवृत्तिर्मनसि संपद्यत इति सिद्धान्तयन्ति, 'शब्दात्' इति वाक्छब्दस्यापि वृत्त्यभेदोपचारादुपपत्तेरिति व्याचक्षते, तदयुक्तं—सौत्रयोर्वाक्छब्दशब्दयोर्वृत्त्युपपत्तिपरत्वे लाक्षणिकत्वप्रसङ्गात्, अर्थविरोधाच्च, अर्थविरोधश्च श्रुतिस्वारस्यहान्याधिक्यरूपः वाक्छब्दस्य वृत्तिपरत्वम्, मनसीति सप्तम्या निरर्थकत्वं लयवाचिनः संपत्तिशब्दस्योपशमपरत्वं च, स्वावस्थाप्रहाणेन कारणसंश्लेषो हि लयः न तूपशममात्रम्, जलसंसर्गो वह्निशान्तिहेतुः, न स्थानम्, अभिज्वलनाभावो

* भावप्रकाशिका *

कत्वमिति मनसः प्राणलय इत्युक्तिरुपपद्यत इति पूर्वपक्षाभिप्रायः, ततश्च प्राणप्रकृतिभूता अपो निर्दिश्येत्यत्र भाष्ये प्रकृतिशब्दः स्वभावपरः, प्राणस्वरूपभूता अपो निर्दिश्येत्यर्थः, ततश्च तयोरभेदादित्यर्थ उक्तो भवति, ततश्च पृथिवीरूपस्य मनसो जलरूपे प्राणे मुख्यलय उपपद्यत इत्यभिप्रायः, परम्परया स्वकारण इति भाष्ये परम्परयेत्यस्य युक्तिपरम्परयेत्यर्थः, टीकापि तदानुगुण्येन नेया, तथाहि किं प्रकृतिविकृतिभावपरमित्यस्य किं प्रकृतिविकृतिभावप्रतिपादनमुखेनाभेदपरमित्यर्थः, स्वकारणे पृथिवीद्वारेणेत्यादेरयमर्थः, पृथिवीद्वारेणान्नमयस्य पृथिवीरूपतयैवान्नमयस्य स्वकारणे प्राणशब्दलक्षितासु प्राणनामप्रतिपाद्यास्वित्यर्थः, केचित्तु सम्पद्यत इत्यस्य विधिरूपत्वात् 'न विधौ परश्शब्दार्थः' इति न्यायेन सम्पत्तिशब्दास्वारस्याश्रयणासम्भवात् सम्पत्तिशब्दस्य लय एव मुख्यत्वात् यथा कथञ्चित् तत्सम्भवे तत्त्यागस्यानुचितत्वात्, प्राणशब्दस्याब्लक्षणापि सोढव्या, प्राणस्तेजसीत्यत्र वैरूप्यमापतति चेत्, सोढव्यमेव, अन्यच्च दोषान्तरमापतितं सोढव्यमेव, न्यायागतेर्थे किं कुर्म इति पूर्वपक्षिण आशय इति वदन्ति ( परे त्वित्यादि ) ( वृत्त्युपपत्तिपरत्वे इति ) वाङ् मनसिदर्शनाच्छब्दाच्चेति सूत्रे वाक्छब्दस्य वृत्तिपरत्वं, शब्दशब्दस्य शब्दोपपत्तिपरत्वमित्याश्रयणे

* श्रुतप्रकाशिका *

ह्यन्यवयवाश्रयः, अम्भसोक्षिते दहने सत्यम्भसा शाम्यतीति ह्युच्यते न त्वम्भसि शाम्यतीति बहुजलप्रक्षिप्तेऽप्यग्नौ तच्छान्तिहेतुरेव जलं न त्वभिज्वलनाभावाधिकरणम्, बहुसलिलस्याङ्गाराधिकरणतया विवेकाभावात् निरिन्धनोऽप्सु शाम्यतीति व्यवहारः, अतः श्रुतिस्वारस्यभङ्गाधिक्यम्, अस्माकं तु संपत्तिशब्दास्वारस्यमात्रमेवेत्यस्मत्पक्ष एवोपपन्नः, तन्मनः प्राण इत्यनन्तराधिकरणस्यापि मनोवृत्तिलयपरत्वमुक्तदोषग्रस्तम् ।— अपरेऽप्यस्मिन्नधिकरणे तुल्याभिप्रायाः, तुल्यप्रतिक्षेपाश्च, हेतुवैषम्यमेव ब्रह्मणि लयश्रुतिविरोधात् अविदुषोऽपि देहान्तरप्रतिपत्तौ करणानुवृत्त्यनुपपत्तेश्च वाग्वृत्तिलय इति, तत्राद्यो हेतुरयुक्तः, तथा हि मनसि वाग्वृत्तिलयश्चेत् ब्रह्मणि सर्ववस्तुलयश्रुतिविरोधः, मनसो ब्रह्माभिन्नत्वादविरोधश्चेत्स्वरूपलयेऽपि तुल्यं, द्वितीयस्तु स्वरूपलयाभावहेतुत्वादस्मत्पक्षानुगुणः । — अन्ये तु वागादिबाह्येन्द्रियाणां मनस्येव लयः? उतान्यत्रेति विचार्य मनःशब्दलक्षिते अहङ्कारे लय इति पूर्वपक्षं कृत्वा सम्पत्तिशब्देन वृत्तिविलोपाय संयोगस्य विवक्षितत्वात् मनस्येव सम्पत्तिरिति सिद्धान्तयन्ति, तन्मन इति प्राणशब्दलक्षिते अहङ्कारे मनसो लय इत्याशङ्क्य पूर्ववत् सिद्धान्तयन्ति, मुख्यप्राणे मनःसंश्लेषश्चेत् सहोत्क्रान्तिर्वाच्या न तु पश्चात् सर्वे प्राणा अनूत्क्रामन्तीति पश्चादुत्क्रान्तिश्रवणात्सर्वेन्द्रियसंयुक्तस्य मनसो न प्राणसंयोग इत्यधिकाशङ्कामुक्त्वा अनुर्न पश्चाद्भावपरः, किंतु तृतीयार्थे कर्मप्रवचनीयः, तस्मात्सहोत्क्रामतीत्यधिकं परिहारमाहुः, तत्र विचारस्य संपत्तिस्थानविषयत्वादपि संपद्यमानवस्तुविषयत्वमुचितम्, 'आकाशाद्वायुर्वायोरग्निरग्नेरापः' इत्युत्पत्तिवचन इव संपत्तिवाक्येऽपि 'वाङ् मनसि, मनः प्राणे, प्राणस्तेजसि' इति शृङ्खलितनिर्देशे पूर्वापरयोर्मनःशब्दयोः प्राणशब्दयोश्चार्थैक्यस्य स्वतःप्राप्तत्वेनाहङ्कारवाचित्वमनोवाचित्वाहङ्कारवाचित्वभा-

* भावप्रकाशिका *

इत्यर्थः (मनश्शब्दयोरिति) 'वाङ्मनसि सम्पद्यते मनः प्राण' इति सप्तम्यन्तप्रथमान्तमनश्शब्दयोरित्यर्थः (प्राणशब्दयोश्चेति) मनः प्राणे प्राणस्तेजसीति सप्तम्यन्तप्रथमान्तप्राणशब्दयोरित्यर्थः (अहङ्कारवाचित्वमनो-

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

३ अधिकरणम् यथा [1]"वाङ्मनसि संपद्यते मनः प्राणे" इति वचनानुरोधेन मनःप्राणयोरेव वाङ्मन-

* श्रुतप्रकाशिका *

णवाचित्वाश्रयणायोगात्, एकस्मिन्नर्थे ग्राह्ये तत्रापि मुख्यार्थस्य स्वतः- प्राप्तत्वात् मनःप्राणशब्दयोरमुख्यैकरूपार्थस्वीकारे सत्यहङ्कारपरत्वात्तयोरुत्तरवाक्यान्वयायोगान्मुख्यार्थः स्वतः प्राप्त इति । यथा प्रसिद्ध्यर्थे स्वीकृते सति क्रियमाणो विचारः सम्पद्यमानवस्तुविषय एव भवितुमर्हतीति, पश्चादुत्क्रान्ति- श्रवणमिन्द्रियाणां प्राणसंश्लेषबाधकमित्यधिकाशङ्का चानुपपन्ना, प्राणशब्दस्याहङ्कारपरत्वं पूर्वपक्षयतामनभिमतं पूर्वपक्षविरुद्धत्वाच्छङ्कायाः, पूर्वपक्षसाधक- युक्त्याधिक्यमूला ह्यधिकाशङ्का, मनसोऽहङ्कारलीनत्वे मुख्यप्राणात् पृथगिन्द्रि- योत्क्रमणं हि विरुध्यते, तस्माद्विचाराधिकशङ्के यथाभाष्यमेवोपपन्ने ॥ ३ ॥

मनोऽधिकरणं समाप्तम् ॥



सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥ सङ्गतिः स्फुटा, किं प्राणस्ते-

* भावप्रकाशिका *

वाचित्वेति ) वाङ् मनसीत्यत्र सप्तम्यन्तमनश्शब्दस्याहङ्कारपरत्वं वदता तदधिकरणपूर्वपक्षिणैव 'मनः प्राणे' इत्यत्र प्रथमान्तमनश्शब्दस्य मनोवाचित्वं वक्तव्यम्, एवं 'तन्मनः प्राण उत्तरा'दित्यधिकरणपूर्वपक्षेपि सप्तम्यन्तप्रथमान्त- शब्दयोः वैरूप्यमाश्रयणीयं, तच्चायुक्तमिति भावः, अभिमतपूर्वपक्षविरोध- मेव दर्शयति ( मनसोऽहङ्कारलीनत्व इति ) यथा मनसः प्राणविलीनत्वे प्राणात्पृथगुत्क्रमणं विरुद्धम् । एवमहङ्कारविलीनत्वेपि विरुद्धमेव, नहि तदानीमहङ्कारस्य भूतेन्द्रियादिहेतुभूतस्य ब्रह्माण्डावरणभूतस्य उत्क्रमणं सम्भावनापदमिति भावः ॥ ३ ॥ ॥ ३ ॥ इति मनोधिकरणम् ॥



भाष्ये— वाङ्मनसोरिति क्वाचित्कः पाठः समासान्तविधेरनित्यत्वनिब-

[1] छा० ६-८-६ ॥

सयोः संपत्तिः । तथा प्राणस्तेजसीति वचनात्तेजस्येव प्राणः सम्पद्यते-

इति प्राप्त उच्यते— सोऽध्यक्षे— इति । स प्राणोऽध्यक्षे करणाधिपे जीवे सम्पद्यते । कुतः ? तदुपगमादिभ्यः, प्राणस्य जीवोपगमस्तावच्छ्रूयते [1]"एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति" इति, तथा जीवेन सह प्राणस्योत्क्रान्तिः श्रूयते [2]"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति इति, प्रतिष्ठा च जीवेन सह श्रूयते [3]"कस्मिन्नुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि" इति । एवं जीवेन संयुज्य तेन सह तेजस्सम्पत्तिरिह प्राणस्तेजसीत्युच्यते, यथा

* श्रुतप्रकाशिका *

जसि संपद्यते ? उत जीवे, किं प्राणस्तेजसीति वाक्यं जीवसंपत्तिपूर्वकतेजःसम्पत्तिपरम् ? उत केवलतेजस्संपत्तिपरं, जीवसंपत्तिपरत्वे प्राणस्तेजसीति वाक्यस्वारस्यं हीयते, नेति, हीयते चेद्वाक्यस्य केवलतेजःसम्पत्तिपरत्वान्न जीवे सम्पत्तिः, न हीयते चेत् जीवसंपत्तिपूर्वकतेजःसम्पत्तिपरत्वाद्वाक्यस्य प्राणस्य जीवे सम्पत्तिः, (यथेत्यादि) उपगमः— संबन्धः, तेजश्शब्देन भूतसूक्ष्मांशका विवक्षिताः, आदिशब्दविवक्षितार्थमाह ( तथेति ) अन्येन संयुज्य पदार्थान्तरसम्बन्धेऽप्यन्यतरवाचिशब्दनिर्देशे दृष्टान्तमाह (यथेति)।

* भावप्रकाशिका *

न्धनः, तेजश्शब्देन भूतसूक्ष्मांशा विवक्षिता इति वाक्यस्यानन्तरम् । उपगमस्सम्बन्ध इति पाठस्समीचीनः ( अन्यतरवाचिशब्दनिर्देश इति )

१. छा० ६-६-५॥ २. बृ० ६-३-३८॥ ३. ब० ६-४-२॥

**यमुनाया गङ्गया संयुज्य सागरगमनेऽपि यमुना सागरं गच्छतीति वचो न विरुद्ध्यते, तद्वत् ॥ ४ ॥**

अध्यक्षाधिकरणं समाप्तम् ॥



* श्रुतप्रकाशिका *

इतरे त्रयोऽप्यश्रुतत्वादिति पूर्वपक्षहेतुमाहुः, अतिरिक्तहेतौ सम्भवति श्रवणमात्रस्य हेतुत्वायोगादन्यप्रायन्यायो भाष्ये दर्शितः । सिद्धान्ते च स्रुघ्नात् पाटलिपुत्रगमनस्य मथुराव्यवधानेऽपि स्रुघ्नात् पाटलिपुत्रगमनव्यवहारो

* भावप्रकाशिका *

अन्यतरमात्रवाचिशब्दनिर्देश इत्यर्थः । भाष्ये— यमुनासागरं गच्छतीति वचो न विरुध्यते तद्वदिति, नन्वनेनैव दृष्टान्तेन प्राण उपगमनश्रुतेरेव सद्वारकत्वं किं न स्यात्, किञ्च यथा बाह्येन्द्रियव्यापारोपरमानन्तरमपि मनोव्यापारदर्शनात् 'वाङ् मनसि सम्पद्यते' इति श्रुतिः, यथा च बाह्यान्तरज्ञानोपरमानन्तरमपि श्वासादिलक्षणप्राणव्यापारदर्शनात् 'मनः प्राणे' इति श्रुतिः , तथा श्वासादिप्राणव्यापारोपरमानन्तरमपि देहे क्वचिदौष्ण्यलक्षणतेजोव्यापारदर्शनात् 'प्राणस्तेजसी'ति श्रुतेरपि तत्साम्येन साक्षात्तेजस्सम्पत्तिपरत्वमेव युक्तमिति चेन्न , यथा 'वायोरग्निः अग्नेरापः' इति श्रवणस्य 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इत्यस्याविरोधायाऽग्न्यादिशब्दस्याऽग्न्याद्यवस्थपरमात्मपरत्वम्, एवमात्मोपगमश्रुत्यनुरोधाय भूतसूक्ष्मवाचितेजश्शब्दस्य तच्छरीरकजीवपरत्वेनाविरोधोपपत्तेः । किञ्च प्राणस्तेजसीति श्रुत्यनुरोधेन जीवोपगमात्प्रागेव तेजस्सम्पत्तौ 'तेजः परस्यां देवताया'मिति परदेवतासम्पत्तिश्रवणात् जीवोपगमस्य निरवकाशत्वप्रसङ्गेन क्वचिन्निवेशेऽवश्यंभाविनि सहोत्क्रमणलिङ्गानुगृहीतात्मोपगमनश्रुत्यनुरोधात् जीवसंपत्त्यनन्तरमेव तेजःसम्पत्त्युपपत्तेश्चेति भावः ( अश्रुतत्वादिति पूर्वपक्षहेतुमाहुरिति ) यद्यपि प्राणस्तेजसीति श्रुतेरनतिशंक्यत्वात् यथाश्रुते तेजस्येव सम्पत्तिः, अश्रुतजीवसम्पत्तिपरिहारकल्पनाया अन्याय्यत्वादिति परैः पूर्वपक्षयुक्तितया श्रुतिरेव वर्णिता, तथापि श्रुत्यनुग्राहकतया परैरश्रुतकल्पनाया

## भूतेषु तच्छ्रुतेः ॥ ५ ॥

४ अधिकरणम्

"प्राणस्तेजसि" इति जीवसंयुक्तस्य प्राणस्य तेजसि संपत्तिरुक्ता ; सा सम्पत्तिः किं तेजोमात्रे ? उत संहतेषु सर्वेषु भूतेष्विति विशये तेजोमात्रश्रवणात्तेजसि— इति प्राप्त उच्यते– भूतेषु– इति । भूतेषु संपद्यते,

* श्रुतप्रकाशिका *

दृष्टान्तितः, ततोऽपि गङ्गासाहित्यकण्ठोक्तिरहितयमुनासागरगमनव्यवहारदृष्टान्त उचितः, पाटलिपुत्रगमने स्रुघ्नमथुरयोः सहगमनाभावात्, इह तु सहगमनसद्भावात् गङ्गास्थानीयजीवापेक्षया यमुनास्थानीयस्य प्राणस्य गुणभावाच्च, सहावस्थानस्य श्रुतिं 'स विज्ञानो भवती'त्युदाहरन्ति– विज्ञायतेऽनेनेति व्युत्पत्त्या विज्ञानानीन्द्रियाणि , सेन्द्रिय इत्यर्थः । तस्याविशदार्थत्वात् प्रतिष्ठाविषयश्रुत्यन्तरमुदाहृतं भाष्ये ॥ ४ ॥

अध्यक्षाधिकरणं समाप्तम् ॥

भूतेषु तच्छ्रुतेः ॥ ५ ॥ सङ्गतिः स्फुटा, किमत्र भूतान्तरसंसृष्टतेजस्संयोगः ? उत तेजोमात्रसंयोग इति, किं तेजःशब्दस्तेजोमात्रपरः ? उत भूतान्तरसंसृष्टपरः, किं 'पृथिवीमय आपोमयः' इत्यादिवाक्यं युगपदनेकभूतसंसर्गं दर्शयति ? नेति, किं त्रिवृत्करणश्रुतिः पञ्चीकरणस्मृतिश्च संहतानामेव

* भावप्रकाशिका *

अन्याय्यत्वादिति हेतुरप्युपन्यस्त इति कृत्वा तथोक्तमिति द्रष्टव्यम् , ( अश्रवणमात्रस्य हेतुत्वायोगादिति ) 'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति' इति प्रदेशान्तरे श्रवणे विद्यमाने श्रवणसामान्याभावस्य हेतुत्वायोगादित्यर्थः ( सहावस्थानस्य श्रुतिमिति ) तत्सहिततयाऽवस्थानं सहावस्थानं, तदाधारत्वेनावस्थानमिति यावत्, न तु सहावस्थानं सामानाधिकरण्यमिति मन्तव्यम् । परैर्जीवाधिकरणकावस्थान एव स विज्ञान इत्यस्य प्रमाणीकरणादिति द्रष्टव्यम् ॥ ४ ॥ ४ ॥ इत्यध्यक्षाधिकरणम् ॥

कुतः ? तच्छ्रुतेः "पृथिवीमय आपोमयः तेजोमयः" इति जीवस्य सञ्चरतः सर्वभूतमयत्वश्रुतेः ॥ ५ ॥

ननु तेजःप्रभृतिष्वेकैकस्मिन् क्रमेण संपत्तावपि 'पृथिवीमयः' इत्यादिका श्रुतिरुपपद्यते, अत आह—

नैकस्मिन्दर्शयतो हि ॥ ६ ॥

नैकस्मिन्, एकैकस्य कार्याक्षमत्वात् । दर्शयतो ह्यक्षमत्वं श्रुतिस्मृती [1]"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इति नामरूपव्याकरणयोग्यत्वाय त्रिवृत्करणमुपदिश्यते । [2]"नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः । समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः । महादाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति

* श्रुतप्रकाशिका *

कार्यसामर्थ्यं दर्शयतो नेति, न चेत् पृथिवीमय इत्यादिना यौगपद्यप्रदर्शनाभावेन तेजश्शब्दस्य तेजोमात्रपरतया तेजोमात्रसंयोगः स्यात् । दर्शयतश्चेत्—पृथिवीमयत्वादिश्रुत्या युगपदनेकभूतसंसर्गप्रदर्शनेन तेजश्शब्दस्य भूतान्तरसंसृष्टतेजःपरतया भूतान्तरसंसृष्टतेजस्संयोगः स्यात् ।

(सर्वभूतमयत्वश्रुतेरिति) भूतमात्रे प्रकृतेऽपि सामर्थ्यात् भूतमयत्वपरामर्शित्वसिद्धिस्तच्छब्दस्य फलितेति भावः ॥ ५ ॥

अनन्तरसूत्रशङ्कामाह (नन्विति)।

नैकस्मिन्दर्शयतो हि ॥ ६ ॥ पञ्चीकृतेषु त्रिवृत्कृतेषु वा भूतेष्वेकैकमेव कार्यसमर्थं, न त्वत्रिवृत्कृतमेकैकं कार्यसमर्थम्, 'आपः पुरुषवचसो

१. छा० ६-३-२ । ४-५    २. विष्णु० १-अं० २-अ० ५२-५३ श्लो० ।

ते" इति । अतः 'प्राणस्तेजसि' इति तेजश्शब्देन भूतान्तरसंसृष्टमेव तेजोऽभिधीयते । अतो भूतेष्वेव सम्पत्तिः ॥ ६ ॥

भूताधिकरणं समाप्तम् ॥



* श्रुतप्रकाशिका *

भवन्ति' इत्यत्र त्रिवृत्कृतानामेवापां कार्यकरत्वदर्शनात्, अजहल्लक्षणया तेजःशब्दस्त्रिवृत्कृतान् भूतसूक्ष्मांशानाह ।

अत्र परे चापरे च 'नैकस्मि'न्निति सूत्रान्तमेकमधिकरणं वर्णयन्ति, कथं तर्हि प्राणस्तेजसीति श्रुतिरित्यपेक्षायां तन्निर्वाहार्थं 'भूतेषु तच्छ्रुते'रिति सूत्रं, सः प्राणसंपृक्तोऽध्यक्षस्तेजःसचिवभूतेषु वर्तत इत्यवगन्तव्यं—तच्छ्रुतेः—प्राणस्तेजसीति श्रुतेरिति व्याख्याय तावता प्राणस्य साक्षात्तेजःप्राप्तिश्रुतिविरोधस्यापरिहृतत्वात् स्रुघ्नपाटलिपुत्रदृष्टान्तेन विरोधं शमयन्ति, एकमेव तेजः श्रूयते न भूतान्तरमित्यपेक्षायां नैकस्मिन्निति सूत्रमवतारयन्ति, दर्शयतः प्रश्नप्रतिवचने 'आपः पुरुषवचसः' इति, व्याख्यातं त्र्यात्मकत्वादिति, 'पृथिवीमय आपोमयः' 'अण्व्यो मात्रा विनाशिन्यो दशार्धानान्तु याः स्मृताः । ताभिः सार्धमिदं सर्वं सम्भवत्यनुपूर्वशः' इति श्रुतिस्मृती दर्शयत इति वेति, भूतेष्विति सूत्रे दृष्टान्तस्य कण्ठोक्त्यभावादभिप्रायकल्पनायां साक्षात्तेजःसम्पत्तिश्रुतिविरोधपरिहारो दृष्टान्ताभिप्रायकल्पनं च 'सोऽध्यक्षे' इति सूत्रे एव कर्तुं युक्तं, तत्र जीवसम्पत्तिपरतायाः स्फुटत्वात् , भूतेष्विति सूत्रे जीवसहितप्राणनिर्देशाभावात् भूतशब्दतद्गतबहुवचनस्वारस्येन सर्वभूतसंसर्गपरत्वस्य स्फुटत्वात्, तत्र च व्युदसनीयशङ्काभेदसद्भावात् अधिकरणभेदस्य न्याय्यत्वात् । ननु नैकस्मिन्नित्यनेन

* भावप्रकाशिका *

( व्याख्यातं त्र्यात्मकत्वादितीति ) त्र्यात्मकत्वात्तु भूयस्त्वादिति पाठः, शाङ्करभाष्ये तथा दर्शनादिति द्रष्टव्यम् , अण्व्यो मात्रास्सूक्ष्माः दशार्धानां— पञ्चानामित्यर्थः ( जीवसहितप्राणेति ) ततश्च सः प्राणसंपृक्ताध्यक्ष इति परव्याख्यानमनुपपन्नमिति भावः ( तत्र च व्युदसनीयेति ) स्फुटसूत्रार्थव्युदसनीय-

## समाना चासृत्युपक्रमादमृतत्वं- चानुपोष्य ॥ ७ ॥

५ अधिकरणम् इयमुत्क्रान्तिः किं विद्वदविदुषोः समाना ? उताविदुष एवेति चिन्तायाम्, अविदुष एवेति प्राप्तम् । कुतः ? विदुषोऽत्रैवामृतत्ववचनादुत्क्रान्त्यभावात् । विदुषो ह्यत्रैवामृतत्वं श्रूयते "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।

* श्रुतप्रकाशिका *

पुनरुक्तिरिति चेन्न, तस्य च व्युदसनीयशङ्कान्तरस्योपन्यस्तत्वात् ।— अन्ये त्वधिकरणभेदं वर्णयन्त एव 'तच्छ्रुते'रिति 'प्राणस्तेजसी'ति श्रुतेरिति व्याचक्षते, तदयुक्तं तत्र तेजोमात्रश्रवणेन पूर्वपक्षबीजतया तन्निवारणक्षमत्वाभावात्, अतः पृथिवीमय इत्यादिश्रुतिरेव तत्रोदाहार्या, अतो नैकस्मिन्नित्यत्र त्रिवृत्करणपञ्चीकरणवाक्ये एवोदाहर्तव्ये, पञ्चाग्निविद्यावाक्यस्य दशार्धानामिति स्मृतेश्च पुनःसम्भवविषयतया विद्वदविदुषोः समानत्वाभावात् भाष्ये तदनादरः ॥ ६ ॥

भूताधिकरणं समाप्तम् ॥

समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥ सङ्गतिः स्फुटा, किमियमुत्क्रान्तिर्विद्वदविदुषोः समाना ? उताविदुष एवेति, 'तयोर्ध्वमायन्नमृतत्वमेति' इति श्रुतिः किं विदुष उत्क्रान्तिमवगमयति ? नेति, किमेषा श्रुतिरिहामृतत्वश्रुत्युत्क्रान्तिनिषेधश्रुतिभ्यां व्याहन्यते, नेति, इहामृतत्वं

* भावप्रकाशिका *

शङ्काया एव पूर्वपक्षस्योचितत्वादिति भावः ( पुनस्सम्भवविषयतयेति ) 'अण्व्यो मात्रा विनाशिन्य' इति स्मृतेश्च 'महदाद्या विशेषान्ता' इति स्वोदाहृतस्मृतेश्च, वैषम्यमनुपूर्वश इति पुनस्सम्भवप्रतिपादकपदसम्भवासम्भवाभ्यामिति द्रष्टव्यम् ॥ ७ ॥

इति भूताधिकरणम् ।

अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति—

एवं प्राप्तेऽभिधीयते— समाना चासृत्युपक्रमात्—इति, विदुषोऽप्यासृत्युपक्रमादुत्क्रान्तिः समाना। आसृत्युपक्रमात्—आगत्युपक्रमात्, नाडीप्रवेशात् प्रागित्यर्थः। विदुषोऽपि हि नाडीविशेषेणोत्क्रम्य गतिः श्रूयते [1]"शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति। एवं नाडीविशेषेण गतिश्रवणाद्विदुषोऽप्युत्क्रान्तिरवर्जनीया। सा च नाडीप्रवेशात् प्राग्विशेषाश्रवणात्समाना। तत्प्रवेशदशायां च विशेषः श्रूयते [2]"तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः" इति। "शतं चैका च हृदयस्य" इत्यनया श्रुत्यैकार्थ्यात् मूर्ध्नो निष्क्रमणं विद्वद्विषयम्, इतरदविद्वद्विषयम्, यदुक्तं

---

* श्रुतप्रकाशिका *

किमघाश्लेषविनाशरूपम्? उत सर्वबन्धमोक्षरूपं? निषिध्यमाना चोत्क्रा
किं शरीरापादाना? उत शारीरापादानेति च, यदेहामृतत्वं सर्वबन्धनि
त्तरूपम्, उत्क्रान्तिश्च शरीरापादाना, तदा तद्विषयश्रुतिभ्यां तयोर्ध्वमायन्नि
श्रुतेर्व्याघातादविदुष एवोत्क्रान्तिः, यदेहामृतत्वमघाश्लेषविनाशरूपं, निषि
त्क्रान्तिश्च शारीरापादाना, तदा तद्विषयश्रुतिभ्यामूर्ध्वमायन्निति श्रुतेरविरो
विदुषोऽप्युत्क्रान्तिं सावगमयति— इत्युत्क्रान्तिर्विद्वदविदुषोः समाना स्या

---

1. कठ० २-६-१६ ॥  2. बृ० ६-४-२ ॥

विदुषोऽत्रैवामृतत्वं श्राव्यते इति, तत्रोच्यते- अमृ-तत्वं चानुपोष्य- इति। चशब्दोऽवधारणे। अनुपोष्य शरीरेन्द्रियादिसंबन्धमदग्ध्वैव, यदमृतत्वम्-उत्तरपूर्वाघयोरश्लेषविनाशरूपं प्राप्यते, तदुच्यते "यदा सर्वे प्रमुच्यन्ते" इत्यादिकया श्रुत्येत्यर्थः। "अत्र ब्रह्म समश्नुते" इति चोपासनवेलायां यो ब्रह्मानुभवस्तद्विषयमित्यभिप्रायः ॥ ७ ॥

तदाऽपीतेः संसारव्यपदेशात् ॥ ८ ॥

अवश्यं च तत्-अमृतत्वमदग्धदेहसम्बधस्यैवेति विज्ञेयम्, कुतः? आऽपीतेः संसारव्यपदेशात्, अपीतिरप्ययो ब्रह्मप्राप्तिः। सा चार्चिरादिना मार्गेण देशविशेषं गत्वेति वक्ष्यते, आतदवस्थाप्राप्तेः संसारो देहसम्बन्धलक्षणो हि व्यपदिश्यते, "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति। 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्

---

* श्रुतप्रकाशिका *

पूर्वपक्षहेतुमाह (विदुष इति)।

राद्धान्ते विष्वगिति, अन्या नाड्यः विष्वग्वितताः ताश्चामुमुक्षूणामुत्क्रमणार्था इत्यर्थः, तेन प्रद्योतेन-प्रकाशेन 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेनैष आत्मा निष्क्रामति' इति पूर्वं श्रुतेः, मूर्ध्नो निष्क्रामत एव ऊर्ध्वया नाड्या प्रकाशितद्वारया निष्क्रमणमित्यर्थः-वस्तुसामर्थ्यात्, (अनुपोष्य) 'उष दाहे' इति धातुः ॥ ७ ॥

तदाऽपीतेः संसारव्यपदेशात् ॥ ८ ॥ उत्क्रान्तस्यापि गच्छतः सूक्ष्मशरीरसंबन्धादाऽपीतेः संसार इत्यभिप्रायः । ब्रह्मणः सर्वगतत्वादत्रैव हि

प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानि" इति च ॥ ८ ॥

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

इतश्च विदुषोऽपि बन्धो नात्र विदग्धः, यतः सूक्ष्मं शरीरमनुवर्त्तते । कुत इदमवगम्यते ? । प्रमाणतस्तथोपलब्धेः— उपलभ्यते हि देवयानेन पथा गच्छतो विदुषः "तं प्रति ब्रूयात् सत्यं ब्रूयात्" इति चन्द्रमसा संवादवचनेन शरीरसद्भावः । अतः सूक्ष्मशरीरमनुवर्त्तते । अतश्च बन्धो न दग्धः ॥ ९ ॥

नोपमर्देनातः ॥ १० ॥

अतः "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति वचनं न बन्धोपमर्देनामृतत्वं

---

* श्रुतप्रकाशिका *

ब्रह्म प्राप्तमिति शङ्काया व्यावृत्त्यर्थमाह (सा चार्चिरादिनेति) ॥ ८ ॥

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥ पूर्वसूत्राभिप्रेतसूक्ष्मशरीरसम्बन्धे प्रमाणमिहोच्यते ॥ ९ ॥

नोपमर्देनातः ॥ १० ॥ जीवन्मुक्तिनिराचिकीर्षयेदं सूत्रमुक्तम्, उपासनविधानात्तस्याप्रयाणादनुवृत्तिश्रुतेरुत्क्रान्तिश्रुतेरर्चिरादिमार्गश्रुतेर्देशविशेषप्राप्त्या सर्वबन्धविमोक्षश्रुतेरीदृशानेकश्रुतीनां बाधप्रसङ्गात्प्रत्यक्षविरोधाच्च जीवन्मुक्तिरनुपपन्नेति भावः । तदुक्तं भगवताऽऽपस्तम्बेन 'वेदानिमं लोकममुञ्च परित्यज्यात्मानमन्विच्छेत् बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धं बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत' इति, शास्त्रैरिति बहुवचनेनानेकशास्त्रविरोधो विवक्षितः, विप्रतिषिद्धं–विशेषप्रतिषिद्धं, प्रकरणसमवत्र सम-

वदति ॥ १० ॥

अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥

अस्य सूक्ष्मशरीरस्य क्वचिद्विद्यमानत्वोपपत्तेर्विदुषः प्रक्रान्तमरणस्य मरणात्प्रागूष्मा स्थूलशरीरे क्वाचित्क उपलभ्यते । न च स्थूलस्यैव शरीरस्यायमूष्मा अन्यत्रानुपलब्धेः, ततश्चोष्मणः क्वचिदुपलब्धिर्विदुषः सूक्ष्मशरीरस्योत्क्रान्तिनिबन्धनेति गम्यते, तस्माद्विदुषोऽप्यासृत्युपक्रमात्समानोत्क्रान्तिरिति सुष्ठूक्तम् ॥ ११ ॥

पुनरपि विदुष उत्क्रान्तिर्न सम्भवतीत्याशङ्क्य परिह्रियते—

* श्रुतप्रकाशिका *

बलेन प्रतिरोधः, कालात्ययापदिष्टवदधिकबलेन विरोधः, अनेकशास्त्रविरोधश्चादिति भावः ॥ १० ॥

अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥ स्थूलशरीरस्योष्मा सार्वत्रिकः 'सन्तापयति स्वं देहमापादतलमस्तकम्' इति श्रुतेः, अत उत्क्रान्तौ क्वाचित्क ऊष्मा सूक्ष्मशरीरस्य क्वाचित्कत्वेन, तत्रैव सर्वदेहव्याप्ताग्निशिखायाः क्रमेणोपसंह्रियमाणत्वादित्यर्थः ॥ ११ ॥

( पुनरपीति ) पूर्वमिहामृतत्वश्रुतिनिबन्धन उत्क्रान्त्यसम्भवः परिहृतः ।

* भावप्रकाशिका *

वस्तुसामर्थ्यादिति पूर्वेणान्वयः, स्थूलशरीरस्योष्मा सार्वत्रिक इति ग्रन्थस्यानन्तरं सूक्ष्मदेहस्य सार्वत्रिकत्वादिति शेषोऽध्याहर्तव्यः—इति 'सन्तापयति स्वं देहमापादतलमस्तकम्' इत्यग्निशिखाप्रयुक्तः स्थूलशरीरे आपादतलमभिव्याप्तः सन्तापशब्दित ऊष्मा सूक्ष्मशरीरसार्वत्रिकत्वनिबन्धनः, नतु स्थूलशरीरत्वनिबन्धन इत्यर्थः, ( अग्निशिखायाः क्रमेणोपसंह्रियमाणत्वादिति ) नच अग्निशिखायाः क्वाचि-

## प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् ॥ १२ ॥

यदुक्तं विदुषोऽप्युत्क्रान्तिः समानेति तन्नोपपद्यते, विदुष उत्क्रान्तिप्रतिषेधात्, तथा हि– "स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्वपक्रामति" इत्युपक्रम्य "तेन प्रद्योतेनैष आत्मा निष्क्रामति तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इत्यविदुष उत्क्रान्तिप्रकारमभिधाय "अन्यन्नवतरं कल्या-

---

* श्रुतप्रकाशिका *

अथोत्क्रान्तिनिषेधश्रुतिनिबन्धनस्तदसम्भवः परिह्रियत इत्यर्थः ॥ ११ ॥

प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम् ॥ १२ ॥ ( यदुक्तमित्यादि ) 'तेजोमात्राः–भूतसूक्ष्मान् , हृदयमेवान्वपक्रामति' हृदयान्निष्क्रामतीत्यर्थः, तेन प्रद्योतेनेत्यादिवाक्यस्य कथमविद्वदुत्क्रान्तिपरत्वमिति चेत्–

छ भावप्रकाशिका छ

त्कत्वादेवोष्मणः काचित्कत्वोपपत्तेर्नतस्य सूक्ष्मशरीरकाचित्कत्वनिबन्धनत्वमिति वाच्यं, अग्निशिखाकाचित्कत्वस्यापि सूक्ष्मशरीरकाचित्कत्वनिबन्धनत्वादित्यभिप्रायः, यद्वा भूतसूक्ष्मान्तर्गततेजोंशातिरिक्ताग्निशिखाया अभावादिति भावः ॥ ७ ॥

( हृदयान्निष्क्रामतीत्यर्थ इति ) निष्क्रमितुमुद्युक्त इत्यर्थः, एतदपि फलितार्थकथनम्, 'अथैनमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्रास्समभ्याददानो हृदयमेवान्वपाक्रामति' इत्युक्तत्वात् 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामती' ति पठ्यते, अत एतत्सन्दर्भानुसारात् निर्गममार्गापरिज्ञानेनांतर्हृदय एव परिभ्रमति, पश्चाद्धृदयाग्रं प्रद्योतते तेनैष आत्मा निष्क्रामतीत्येवार्थः, तस्यैव स्वरसतः प्रतीतेः– इति द्रष्टव्यम्। केचित्तु हृदयाग्रप्रद्योतनं हृदयैकदेशान्निष्क्रान्तस्य

णतरं रूपं कुरुते" इति देहान्तरपरिग्रहं चाभिधाय "प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययं तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण इति तु कामयमानः" इत्यविद्वद्विषयं परिसमाप्य "अथाकामयमानो योऽकामोनिष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्र-

* श्रुतप्रकाशिका *

उच्यते चतुर्मुखलोकगन्तुरुपासकस्यार्चिरादिकाङ्क्षति पूर्वपक्षी मन्यते, न तु मुक्तस्य, तस्मादविदुष इत्युक्तं पूर्वपक्षे, सिद्धान्ते तु विद्वद्विषयमेवेदं वाक्यम्, 'अकामयमानो योऽकामो निष्कामः' इत्यत्रार्थपुत्रवित्तविषयैषणात्रयराहित्यं विवक्षितम् । उदस्मात् प्राणाः क्रामन्ति—उत्क्रामन्तीत्यन्वयः, समवलीयन्ते— अत्रैव शरीरे लीयन्त इत्यर्थः । स ऊच्छ्वयत्याध्मातः— वायुना पूरित उच्छूनो भवतीत्यर्थः । ( तन्नेत्यादि ) प्रकृतपरामर्शिनस्तच्छब्दस्य शारीरपरत्वात् तस्मात्प्राणानुत्क्रान्तिरुच्यत इत्यर्थः । चोदयति— ( तस्येति ) षष्ठ्यन्ततच्छब्दनिर्दिष्टः शारीरोऽस्तु, तत्सम्बन्धिनां प्राणाना-

५ भावप्रकाशिका ५

मार्गप्रदर्शनायोपयुज्यते, अतो यथाश्रुतार्थेऽपि नानुपपत्तिरित्याहुः, तेन प्रद्योतेनेत्यादिवाक्यस्येत्यादिचोद्यस्याऽयमर्थः— उत्क्रान्तेरविद्वन्मात्रविषयत्वे अर्चिरादिगतिरपि विदुषो न प्रसजेत्, अत उत्क्रान्तिवचनस्याविद्वन्मात्रविषयत्वमिति वक्तुं न शक्यत इति, तस्मादविदुष इत्युक्तमिति शेषः ( सिद्धान्ते तु विद्वद्विषयमेवेदमिति ) एवकारो भिन्नक्रमः, इदमेव वाक्यं विद्वद्विषयं अविद्वद्विषयमपि भवतीत्यर्थः, मूर्ध्न इत्यस्य विद्वद्विषयत्वेन पूर्वं व्याख्यातत्वात्, ननु हृदयप्रद्योतनस्य सर्वसाधारण्ये तदोकोग्रज्वलनमित्यत्र भाष्ये अग्रज्वलनस्य विद्यासामर्थ्यलब्धहार्दानुग्रहाधीनत्वप्रतिपादनात् तद्विरोध इति चेत्, शताधिकनाडीविवेचकज्वलनविशेषस्य तदधीनत्वपरत्वप्रतिपादनपरतया विरोधाभावादिति भावः ( इत्यत्रार्थपुत्रवित्तविषयैषणात्रयरा-

ह्याप्येति" इति विदुष उत्क्रान्तिः प्रतिषिध्यते, तथा पूर्वत्रार्तभागप्रश्नेऽपि विदुष उत्क्रान्तिप्रतिषेधो दृश्यते "अपपुनर्मृत्युं जयति" इति विद्वांसं प्रस्तुत्य "याज्ञवल्क्य इति होवाच यत्रायं पुरुषो म्रियत उदस्मात्प्राणा उत्क्रामन्त्याहो" इति पृष्टे "नेति होवाच याज्ञवल्क्योऽत्रैव समवलीयन्ते स उच्छ्वयत्याध्मातो मृतः शेत" इति । अतो विद्वानिहैवामृतत्वं प्राप्नोतीति चेत्—तन्न, शारीरात् प्रत्यगात्मनः प्राणानामुत्क्रान्तिर्ह्यत्र प्रतिषिध्यते, न शरीरात्, 'न तस्य प्राणा उत्क्रामन्ती' त्यत्र तच्छब्देन 'अथाकामयमानः' इति प्रकृतः शारीर एव परामृश्यते नाश्रुतं शरीरम् । तस्येति षष्ठ्या प्राणानां सम्बन्धित्वेन शारीरो निर्दिष्टः न तूत्क्रान्त्यपादानत्वेन, उत्क्रान्त्यपादानन्तु शरीरमेवेति चेन्न अपादानापेक्षायामश्रुताच्छरीरात् सम्बन्धितया श्रुत-

* श्रुतप्रकाशिका *

मुत्क्रान्त्यपादानं शरीरमेवेत्यर्थः, षष्ठ्या उपकरणोपकरणित्वलक्षणसम्बन्धपरत्वमभ्युपगम्य परिहरति ( नेति ) अश्रुतस्य धर्मिणस्तस्यापादानत्वस्य चोभयोः कल्प्यत्वादपि सिद्धरूपस्यैव धर्मिण अपादानत्वमात्रकल्पनं युक्तमित्यर्थः । षष्ठ्या एवापादानत्वपरतामाह ( किञ्चेति ) प्राणानां जीवसम्बन्धकथननैरर्थ्यात्

ॐ भावप्रकाशिका ॐ

हित्यं विवक्षितमिति ) अत्रार्थशब्दः स्वर्गादिलोकपरः, 'ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय' इतिश्रुतेः, भाष्ये—अपपुनर्मृत्युंजयतीति विद्वांसं प्रस्तुत्येति संसारतरणरूपफलकीर्तनस्य विद्वद्विषयत्वाव-

स्यात्मन एव सन्निहितत्वेनापादानतयाऽपि ग्राह्यत्वात् । किञ्च प्राणानां जीवसम्बन्धितयैव प्रज्ञातानां तत्सम्बन्धकथने प्रयोजनाभावात् सम्बन्धमात्रवाचिन्या षष्ठ्या अपादानमेव विशेष इति निश्चीयते, यथा नटस्य शृणोतीति। न चात्र विवदितव्यं स्पष्टो ह्येकेषां माध्यन्दिनानामाम्नाये शारीरो जीव एवापादानमिति, योऽकामो निष्काम आप्तकाम आत्मकामो न तस्मात्प्राणा उत्क्रामन्तीति । शारीरात्प्राणानामुत्क्रान्तिप्रसङ्गाभावात्तत्प्रतिषेधो नोपपद्यते इति चेन्न तस्य तावदेव चिरमिति विदुषः शरीरवियोगकाले ब्रह्मसम्पत्तिवचनेन प्राणानामपि तस्मिन् काले शारीराद् विदुषो वियोगः प्रसज्यते,

---

* श्रुतप्रकाशिका *

षष्ठ्या अपादानवाचकत्वाच्च शारीर एवापादानमित्यर्थः, नायमर्थः कथंचिदर्थानुगुण्यावगम्यः अपि तु कण्ठोक्तश्चेत्याह (न चात्रेति) स्पष्टो ह्येकेषामिति व्याख्येयं पदद्वयं व्याचष्टे (माध्यन्दिनानामिति) यथा योविज्ञाने तिष्ठन्नित्यत्र विज्ञानशब्दः समानप्रकरणस्थेन य आत्मनि तिष्ठन्नित्यात्मशब्देनात्मपरो निश्चीयते तथा तस्येति षष्ठ्यन्तपदं तस्मादिति पञ्चम्यन्तपदेन पञ्चम्यर्थे निश्चीयते इत्यर्थः । चोदयति (शारीरादिति) प्रसक्तस्य हि प्रतिषेधः अत्र तदभावान्न निषेधोपपत्तिरित्यर्थः । परिहरति (नेति) शरीरवियोगकाले—प्रारब्धकर्महेतुकचरमशरीरवियोगकाल इत्यर्थः । तदानीं शारीरात् प्राणानां वियोगस्यानिष्टत्वे सति हि

छ भावप्रकाशिका छ

श्यंभावात् विद्वांसमित्युक्तम् (षष्ठ्या अपादानवाचकत्वाच्चेति) अपादा-

ततश्च देवयानेन पथा ब्रह्मसम्पत्तिर्नोपपद्यत इति न तस्य प्राणा उत्क्रामन्ति देवयानेन पथा ब्रह्मप्राप्तेः प्राग् जीवाद्विदुषोऽपि प्राणा न विश्लिष्यन्तीत्युच्यते। आर्तभागप्रश्नोऽपि यदा विद्वद्विषयः तदाऽयमेव परिहारः, स त्वविद्वद्विषयस्तत्र प्रश्नप्रतिवचनयो- र्ब्रह्मविद्याप्रसङ्गादर्शनात्, तत्र हि ग्रहातिग्रहरूपेणे- न्द्रियेन्द्रियार्थस्वभावोऽपामग्न्यन्नत्वं म्रियमाणस्य जी- वस्य प्राणापरित्यागो मृतस्य नामवाच्यकीर्त्यनुवृ- त्तिस्तस्य च पुण्यपापानुगुणगतिप्राप्तिरित्येतेऽर्थाः प्रश्नपूर्वकं प्रत्युक्ताः, तत्र चापपुनर्मृत्युं जयतीत्यपा- मग्न्यन्नत्वज्ञानादग्निजय एव मृत्युजय उच्यते अतो नात्र विदुषः प्रसङ्गः, अविदुषस्तु प्राणाऽनुत्क्रान्ति- वचनं स्थूलदेहवत्प्राणा न मुञ्चन्ति, अपि तु भूतसूक्ष्मवज्जीवं परिष्वज्य गच्छन्तीति प्रतिपाद-

---

* श्रुतप्रकाशिका *

तन्निषेधः कार्य इत्यत्राह (ततश्च देवयानेनेति) न तस्य प्राणा इत्य- स्यार्थमाह (न तस्येति) (आर्तभागेत्यादि) ग्रहातिग्रहरूपेण—ग्रहः पात्रविशेषः, तत्स्थद्रव्यमतिग्रहः, तद्रूपेण आकर्षकरज्जुतत्समाकृष्यरूपेण वा अपामग्न्यन्नत्वम् अग्नेरपां भक्षकत्वानुसन्धानं विहितं फलविशेषाय उद- स्मात्प्राणाः क्रामन्तीत्यादिना जीवस्य प्राणापरित्यागकथनम्, "अपपुनर्मृत्युं जयति" मृत्युशब्दवाच्यमग्निमपजयति, उदस्मादित्यादि अविद्वद्विषयं चेत्कथं प्राणा-

* भावप्रकाशिका *

दानरूपसम्बन्धस्य शेषत्वेन विवक्षासम्भवादिति भावः (अग्नेरपां भक्षक- त्वानुसन्धानमिति) 'अग्निर्वै मृत्युः सोऽपामन्नम्' इति अपामग्न्यन्नत्वोपासनमु-

**मावासभूत इत्यन्यत्र श्रूयते "योऽयं पवत एष देवानां गृहा" इति ॥ २ ॥**

वाय्वधिकरणं समाप्तम् ।

* श्रुतप्रकाशिका *

तदनन्तरं वायुरिति 'वायुमब्दा' दिति सूत्रनिर्देशः छान्दोग्यश्रुत्यपेक्षः, तत्र संवत्सरस्य पठितत्वादिति, तदयुक्तं, देवलोकवायुशब्दयोः सामान्यविशेषरूपेणैकार्थत्वे सम्भवत्यर्थभेदकल्पनानुपपत्तेः, देवलोकादूर्ध्वं वायोर्निवेशे सति 'देवलोकादादित्य' मिति श्रौतक्रमभङ्गश्च देवलोकस्य सूत्रेणानिरूपितत्वं च स्यात्, वायोरब्दादूर्ध्वं निवेशपरत्वादस्य सूत्रान्तराभावाच्च, संदिग्धेऽर्थे न्यायश्च वक्तव्य एव 'स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' 'देवलोकादादित्य' मिति श्रौतक्रमसाम्यात् भवति च संशयः, वायुदेवलोकयोरेकत्वे च न संशयसम्भवः, अत एव 'अविशेषविशेषाभ्या' मिति सौत्रपदस्य वायोरग्न्यानन्तर्ये शाब्दक्रमविशेषाभावादादित्यात् पूर्वत्वे ऊर्ध्वशब्देन विशेषावगमाच्चेति व्याख्यानमप्ययुक्तम्, अतो यथाभाष्यमेव सूत्रार्थः ।—अन्यैस्तु वायुः किमग्नेरुपरि निवेशयितव्यः ? उत संवत्सरस्योपरि ? उतादित्यस्याधस्तादिति संशय उक्तः । तदचतुरम्, अग्नेरानन्तर्यपक्षस्तावन्मन्दः, तस्य पाठक्रमप्रतिपन्नस्य श्रौतक्रमेण स्फुटबाधात्, संशयशिरोन्तरद्वयन्तु वायुदेवलोकयोरेकत्वेऽनुत्थितं स्यात्, अतः पृथक्त्वैकत्वे संशयितव्ये, एकत्वे नियमेन वायुप्राप्तिः, पृथक्त्वे विकल्पेन प्राप्तिश्च फलम्, अतः सहेतुकः सफलः संशयो

* भावप्रकाशिका *

द्रष्टव्यम्, ( अनन्तरं वायुरितीति ) 'देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोक' मिति पाठक्रमात् अर्चिरनन्तरमेव वायोर्निवेश इति पूर्वः पक्षः, 'स वायुमागच्छति तस्मै स तत्र परिजिहीते' इति वायुप्रत्तेन मार्गेण आदित्यगमनश्रवणात् कौषीतकिपाठक्रमं बाधित्वा आदित्यात्पूर्वं वायोर्निवेश इति सिद्धान्तः, सूत्रमप्यादित्यात्पूर्वं वायोर्निवेशपरम्,

## तडितोऽधिवरुणः सम्बन्धात् ॥ ३ ॥

३ अधिकरणम्

कौषीतकिनां [1]"स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्" इत्यत्राग्निलोकशब्दस्यार्चिःपर्यायत्वेन प्राथम्यमविगीतम् । वायोश्च संवत्सरा-

* श्रुतप्रकाशिका *

भाष्योक्त एव ज्यायान् ॥ २ ॥

वाय्वधिकरणं समाप्तम् ।



तडितोऽधिवरुणः सम्बन्धात् ॥ ३ ॥ किं वरुणादयो यथापाठं निवेशयितव्याः ? किं विद्युतोऽधीति, किं वरुणस्य विद्युत्सम्बन्धानुरोध उपपन्नो नेति, अनुपपत्तौ यथापाठं निवेशः, उपपत्तौ विद्युतोऽधिनिवेशः, कौषीतकिनामित्यादिना वक्ष्यमाणार्थवैशद्याय पूर्वोक्तार्थं द्रढयति, तत्रार्चिषः प्राथम्ये वायोः संवत्सरात् पूर्वत्वे आदित्यस्य वायोरूर्ध्वत्वे च कौषी-

* भावप्रकाशिका *

नत्वब्दानन्तर्यपरमिति वदन्तीति भावः ॥ * ॥

इति वाय्वधिकरणम् ।



भाष्ये---अग्निलोकशब्दस्यार्चिःपर्यायत्वेनेति, अर्चिश्शब्देन ज्वालावाचिना तदात्मकोऽग्निरुच्यते उपचारादिनेति भावः, नन्वत्र 'इणुसोस्सामर्थ्ये नित्यं समासेऽनुत्तरपदस्थस्य' इति षत्वप्राप्त्या अर्चिष्पर्यायत्वेनेति भवितव्यम्, यथा- सर्पिष्कुण्डिका शोचिष्केशः-इत्यादि, 'अर्चिश्शुचिहुसृपिच्छादिभ्य इसिः' इति शोचिरादिवत् अर्चिश्शब्दोपि इसिप्रत्ययान्तो व्युत्पादित इति चेत्, अत्राभिधीयते- 'अतः कृकमिकंसे'त्युत्तरसूत्रे कंसग्रहणेन उणादिषु

1. कौ० १-अ० ३ ॥

दूर्ध्वं निवेश उक्तः। आदित्यस्याप्यत्र प्राप्तपाठक्रमबाधेन "देवलोकादादित्यमादित्याच्चन्द्रमसम्" इति वाजसनेयकोक्तश्रुतिक्रमाद्देवलोकशब्दाभिहिताद्वायोरुपरि निवेशः सिद्धः । इदानीं वरुणेन्द्रादिषु चिन्ता ।

* श्रुतप्रकाशिका *

तकिवाक्याविगानं विगीतविषये तस्य दौर्बल्यं चाह निरूपितांशनिरूपणीयांशप्रदर्शनार्थेन कौषीतकिनामित्यादिना, ( आदित्यस्यापीति ) अत्र-- कौषी-

* भावप्रकाशिका *

कचिद्व्युत्पत्तिकार्थं न भवतीति ज्ञापनेन इसिप्रत्ययान्तत्वाभावादिति वा कस्कादिषु सर्पिष्कुण्डिकेत्यादिपाठेन इदं षत्वमनित्यमिति ज्ञापनेन वा अर्चिश्शब्दस्याऽत्र शब्दस्वरूपपरतया अमुख्यत्वाद्गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्यय इति वा महत्पूर्वशूद्र इत्यादावात्वादिवत् षत्वं न भवतीति, एवमुत्तरत्रापि अर्चिःप्रभृतिष्वित्यादौ द्रष्टव्यम् । तृतीयस्तु परिहार उत्तरत्र न सम्भवति, अर्थपरत्वेन तत्र मुख्यत्वादिति अर्चिष्प्रभृतिष्वित्येव बहुषु कोशेषु पाठो दृश्यते तत्र न किञ्चिदसाधुत्वं 'अर्चिश्शब्दस्य गौणत्वादिसञ्ज्ञाप्रत्ययत्वतः । अनित्यत्वाच्च मूर्धन्यो न कृतोऽर्चिःपदेऽमुना ' इति च संग्रहश्लोकः । भाष्ये---आदित्यस्याप्यत्रेत्यादि, अयमर्थः—पाठात्प्राप्तक्रमः पाठक्रमः, 'अग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोक'मिति पाठवशेन वायोर्वरुणस्य यः क्रमः प्राप्तः, तद्बाधेन विद्युत उपरि तेषां निवेशसमर्थनेन वाजसनेयश्रुत्यनुसारादादित्यस्य वायोरुपरि निवेशोऽस्मिन्नधिकरणे सिषाधयिषित इत्यर्थः । आशंसायां क्तः, देवलोकशब्दाभिहितात् वायोरुपरि निवेशस्सिद्ध इति क्वचित्पाठः, तत्र उपरिशब्दयोगे 'षष्ठ्यतसर्थप्रत्ययेन' इति प्राप्ता षष्ठी — ततः पश्च्रद् व्रजतीति महाभाष्यप्रयोगेणानित्यत्वज्ञापनात् क्वचिन्न सम्भवतीति न कृतेति द्रष्टव्यम् । वायुमपेक्ष्येत्यर्थविवक्षया ल्यब्लोपे पञ्चमीति वा द्रष्टव्यम् , एवमुत्तरत्रापि— भाष्ये इदानीं वरुणेन्द्रादिष्विति, तदर्थमिति

किमेते वरुणादयो यथापाठं वायोरूर्ध्वं निवेशयितव्याः? आहोस्विद्विद्युतोऽधीति विशये, अर्चिः-प्रभृतिषु सर्वेषु "अर्चिषोऽहः" इत्यादि श्रुतिक्रमोपरोधाद्विद्युतः परस्ताच्च "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इति विद्युत्पुरुषस्य ब्रह्मगमयितृत्वश्रवणाच्च सर्वत्रावकाशाभावेनाप्राप्तौ चोपदेशावैयर्थ्यायावश्यं कस्यचिद्बाध्यत्वे पाठक्रमानुरोधेन वायोरनन्तरं वरुणो निवेशयितव्यः। वाय्वादित्ययोः क्रमस्य बाधितत्वेन इन्द्रप्रजापती अपि ह्यत्रैव निवेशयितव्यौ-

इति प्राप्ते उच्यते-तडितोऽधिवरुणः-इति। वरुणस्तावद्विद्युत उपरिष्टान्निवेशयितव्यः? कुतः सम्बन्धात्- मेघोदरवर्तित्वाद्विद्युतो वरुणेन सम्ब-

---

* श्रुतप्रकाशिका *

तर्किवाक्ये ( उपदेशावैयर्थ्यायेति ) क्रमिबाधादपि क्रमबाधो न्याय्य इति भावः। ( इन्द्रप्रजापती अपि ह्यत्रैव निवेशयितव्याविति ) वरुणे वाय्वनन्तरे सति इन्द्रप्रजापत्योरन्यत्र निवेशे क्रमद्वयभङ्गः स्यात्, तस्मादेकक्रममात्रभङ्गेन तयोरपि क्रमिणोः सावकाशत्वं युक्तमिति भावः।

( वरुणस्तावदित्यादि ) विद्युच्च वरुणाभिमानविषयं जलं च मेघोदरस्थं तत्र विद्युतः स्फुटतरदृश्यत्वात् सलिलस्य तथा दृश्यत्वाभावाच्च सलिलस्य विद्युत उपरि स्थितिर्गम्यते, एवमभिमानविषययोः सम्बन्धानुरूपमभिमानिदेवतयोरपि

@ भावप्रकाशिका @

शेषः ( क्रमद्वयभङ्गः स्यादिति ) आदित्यचन्द्रयोरन्तराले चन्द्रविद्युतोरन्तराले वा निवेशे आदित्याच्चन्द्रमसं चन्द्रमसो वा विद्युतम्, इतिश्रौतक्रमस्य च 'वरुणलोकं स इन्द्रलोकं स प्रजापतिलोक' मिति पाठक्रम-

न्धो लोकवेदयोः प्रसिद्धः । एतदुक्तं भवति—वरुणादीनामुपदेशावैयर्थ्याय क्वचिन्निवेशयितव्यत्वे सति पाठक्रमादर्थक्रमस्य बलीयस्त्वाद्विद्युतोऽधिवरुणो निवेशयितव्यः । ततश्चामानवस्य गमयितृत्वं व्यवधान-

* श्रुतप्रकाशिका *

सम्बन्धो न्याय्य इति तडिदभिमानिन ऊर्ध्वं जलाभिमानी वरुण इति भावः । किञ्च द्युपर्जन्यपृथिवीक्रमेण पर्जन्यः स्वर्गादनन्तरस्थः तडित्ततोऽप्यधस्तात्, तडित्पुरुषस्योपरि वरुणो मेघोदरे । तडित्सम्बन्धोऽस्तु तेन पाठक्रमं बाधित्वा कथं तडिदुपरि वरुणनिवेशः कथं वैन्द्रप्रजापत्योस्तत्रावकाश इत्यत्राह ( एतदुक्तमिति ) अर्थक्रमस्य पाठक्रमात् बलीयस्त्वेन वरुणस्य तडिदुपरि निवेशः कौषीतकिपाठक्रमानुरोधात् आगन्तूनामन्ते निवेशयितव्यत्वरूपान्मीमांसासिद्धन्यायाच्चेन्द्रप्रजापत्योर्वरुणोपरि निवेशः । तडितो गमयितृत्वा-

* भावप्रकाशिका *

प्राप्तस्य वरुणेन्द्रप्रजापतीनामानन्तर्यस्य च भङ्गप्रसङ्गादित्यर्थः । तडित्ततोप्यधस्तादिति पञ्चमी पूर्ववत् द्रष्टव्या । ( कथं तडिदुपरि वरुणनिवेश इति ) ननु कथमत्र समासः, अन्यारादिति दिग्योगलक्षणपञ्चम्याः 'षष्ठ्यतसर्थप्रत्ययेने' ति षष्ठ्या बाधात् अबाधेपि पञ्चम्यन्तस्य समासप्राप्त्यभावात् षष्ठीपक्षे पूरणगुणेत्यव्ययेन षष्ठ्यन्तस्य समासनिषेधात्, उच्यते—षष्ठीसमास एवायम्, पूरणगुणेति निषेधस्तु सत्तव्याभ्यां कृद्भ्यां साहचर्यात् कृदन्तेनाव्ययेनैव, नान्येन, यथा कटस्य कर्तुं कटस्य कृत्वेत्यादि, तथैव वृत्त्यादावुदाहृतत्वात्, अकृदन्ताव्यययोगे तु समासोऽस्त्येव, अत एव भगवान् पाणिनिः निरदिशत् 'अनुर्यत्समया' इति, व्याख्यातं च वृत्तिकारादिभिः यस्य समया यत्समयेति, उपायान्तरमप्यस्तीति तद्व्याख्यातृभिरन्यथा परिहृतः, अनित्यश्चायं समासप्रतिषेध इति पूर्वमसकृदुपपादितम् "शिष्टप्रयोगबाहुल्यात् कृदन्ताव्ययसंग्रहात् । अनित्यत्वाच्च तस्यैव निर्देशास्साधवो मताः'। ( अर्थक्रमस्य पाठक्रमादिति ) मेघोदरवर्तित्वलक्षणसामर्थ्यरूपार्थक्रमस्येत्यर्थः ( तडितो गमयितृत्वाव्यवधानायेति ) ततश्चन्द्रमसो विद्युतमिति श्रौतक्रमभङ्गोऽपि

सहमित्यवगम्यते। तस्य च व्यवधानसहत्वादिन्द्रादेश्चो-पदिष्टस्यावश्यनिवेशयितव्यस्य वरुणादुपर्युपदिष्टत्वा-दागन्तूनामन्ते निवेशयितव्यत्वाच्च वरुणादुपरीन्द्रादि-र्निवेशयितव्य इति ॥ ३ ॥

वरुणाधिकरणं समाप्तम् ।



* श्रुतप्रकाशिका *

व्यवधानाय वरुणस्तडितः पूर्वं निवेश्यः, तथा सति मेघोदरसम्बन्धरूपार्थक्रमोऽपि स्यादिति चेन्न, तथा सतीन्द्रप्रजापत्योर्यथापाठं वरुणतडिन्मध्यनिवेशेऽर्थक्रमभङ्गात् तडिदानन्तर्ये वरुणेन्द्रप्रजापतीनां पाठक्रमभङ्गप्रसङ्गः, तस्मा-

* भावप्रकाशिका *

सोढव्य इति भावः (तथासतीन्द्रप्रजापत्योर्यथापाठमिति) 'स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोक' मिति पाठानुसारेण त्रयाणामव्यवधानसिध्यर्थं तडितः पूर्वं त्रयाणां निर्देशेऽङ्गीक्रियमाणे मेघोदरवर्तित्वरूपार्थक्रमभङ्गप्रसङ्गादित्यर्थः। (तडिदानन्तर्ये इति) वरुणानन्तरं तडित् तत इन्द्रप्रजापती इत्यभ्युपगम्यमाने कौषीतकिपाठसिद्धस्य वरुणेन्द्रप्रजापतीनां क्रमस्य भङ्गप्रसङ्गादित्यर्थः। अतः क्वचित्कोशेषु 'स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोक' मिति वरुणेन्द्रलोकयोर्मध्ये आदित्यलोकपाठो दृश्यते, स तु न प्रामाणिकः, केषुचित्कोशेषु तथा अनुदाहृतत्वात्, अस्यैव श्रुतप्रकाशिकाग्रन्थस्य साक्षित्वाच्च, तथाहि पाठे सति एतदधिकरणपूर्वपक्षसिद्धान्तयोः असङ्गतिप्रसङ्गाच्च, तथाहि यदि वरुणलोकानन्तरमादित्यः पठितः स्यात्, तर्हि वरुणेन्द्रप्रजापतीनां त्रयाणामप्यादित्यात् पूर्वत्वमिति पूर्वपक्षस्य कथमुत्थितिः, अत्रहि वायुलोकं वरुणलोकमिति पाठक्रममवलम्ब्य वायुलोकानन्तर्यं वरुणलोकस्य वदन् पूर्वपक्षी कथं तुरगारूढस्य तुरगविस्मरणन्यायेन वायुलोकादित्यलोकयोः पाठप्राप्तं क्रममादित्यलोकेन्द्रलोकयोः पाठप्राप्तं क्रमं चानादृत्य त्रयाणामादित्यात्पूर्वं निवेश इत्याक्षिपेत्, नच वाय्वादित्ययोरानन्तर्यस्य बाधितत्वात् तत्रैव निवेशनीयानां निवेश इति वाच्यम्, 'आदित्याच्चन्द्रमस'

* श्रुतप्रकाशिका *

त्पाठक्रमानुरोधेनार्थक्रमानुविधाने सम्भवति न पाठक्रमभङ्गो युक्तः । तडितो गमयितृत्वमव्यवहितमिति न श्रुतं तस्मात्तस्य गमयितृत्वं व्यवधानसहमित्य-

* भावप्रकाशिका *

इति क्रमस्य इन्द्रप्रजापतिभ्यां बाधितत्वात्, वरुणस्यापि तत्रैव निवेशः किं न स्यादित्यपि वक्तुं सुशकत्वात्. किञ्च यद्यानन्तर्यं स्वरसप्रतिपन्नं, केनचित् प्रामाणिकेनापोदितं चेत् अतथाभूतेनापि शक्यते अपवदितुम्, तदपि प्रामाणिकमिति चेत्--तर्हि पाठक्रमानुग्रहायादित्यानन्तरमेव तयोर्निर्देशोऽस्तु, आदित्याच्चन्द्रमसमिति शब्दस्वरसप्रतिपन्नमप्यानन्तर्यमपि बाध्यताम्, वायुलोकादादित्यमिति प्रतिपन्नस्य वाय्वादित्यक्रमस्य पाठक्रमेण बाधवत्, इतरथा वरुणलोकानन्तरमिन्द्रलोकात् पूर्वमादित्यलोकपाठस्य निरालम्बनत्वप्रसङ्गात्, अत एव पूर्वतंत्रे अग्नौ सावित्रहोमादिवैशेषिकानुष्ठानानन्तरमेव दीक्षणीयाया अनुष्ठानं सावित्रहोमादिपाठानन्तरं दीक्षणीयागुणविधानार्थस्याप्यनुवादस्य दर्शनात्, इतरथा तत्र तत्पाठस्य अत्यन्तानर्थक्यप्रसङ्गादित्युक्तं पञ्चमे, अतो वरुणलोकेन्द्रलोकयोर्मध्ये नादित्यलोकपाठः कौषीतक्यां युक्तः, नचैवमुत्तराधिकरणयादवप्रकाशमतदूषणग्रन्थविरोध इति वाच्यं, यादवप्रकाशैः तथा पाठस्य कल्पिततया पराभ्युगमभादायैव परो दूषणीय इति न्यायात् उपपत्तेरिति युक्तमुत्पश्यामः ।

परे तु--आदित्याच्चन्द्रमसमिति श्रौतक्रमबाधापेक्षया 'स आदित्यलोकं स इन्द्रलोक'मिति पाठक्रमबाधस्यैव युक्तत्वात्, वायुलोकादित्यलोकयोरानन्तर्यस्य व्यवधानसहत्वाच्च त्रयाणामप्यादित्यात्पूर्वं निवेश इति पूर्वपक्षो युक्त एव । अत एव जातेष्टौ पुत्रजननरूपनिमित्तानन्तर्यस्य निमित्तश्रुतिप्राप्तस्य स्तनप्राशनोत्कर्षद्वारा पुत्रविपत्तिसम्पादकत्वेन प्रयोजनविरोधप्रसङ्गात् बाधितत्वे सति जातकर्मानन्तरमपि न जातेष्ट्यनुष्ठानं, निमित्तस्वरसानन्तर्यस्य बाधितत्वात्, तत आशौचापगमे पर्वकाले च प्राप्ते कर्तव्यमिति चतुर्थे सत्त्वात् तन्न्यायेन बाधितस्य वायुलोकादित्यलोकानन्तर्यस्य बाधितत्वादेव निवेशसाकाङ्क्षाणां तत्रैव निवेशो युक्त इति पूर्वपक्षस्य युक्तत्वात् । नच त्रयाणामप्यादित्यात्परत एव निवेश इति पूर्वपक्षः किं न स्यादिति वाच्यं, न्यायसाम्येन तस्यापीष्टत्वात्, वायुलोकं वरुणलोकं आदित्यलोकमिति प्रथमश्रुतपाठक्रमपरित्यागेन चरमश्रुतस्य 'स

## आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

४ अधिकरणम्

इदमिदानीं चिन्त्यते- किमर्चिरादयो मार्गचिह्नभूताः? उत भोगभूमयः? अथवा विदुषां ब्रह्म प्रेप्सतामतिवोढारः- इति। किं तावद् युक्तम्? मार्गचिह्नभूता इति। कुतः? उपदेशस्य तथाविधत्वात्; दृश्यते हि लोके ग्रामादीन्प्रति गन्तॄणामेवंविधो देशिकैरुपदेशः- इतो निष्क्रम्यामुकं वृक्षममुकां नदीममुकं च पर्वतपार्श्वं गत्वाऽमुकं ग्रामं गच्छ' इति।

* श्रुतप्रकाशिका *

यमेव क्रम इत्यर्थः। अत्रास्मदाचार्याणां वरदमिश्राणामयं श्लोकः 'अर्चिरहस्सितपक्षानुदगयनाब्दमरुदर्केन्दून्। अपि वैद्युतवरुणेन्द्रप्रजापतीनातिवाहिकानाहुः' इति ॥ ३ ॥

वरुणाधिकरणं समाप्तम्।



आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥ अनन्तरसङ्गतिः स्फुटा, किमर्चिरादयो मार्गचिह्नभूताः, उत भोगभूमयः? उतातिवोढारः? इति, किं लौकिकोपदेशप्रक-

* भावप्रकाशिका *

आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोक'मिति पाठक्रमानुग्रहस्य अन्याय्यत्वाच्च, तस्मात् त्रयाणां चादित्यात्पूर्वं निवेश इति युक्त एव पूर्वः पक्षः। सर्वकोशेषु दृष्टस्य वरुणेन्द्रलोकमध्ये आदित्यलोकपाठस्य यादवप्रकाशादिभिरादृतस्याऽपलापे अतिप्रसङ्गाच्च, नच वरुणेन्द्रान्तराले आदित्यपाठस्याऽत्यन्तनिरवलम्बनत्वमिति वाच्यम्, 'अग्निहोत्रं जुहोति यवागूं पचती'तिवत् बाधस्य न्यायप्राप्तत्वादिति वदन्ति ॥ * ॥

इति वरुणाधिकरणम्।



भाष्ये- अमुकं च पर्वतपार्श्वमिति, पार्श्वशब्दस्योभयलिङ्गत्वात् पुल्लिङ्गाभि-

अथवा भोगभूमय एताः स्युः, कालविशेषतया प्रसिद्धानामहरादीनां मार्गचिह्नत्वानुपपत्तेरन्यस्य च मार्गचिह्नभूतस्यैतेषामनभिधायकत्वात्। भोगभूमित्वं च [1]"एत एव लोका यदहोरात्राण्यर्धमासा मासा ऋतवः संवत्सराः" इत्यहरादीनां लोकत्ववचनादुपपद्यते। अत एव कौषीतकिनः "अग्निलोकमागच्छति" इत्यादिना लोकशब्दानुविधानेनार्चिरादीन् पठन्तीति।

* श्रुतप्रकाशिका *

मानुरोधो न्याय्यः, किम् 'एत एव लोका यदहोरात्राण्यर्द्धमासा ऋतवः संवत्सराः' इति वाक्यानुरोधो युक्तः ? उत गमयितृत्वलिङ्गानुरोध उचितः, आद्ये मार्गचिह्नत्वं, द्वितीये भोगभूमित्वं, तृतीये त्वातिवाहिकत्वम्। (अथवेत्यादि) भोगभूमित्वस्याप्यवाचकाः शब्दा इत्यत्राह (एत एव लोका इति) लोका अहरादिशब्दवाच्या इत्यस्य वाक्यस्यार्थ इति पूर्वपक्षिणो हृदयम्। अत्राहरादिकालविशेषाणां लोकशब्दवाच्यत्वमुक्तं स्यात्, न भोगभूमीनामहरादिशब्दवाच्यत्वमित्यत्राह (अत एव कौषीतकिन इति) लोकशब्दानुविधानमनुवृत्तिः 'तस्मै स तत्र विजिहीर्षते' इत्यपि लोकत्वसाधकहेतुरर्थसिद्धः।

* भावप्रकाशिका *

प्रायेणेत्थमुक्तं, नपुंसके तु अदकमिति स्यात्, नच 'सैव हि सत्यादयः' इति सूत्र कल्पतरौ अमुकं फलं प्रधानस्येत्यगृह्यमाणविशेषत्वादिति निर्देशात् अमुकमित्यप्यस्ति रूपमिति वाच्यं, तस्य व्याकरणस्मृतिविरुद्धतया अप्रामाणिकत्वात्, (लोकशब्दवाच्यत्वमुक्तं स्यादिति) ततश्च स्तुतितया पर्यवस्येत् मुख्यस्य कालविशेषस्य भोगभूमित्वासम्भवादिति भावः (लोकत्वसाधकहेतुरर्थसिद्ध इति) विजिहीर्षते इति विहरणेच्छाप्रतिपादनादिति भाव, इदञ्च विजिहीर्षत इति काचित्कपाठमभिप्रेत्योक्तं, पाठान्तरं तु पूर्वमेव व्याख्यातम्। भाष्ये— अति-

[1] तै० ना० ८०—अनु० ॥

एवं प्राप्ते ब्रूमः—आतिवाहिकाः— इति । विदुषामतिवाहे परमपुरुषेण नियुक्ता आतिवाहिका देवताविशेषा एतेऽर्चिरादयः । कुतः ? तल्लिङ्गात्—अतिवहनलिङ्गात् । अतिवहनं हि गन्तॄणां गमयितृत्वम्; गमयितृत्वं च "तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयति" इत्युपसंहारे श्रूयमाणं पूर्वेषामप्यविशेषश्रुतानां स एव सम्बन्ध इति गमयति । वदन्ति चार्चिरादयः शब्दाः अर्चिराद्यात्मभूतानभिमानिदेवताविशेषान् । "तं पृथिव्यब्रवीत्" इतिवत् ॥ ४ ॥

यद्येवं "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमय-

---

* श्रुतप्रकाशिका *

राद्धान्तमाह ( एवमिति ) तर्ह्यहरादिशब्दाः कथं देवतावाचिन इत्यत्राह ( वदन्ति चेति ) 'पृथिव्यब्रवीत्' 'आपो वा अकामयन्त' अग्निर्वाग् भूत्वा मुखं प्राविशत्, 'आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्' इतिवदिति भावः ॥४॥

उत्तरसूत्रशङ्कामाह (यद्येवमिति ) ।

छ भावप्रकाशिका छ

वाहे परमपुरुषेण नियुक्ता इति, 'तत्र नियुक्तः' इति ठगिति भावः । भाष्ये—उपसंहारे श्रूयमाणं पूर्वेषामिति, ननु विशेषविधानस्य शेषप्रतिषेधार्थत्वं लोकदृष्टम्, यथा देवदत्तो वामेनाक्ष्णा पश्यतीति तदितरनिषेधपरत्वम्. ततश्च कथमस्य इतरेषामपि चेतनत्वगमयितृत्वप्रतिपादकत्वमिति चेन्न, 'स एनान्ब्रह्म गमयती'ति वाक्ये पुरुषत्वं गमयितृत्वं च सिद्धवत्कृत्य अमानवत्वरूपविशेषमात्रप्रतिपादनेन तेषामप्यर्चिरादीनां गमयितृत्वपुरुषत्वावगतेः, ब्रह्मगमयितृत्वविधानपक्षेपि त्वदुक्तरीत्या इतरेषां ब्रह्मगमयितृत्वनिषेधे 'विशेषनिषेधे सामान्यस्याभ्यनुज्ञान'मिति न्यायेन ब्रह्मगमयितृत्वमात्रासिद्धेश्चेति द्रष्टव्यम् ॥ छ ॥

ति" इति वैद्युतस्यैव पुरुषस्य ब्रह्मगमयितृत्वश्रुतेः, विद्युतः परेषां वरुणादीनां कथमातिवाहिकत्वेनान्वय इत्यत्राह—

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ५ ॥

ततः—विद्युत उपरि, वैद्युतेन—अमानवेनैवातिवाहिकेन विदुषामाब्रह्मप्राप्तेः गमनम् । कुतः? तच्छ्रुतेः "स एनान् ब्रह्म गमयति" इति तस्यैव गमयितृत्वश्रुतेः । वरुणादयस्तु अनुग्राहका इति तेषामप्यातिवाहिकत्वेनान्वयो विद्यत एव ॥ ५ ॥

आतिवाहिकाधिकरणं समाप्तम् ।

---

* श्रुतप्रकाशिका *

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ५ ॥ ततश्शब्दस्य पश्चाद्भावपरत्वव्यावृत्त्यर्थं व्याचष्टे ( ततो विद्युत इति ) तर्ह्यातिवाहिकेषु वरुणादीनामन्वयः कथमित्यत्राह ( वरुणादयस्त्विति )

परेषां पक्षे नातीव विरोधः, सगुणोपासकविषयमित्येतावत्तु पूर्वमेव प्रत्युक्तम् , तेषां परेषां च पक्षे उपपादनप्रकारवैषम्यमेव, न तूपपाद्यवैषम्यं, 'स एनान् ब्रह्म गमयति' इति गमयितुरमानवत्वं दर्शयति, इदं च विशेषणं मानवगमयितृत्वव्यवच्छेदकत्वात् पूर्वेषां मानवत्वेन गमयितृत्वे लिङ्गम्, अमानवत्वं नाम—मनोदेशातिगत्वम्, अचेतनानामग्न्यादीनां गमयितृत्वायोगात् , संपिण्डितकरणग्रामस्योत्क्रान्तस्यापि स्वातन्त्र्येण गमनायोगात् अर्चिराद्यभिमानिनो देवा आत्मनो गमयितारोऽभ्युपगन्तव्या इति,

* भावप्रकाशिका *

( मानवगमयितृत्वव्यवच्छेदकत्वादिति ) वैद्युतस्य गमयितृत्वसिद्धवत्कारेणामानवत्वनिवृत्तिमात्रपरत्वात् वाक्यस्येत्यर्थः । वैद्युते विशिष्यायं ब्रह्मगमयिता मानवो नेत्युक्ते पूर्वेषां मानवत्वं गमयितृत्वं चोक्तमेव भवतीति

* श्रुतप्रकाशिका *

अमानवशब्दस्य यौगिकत्वेऽपि व्यवच्छेद्यस्य मानवत्वं गमयेत्, न गमयितृत्वं, विशेषणं हि स्वप्रत्यनीकाकारयोगं व्यवच्छेद्यस्य दर्शयति, न त्वाकारान्तरसाम्यं, चन्द्रमसा संवादादिदर्शनादत्यन्तापटुकरणत्वमपि दुर्वचम्, अतस्तदनादरः।—अन्ये तु वरुणस्य तडित्सम्बन्धो वर्षद्वारकः स तस्य वाय्वादित्याभ्यामपि तुल्यः 'वायुर्वै वृष्ट्या ईशे तस्माद्वायुप्रच्युता-दिवो वृष्टि' रिति 'याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति' इति च तयोर्वृष्टिहेतुत्वश्रवणात्, ततश्च केवलार्थक्रमेण विद्युत उपरि निवेशनादपि पाठ-क्रमसहकृतार्थक्रमवशादादित्यस्याधस्ताद्वरुणो निवेशनीय इति सिद्धान्त-यन्ति, 'तडितोऽधी' ति सूत्रं विद्युत उपरि वरुणनिवेशनपरं व्याख्यातं, तत्र वाय्वादित्यतडिद्भिः सम्बन्धस्य समानतयाऽतिप्रसङ्गपरिहारार्थं शङ्का-न्तरमेवमुपन्यस्तं 'स एनान् ब्रह्म गमयति' इति श्रवणाद्विदुषामन्येन नेतव्यत्वं प्रतीयते, न तु स्वयं गन्तृत्वं, तत्र प्रजापतिरिन्द्रश्च चेतन-त्वात् स्वस्वलोकावधि नेतारौ, विद्युतस्त्वचेतनत्वात् इन्द्रलोकावधिनेतृत्वा-नुपपत्तेर्नेतृविशेषाकाङ्क्षायां वरुणस्य विद्युत्सम्बन्धश्चास्तीत्याकाङ्क्षासहकृतात् सम्बन्धाद्विद्युत उपरि वरुणो निवेशनीय इत्युक्त्वा—तर्ह्यर्चिरादीनामप्य-चेतनत्वेन नेतृत्वानुपपत्तेस्तत्रापि नेतृभिरन्यैर्भवितव्यमिति शङ्कापरिहारार्थ-मर्चिरादीनां चेतनत्वेन नेत्रन्तरनैराकाङ्क्ष्यप्रतिपादकम् 'आतिवाहिकाः' इत्यादि सूत्रं व्याख्यातम्। अस्मिन्सूत्रे मार्गपरत्वं भोगभूमित्वं चार्चिरादीनां पूर्वपक्षीकृत्य देवतात्वं समर्थितम्। तलवकारिणां 'गुहासि देवोऽसि' इत्यादिश्रुतौ 'तमग्निरभिप्रवहति तं वायुरभिप्रवहति' इत्यादिना पृथिव्यग्निर्वा-युरन्तरिक्षलोको दिशोऽहोरात्रेऽर्धमासा मासा ऋतवः संवत्सरो दिव्य-गन्धर्वाप्सरसो द्यौर्देवा आदित्यश्चन्द्रमा' इत्यातिवाहिका उच्यन्ते, त

छ भावप्रकाशिका छ

भावः। ( व्यवच्छेद्यस्य मानवत्वं गमयेदिति ) अर्चिरादेरित्यर्थः ( अन्ये त्वित्यादि ) ( अर्थक्रमवशादिति ) वृष्टिरूपैककार्यकारित्वलक्षणार्थक्रमवशादि-त्यर्थः ( वरुणो निवेशनीय इति ) इन्द्रप्रजापती तु तडितः परस्तान्निवेशनी-यावित्येतत्तु पूर्वपक्षसिद्धान्तयोः समानमिति द्रष्टव्यम् ( वरुणनिवेशपरं व्या-

* श्रुतप्रकाशिका *

एवैते अर्चिरादयस्तत्तन्नामधेयक्रमप्रत्यभिज्ञानलिङ्गात्, 'देवानामेव महिमानं गत्वा आदित्यस्य सायुज्यं गच्छति' इति विदुषां तत्र सायुज्यप्राप्तिरर्चिरादीनां देवतात्वे लिङ्गम् , अतो न तत्र नेत्रन्तरापेक्षा, विद्युतस्त्वचेतनतया तदपेक्षाऽस्तीति तस्या उपरि वरुणो नेतेति पूर्वपक्षं परिसमाप्य सिद्धान्त उच्यते—वैद्युतेनैवेति सूत्रेण, 'आदित्याद्वैद्युतं वैद्युतात्पुरुषोऽमानव एत्य ब्रह्मलोकान् गमयति' इति अमानवस्य पुरुषस्य ब्रह्मलोकगमयितृत्वं वैद्युतस्यापादनत्वं चावगम्यते, अतो विद्युदभिमानी पुरुषो वैद्युतः, स च ब्रह्मलोकादर्वाचीनेषु लोकेषु नेतेति प्रतीतम् । अतो नेत्रन्तरनिराकाङ्क्षत्वाद्वरुणो यथाश्रुति वायोरुपर्येव वर्तते, न तु तस्यास्ति नेतृत्वमिति सिद्धान्तसूत्रं वर्णयन्ति । अत्रोच्यते—आदित्यादधस्ताद्वरुणनिवेशनस्य सिद्धान्तितत्वं तावदयुक्तं, पाठक्रमार्थक्रमयोरुभयोरपि श्रौतक्रमबाध्यत्वात् 'स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन ऊर्ध्वमाक्रमते स आदित्यमागच्छति' इति 'देवलोकादादित्य' मिति च वायोरनन्तरमादित्यस्य श्रौतक्रमप्राप्तत्वात् तयोर्मध्ये 'स वायुलोकं स वरुणलोकं स आदित्यलोक' मिति पाठक्रमानुरोधेन वरुणनिवेशनं हि श्रौतक्रमबाधितं स्यात्, एतदुक्तं भवति—वाय्वादित्ययोर्मध्ये तडित उपरि च वरुणनिवेशनमर्थक्रमप्राप्तं, तत्र वाय्वादित्ययोरर्थक्रमस्य श्रौतक्रमबाधितत्वाद्बाधितार्थक्रमेण तडित उपरि वरुणनिवेशनमेव युक्तमिति । किञ्च अर्थक्रमानुगृहीतपाठक्रमेण क्रमनिर्णये कर्तव्ये वृष्टिहेतुत्वलक्षणार्थक्रमसचिवेन 'स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोक' मिति पाठक्रमेणादित्यादुपरि इन्द्रनिवेशनप्रसङ्गः, 'आदित्याच्चन्द्रमस' मिति श्रौतक्रमविरोधात्तदयुक्तमिति चेत्—पूर्वदर्शितश्रौतक्रमविरोधात् वायोरूर्ध्वं वरुणनिवेशनमप्ययुक्तं यतः श्रौतक्रमाविरोधात् विद्युतः परं वरुणनिवेशनमेव युक्तम्, अत एव तडितोऽधीति सिद्धान्तसूत्रं, न तु पूर्वपक्षविषयम् । अत एवा-

* भावप्रकाशिका *

ख्यातमिति ) पूर्वपक्षसूत्रतयेति शेषः । ( तमभिप्रवहन्तीति ) तं प्रापयन्तीत्यर्थः ( वृष्टिहेतुत्वलक्षणार्थक्रमसचिवेति ) इन्द्रस्यापि मेघवाहनत्वेन वर्षहेतु-

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ६ ॥

५ अधिकरणम्

अर्चिरादिनैव गच्छति विद्वान्; अर्चिरादिरमानवान्तश्च गण आतिवाहिको विद्वांसं ब्रह्म गमयतीत्युक्तम् । इदमिदानीं चिन्त्यते—किमयमर्चिरादिको गणः कार्यं हिरण्यगर्भमुपासीनान्नयति? उत परमेव ब्रह्मोपासीनान्, अथ परब्रह्मोपासीनान् प्रत्य-

* श्रुतप्रकाशिका *

तिवाहिका इत्यादि सूत्रद्वयमधिकरणान्तरं भवितुमर्हतीति तस्य परोक्तयोजनाऽनुपपन्ना ॥ ५ ॥

आतिवाहिकाधिकरणं समाप्तम् ॥



कार्यं बादरिरस्य गत्युपपत्तेः ॥ ६ ॥ अवान्तरसङ्गतिमाह ( अर्चिरादिनैवेति ) ( कार्यं हिरण्यगर्भमुपासीनानिति ) कार्योपासकस्य कार्यप्राप्तिः, परोपासकस्य परप्राप्तिश्च तत्क्रतुन्यायसिद्धा, अत उपासितृविशेषे निश्चिते प्राप्तिसन्देहाभावात् संशयस्योपासितृभेदमूलत्वात् 'स एना' नित्युपासितॄणां प्रतिपन्नत्वाच्च उपासीनानित्यध्याहृनम्, नयतिपदं सिद्धान्तसूत्रादाकृष्टं, किमर्चिरादिको गणः कार्यं हिरण्यगर्भमुपासीनानेव नयति ? उत परं ब्रह्म उपासीनानेव ? उत परं ब्रह्मोपासीनान् प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्चेति, किं परब्रह्मणि प्राप्ये गतिब्रह्मलोकशब्दावुपपद्येते, नेति, ब्रह्मोपासीनानामेव गमयितृत्वे 'तद्य इत्थं विदुर्ये चेमे' इत्यादिवाक्यसामञ्जस्यमस्ति, नेति, यदा नोपपद्येते, तदा कार्यमुपासीनानेव नयेत्, यदा गतिब्रह्मलोकशब्दावुपपद्येते, यदा च 'तद्य इत्थ'मित्यादिवाक्यसामञ्जस्यमस्ति, तदा ब्रह्मोपासीनानेव नयेत्, यदा सामञ्जस्यं नास्ति, तदा परं ब्रह्मोपासीनान् प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्च नयेत्,

* भावप्रकाशिका *

त्वादिति भावः ॥ ५ ॥

गात्मानं ब्रह्मात्मकतयोपासीनांश्चेति विशये—कार्यमुपासीनानेव गमयतीति बादरिराचार्यो मन्यते । कुतः ? अस्य हिरण्यगर्भमुपासीनस्यैव गत्युपपत्तेः, न हि परिपूर्णं सर्वज्ञं सर्वगतं सर्वात्मभूतं परं ब्रह्मोपासीनस्य तत्प्राप्तये देशान्तरगतिरुपपद्यते, प्राप्तत्वादेव; नित्यप्राप्तपरब्रह्मविषयाविद्यानिवृत्तिमात्रमेव हि परविद्याकार्यम् । कार्यं तु हिरण्यगर्भरूपं ब्रह्मोपासीनस्य परिच्छिन्नदेशवर्तिप्राप्यप्राप्त्यर्थं गमनमुपपद्यते । अतोऽर्चिरादिरातिवाहिकगणस्तमेव नयति ॥ ६ ॥

विशेषितत्वाच्च ॥ ७ ॥

"पुरुषोऽमानवः स एत्य ब्रह्मलोकान् गमयति" इति लोकशब्देन बहुवचनेन च लोकविशेषवर्तिनं हिरण्यगर्भमुपासीनमेवामानवो गमयतीति विशे-

---

* श्रुतप्रकाशिका *

उपास्तिनयत्योर्द्वयोरपि कर्म हिरण्यगर्भः, ( कार्यमुपासीनानित्यादि ) सर्वगत्वात् ब्रह्मणो मुक्तेन तत्प्राप्त्यर्थं न क्वचिद्गन्तव्यं, सर्वगतत्वेऽपि देशविशेषप्राप्तानेव जानाति, नान्यमिति न नियमोऽस्ति, येन क्वचिद्गन्तव्यं सर्वज्ञत्वात्, क्वचित्कल्याणगुणपूर्तिः क्वचिदपूर्तिरिति न तदर्थं गन्तव्यं सर्वतः परिपूर्णत्वात्, सम्बन्धविशेषसम्पादनाय नान्यत्र गन्तव्यं, सर्वात्मत्वादिति विशेषणानां तात्पर्यं, नित्यप्राप्तिश्चेदुपासनावैयर्थ्यमित्यत्राह ( नित्यप्राप्तेति ) ॥ ६ ॥

विशेषितत्वाच्च ॥ ७ ॥ 'एतं ब्रह्मलोकं न विन्दन्ति' इत्यादिषु कर्म-

* भावप्रकाशिका *

भाष्ये—गमयतीति विशेष्यत इति, बहुवचनान्तलोकशब्दस्य लोकविशेष-

च्यते । किञ्च "प्रजापतेः सभां वेश्म प्रपद्यते" इति कार्यस्य हिरण्यगर्भस्य समीपगमनमर्चिरादिना गतः प्रत्यभिसन्धत्ते ॥ ७ ॥

नन्वेवं "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इत्ययं निर्देशो नोपपद्यते; हिरण्यगर्भनयने हि 'स एनान्ब्रह्माणं गमयति' इति निर्देष्टव्यं स्यात्, अत आह—

सामीप्यात्तु तद्व्यपदेशः ॥ ८ ॥

"यो ब्रह्माणं विदधाति" इति हिरण्यगर्भस्य प्रथमजत्वेन ब्रह्मसामीप्यात्तस्य ब्रह्मशब्देन व्यपदेश इति गत्यनुपपत्तिविशेषणादिभिरुक्तैर्हेतुभिर्निश्चीयत इत्यर्थः ॥ ८ ॥

---

* श्रुतप्रकाशिका *

धारयः स्वीकृतः तद्व्यावृत्त्यर्थं बहुवचनेन चेत्युक्तं, बहुवचनान्तलोकशब्दे तात्पर्यम् ॥ ७ ॥

उत्तरसूत्रशङ्कामाह ( नन्विति ) ।

सामीप्यात्तु तद्व्यपदेशः ॥ ८ ॥ ( गत्यनुपपत्तिविशेषणादिभिरिति ) आदिशब्देन ब्रह्मेति निर्देशोपपत्तिर्गमनोपपत्तिश्च विवक्षिता, कार्ये कारणोपचार इत्यर्थः ॥ ८ ॥

* भावप्रकाशिका *

णमुखेन गमनविशेषणत्वं युज्यत इति भावः । अत एव भाष्ये—लोकविशेषवर्तिनमित्युक्तं, भाष्ये—अर्चिरादिना गतोऽभिसन्धत्त इति यद्यपि न पूर्वत्र अर्चिरादिगतिः प्रस्तुता, तथापि 'आकाशो ह वै नामरूपयोर्निर्वहिता' इति ब्रह्मविद्यायाः प्रस्तुतत्वात् ब्रह्मविदश्चार्चिरादिगतिं सिद्धवत्कृत्य पूर्वमुक्तमिति द्रष्टव्यम् ॥ ७ ॥

अथ स्यात्—अर्चिरादिना हिरण्यगर्भप्राप्तौ "एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" "तयोर्ध्वमायन्नमृतत्वमेति" इत्यमृतत्वप्राप्त्यपुनरावृत्तिव्यपदेशो नोपपद्यते, हिरण्यगर्भस्य कार्यभूतस्य द्विपरार्द्धकालावसाने विनाशशास्त्रात् [1]"आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन" इति वचनाद्धिरण्यगर्भं प्राप्तस्य पुनरावृत्तेरवर्जनीयत्वादिति ; अत्राह—

कार्यात्यये तदध्यक्षेण सहातः
परमभिधानात् ॥ ६ ॥

कार्यस्य-ब्रह्मलोकस्यात्यये तदध्यक्षेण हिरण्यगर्भेणाधिकारिकेणावसिताधिकारेण विदुषा सह स्वयमपि तत्राधिगतविद्यः; अतः-कार्याद्ब्रह्मलोकात्परं ब्रह्म प्राप्नोतीत्यर्चिरादिना गतस्यामृतत्वप्राप्त्यपुनरावृत्त्यभिधानात् [2]"ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे" इति वचनाच्चावगम्यते ॥ ६ ॥

* श्रुतप्रकाशिका *

उत्तरसूत्रशङ्कामाह ( अथ स्यादिति )

कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ६ ॥ अयमर्थः कथमवगत इत्यत्राह ( ते ब्रह्मलोक इति ) परामृतात्-परामृतं प्राप्य ल्यब्लोपे पञ्चमीति पूर्वपक्षिणोऽभिप्रायः ॥ ६ ॥

---

१. गी० ८-१६ २. तै० ना० १०-अनु० २४ ॥

## स्मृतेश्च ॥ १० ॥

स्मृतेश्चायमर्थोऽवगम्यते [1]"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" इति । अतः कार्यमुपासीनमेवार्चिरादिको गणो नयतीति बादरेर्मतम् ॥ १० ॥

अत्र जैमिनिः पक्षान्तरपरिग्रहेण प्रत्यवतिष्ठते—

## परं जैमिनिर्मुख्यत्वात् ॥ ११ ॥

परं ब्रह्मोपासीनमेवार्चिरादिर्नयतीति जैमिनिराचार्यो मन्यते, कुतः ? मुख्यत्वात् "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इति ब्रह्मशब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यत्वात् । प्रमाणान्तरेण कार्यत्वनिश्चये सत्येव हि लाक्षणिकत्वं युक्तम् । न च गमनानुपपत्तिः प्रमाणं, परस्य ब्रह्मणः सर्वगतत्वेऽपि विदुषो विशिष्टदेशगतस्यैवाविद्यानिवृत्तिशास्त्रात्, यथा हि विद्योत्पत्तिर्वर्णाश्रमधर्मशौचाचारदेशकालाद्यपेक्षा "तमेतं वेदानुवचनेन" इत्यादिशास्त्रादव-

* श्रुतप्रकाशिका *

स्मृतेश्च ॥ १० ॥ परस्य—ब्रह्मायुषः ॥ १० ॥

( अत्रेति ) पक्षान्तरपरिग्रहेण पूर्वपक्षात्पक्षान्तरेण, न तु कृत्स्नसिद्धान्तेनेत्यर्थः ॥ १० ॥

परं जैमिनिर्मुख्यत्वात् ॥ ११ ॥ विद्यानिष्पत्तिः—विद्या हि स्वमाहात्म्यात् सूक्ष्मशरीरस्थितिहेतुरनुवर्तते, तस्या निष्पत्तिः कार्यकरत्वावस्थापत्तिः । यद्वा निष्पत्तिर्नितरां विकासः, सा गतिसापेक्षेत्यर्थः, नित्यत्वेऽपि कालविशेषा-

[1] १. कूर्मपुराणे पूर्वखण्ड १२-२६९ ॥

गम्यते, तथा निश्शेषाविद्यानिवर्तनरूपविद्यानिष्पत्तिरपि विशिष्टदेशगतिसापेक्षेति गतिशास्त्रादवगम्यते । विदुष उत्क्रान्तिप्रतिषेधादि तु पूर्वमेव परिहृतम् । यत्तु ब्रह्मलोकानिति लोकशब्दबहुवचनाभ्यां विशेषणात्कार्यभूतहिरण्यगर्भप्रतीतिरिति; तदयुक्तं, निषादस्थपतिन्यायेन ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयस्यैव युक्तत्वात्, अर्थस्य चैकत्वे निश्चिते बहुवचनस्य 'अदितिः पाशा'नितिवदुपपत्तेः, परस्य ब्रह्मणः परिपूर्णस्य सर्वगतस्य सत्यसङ्कल्पस्य स्वेच्छापरिकल्पिताः स्वासाधारणा अप्राकृताश्च लोका नात्यन्ताय न सन्ति, श्रुतिस्मृतीतिहासपुराणप्रामाण्यात् ॥ ११ ॥

दर्शनाच्च ॥ १२ ॥

दर्शयति च श्रुतिः मूर्द्धन्यनाड्या निष्क्रम्य देव-

---

* श्रुतप्रकाशिका *

पेक्षावत् सर्वगतत्वेऽपि देशविशेषापेक्षा युक्तेति भावः । नित्यमुक्ततया कालविशेषापेक्षा न चेत्, शास्त्रवैयर्थ्यं प्रत्यक्षविरोधश्च, उत्क्रान्त्यनुपपत्त्या न गतिरिति चेत्तत्राह ( विदुष इति ) ( यत्त्वित्यादि ) ( नाऽत्यन्ताय न सन्तीति ) न न सन्ति निषेधप्रसङ्गो नास्ति सन्त्येव अत्यर्थं सन्त्येवेत्यर्थः । परमव्योमशब्दादीनां हृदयगुहादिस्थानपरत्वापादनेन लोकविशेषापलापो न युक्तः 'त्वयन्तमस्य रजसः पराके हिरण्मये परे कोशे विरजं ब्रह्म निष्कलं । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्य आत्मविदो विदुरिति' 'तदक्षरे परमे व्योमन्' इत्यादिभिर्दुरपह्नवत्वादिति प्रमाणदार्ढ्यं विवक्षितम् ॥ ११ ॥

दर्शनाच्च ॥ १२ ॥ उत्थायोपसंपत्तिवचनेन देवयानेन प्राप्तिसिद्धिः॥१२॥

यानेन गतस्य परब्रह्मप्राप्तिम् "एष सम्प्रसादोऽस्मा-च्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणा-भिनिष्पद्यते" इति ॥ १२ ॥

यदुक्तं "प्रजापतेः सभां वेश्म प्रपद्ये" इत्यर्चिरा-दिना गतस्य कार्ये प्रत्यभिसंधिर्दृश्यत इति, तत्रोत्तरम्—

न च कार्ये प्रत्यभिसन्धिः ॥ १३ ॥

न चायं प्रत्यभिसन्धिः कार्ये हिरण्यगर्भे; अपि तु परस्मिन्नेव ब्रह्मणि, वाक्यशेषे "यशोऽहं भवामि ब्राह्मणानाम्" इति तस्याभिसन्धातुः सर्वाविद्यावि-मोकपूर्वकसर्वात्मभावाभिसन्धानात्, "अश्व इव रोमा-णि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि" इत्य-भिसंभाव्यस्य ब्रह्मलोकस्याकृतत्वश्रवणात् सर्वबन्ध-विनिर्मोकस्य च साक्षाच्छ्रवणात् । अतः परमेव ब्रह्मोपासीनमर्चिरादिरातिवाहिको गणो नयतीति जैमिनेर्मतम् ॥ १३ ॥

इदानीं बादरायणस्तु भगवान्स्वमतेन सिद्धान्तमाह—

---

* श्रुतप्रकाशिका *

उत्तरसूत्रशङ्कामाह ( यदुक्त मिति ) ।

न च कार्ये प्रत्यभिसन्धिः ॥ १३ ॥ उपपादकवाक्यवशात् परस्मिन्ने-वेत्युक्तम् ॥ १३ ॥

छ भावप्रकाशिका छ

प्रपद्य इति, प्रपत्त्यभिसन्धिः प्रत्यभिसंधिशब्देन विवक्षितः ॥ छ ॥

अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥ १४ ॥

अप्रतीकालम्बनान् प्रतीकालम्बनव्यतिरिक्तान्नयत्यर्चिरादिरातिवाहिको गण इति भगवान्बादरायणो मन्यते । एतदुक्तं भवति—कार्यमुपासीनान्नयतीति नायं पक्षः सम्भवति, परमेवोपासीनानित्ययमपि नियमो नास्ति, न च प्रतीकालम्बनानपि नयति । अपि तु ये परं ब्रह्मोपासते, ये चात्मानं प्रकृतिवियुक्तं ब्रह्मात्मकमुपासते; तानुभयविधान्नयति, ये तु ब्रह्मकार्यान्तर्भूतं नामादिकं वस्तु देवदत्तादिषु सिंहादिदृष्टिवद्ब्रह्मदृष्ट्या केवलं वा तत्तद्वस्तूपासते, न तान्नयति । अतः परं

* श्रुतप्रकाशिका *

अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥ १४ ॥ प्रतीकालम्बनव्यतिरिक्त एव हि परब्रह्मोपासीनः तं नयतीति दर्शनात् जैमिनिमतात् सिद्धान्तिमतस्य को विशेष इत्यत्राह ( एतदुक्तमिति ) कार्यमुपासीनोऽपि प्रतीकालम्बनः, नामादिषु ब्रह्मदृष्ट्योपासीनश्च प्रतीकालम्बनः, ( न च प्रतीकालम्बनानिति ) अत्र प्रतीकालम्बनशब्दो दृष्ट्युपासनपरमाह, गोबलीवर्दन्यायात् प्रतीकालम्बनव्यतिरिक्तेषु केषांचिदर्चिरादिगतिर्जैमिनिनोक्ता, प्रतीकालम्बनव्यतिरिक्तत्वोपाधिर्येषु तान् सर्वान्नयतीति सि-

* भावप्रकाशिका *

( जैमिनिमतादिति ) इदमुपलक्षणम्, बादरिमतादित्यपि द्रष्टव्यम्, उत्तरत्र मतद्वयविशेषप्रतिपादनात्, ननु आश्रयान्तरप्रत्ययस्य आश्रयान्तरे प्रतिक्षेपः प्रतीक इति हि वृद्धाः, तत्कथमुच्यते अप्रतीकालम्बनशब्देन कार्योपासकव्यवच्छेद इत्याशंक्याह ( नचप्रतीकालम्बनान्नयतीत्यत्रेति ) बादरिमताद्विशेषमुक्त्वा जैमिनिमताद्विशेषमाह ( गोबलीवर्दन्यायादिति ) जैमि-

ब्रह्मोपासीनानात्मानञ्च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनान्नयति–इति। कुतः? उभयथा च दोषात्, कार्यमुपासीनान्नयतीति पक्षे "अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य" इत्यादिकाः श्रुतयः प्रकुप्येयुः, परमेव ब्रह्मोपासीनानिति च नियमे "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति" इति पञ्चाग्निविदोऽर्चिरादिगणो नयतीति श्रुतिः प्रकुप्येत्। अत उभयस्मिन्नपि पक्षे दोषः स्यात्, तस्मादुभयविधान्नयतीति। तदेतदाह–तत्क्रतुश्चेति। तत्क्रतुः– तथोपासीनस्तथैव प्राप्नोतीत्यर्थः, "यथा क्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति" "तं यथा यथोपासते" इति न्यायात् पञ्चाग्निविदोऽप्यर्चिरादिना गतिश्रवणात् अर्चिरादिना गतस्य ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणाच्च। अत एव तत्क्रतुन्या-

---

* श्रुतप्रकाशिका *

द्धान्तिमतमिति विशेषः, (कार्यमुपासीनान् नयतीति नायं पक्ष इति) हिरण्यगर्भोपासीनानामर्चिरादिगतिरनुपपन्ना, अर्चिरादिना गतस्य परब्रह्मप्राप्तेः, न हि हिरण्यगर्भोपासकस्य परब्रह्मप्राप्तिः, यथोपासनं हि फलं, तस्मादर्चिरादिना परब्रह्मोपासक एव गच्छति न कार्योपासक इत्यर्थः। उदाहृतश्रुतिवाक्यप्रतिपन्नयोरन्यतरस्य प्रतीकालम्बनत्वात् 'अप्रतीकालम्बनान् नयतीति प्रतिज्ञानं व्याहतमित्याह (पञ्चाग्नीति) तत्र प्रतिपन्नयोरु-

* भावप्रकाशिका *

नेरप्युभयविधान्नयतीत्येव परमतात्पर्यं, आदरातिशयात्तु परब्रह्मोपासीनानामर्चिरादिगतिर्जैमिनिना उक्तेत्यर्थः। प्रतिपत्त्यभिसन्धिरिति परेषां पाठः, नच

यात् प्रकृतिविनिर्मुक्तब्रह्मात्मकात्मानुसन्धानं सिद्धम् । नामादिप्राणपर्यन्तप्रतीकालम्बनानां तूभयविधश्रुतिसिद्धोपासनाभावादर्चिन्मिश्रोपासने तत्क्रतुन्यायाच्चार्चिरादिना गतिर्ब्रह्मप्राप्तिश्च न विद्यते ॥ १४ ॥

तमिमं विशेषं श्रुतिरेवं दर्शयतीत्याह—

विशेषं च दर्शयति ॥ १५ ॥

"यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति" इत्यादिका श्रुतिर्नामादिप्राणपर्यन्तप्रतीकमुपासीना-

---

* श्रुतप्रकाशिका *

भयोरप्यप्रतीकालम्बनत्वं साधयितुं सूत्रकारस्तत्क्रतुश्चेत्युक्तवानित्यर्थः । 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इत्यत्र पञ्चाग्निविद्यानिष्ठस्यार्चिरादिगतिश्रवणात् तया गतस्य ब्रह्मप्राप्त्याऽपुनरावृत्तिश्रवणात् फलस्य च यथोपासनभावित्वात् अर्चिरादिना ब्रह्मप्राप्तिफलोपासननिष्ठः पञ्चाग्निविद्यानिष्ठो ब्रह्मोपासक एव, तत्र 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इति विभागान्यथानुपपत्त्या स्वात्मविशिष्टब्रह्मोपासनं ब्रह्मात्मकस्वात्मोपासनं चेति कल्प्यं ब्रह्मप्राप्त्यानुगुण्यात् पृथङ्निर्देशावैयर्थ्याच्चेत्यर्थः । के पुनरत्र प्रतीकालम्बना इत्यत्राह ( नामादीति ) ॥ १४ ॥

विशेषं च दर्शयति ॥ १५ ॥ यावन्नाम्नो गतं—देवादिनाम्नो गोचर इत्यर्थः, 'ब्रह्मणा सह ते सर्वे' इत्यादिवचनं नार्चिरादिगतपुरुषविषयम्, अपि तु चतुर्मुखलोकस्थयोगिविषयं 'ते ब्रह्मलोके' इति, ब्रह्मैव लोको ब्रह्मलोकः तत्र वर्तमाना ब्रह्मनिष्ठाः परान्तकाले 'अन्तकाले च मामेव'

छ भावप्रकाशिका छ

कार्ये प्रतिपत्त्यभिसन्धिरिति तन्मते सूत्रपाठश्च ॥ छ ॥

नां गत्यनपेक्षं परिमितफलविशेषं च दर्शयति, तस्मादचिन्मिश्रं केवलं वा चिद्वस्तु ब्रह्मदृष्ट्या तद्वियोगेन च य उपासते न तान्नयति, अपि तु परं ब्रह्मोपासीनानात्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकं चोपासीनानातिवाहिको गणो नयतीति सिद्धम् ॥ १५ ॥

कार्याधिकरणं समाप्तम् ।

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
चतुर्थस्याध्यायस्य तृतीयः पादः ॥



* श्रुतप्रकाशिका *

इत्युक्तचरमदेहावसानसमये परामृतात्—प्रसन्नात् ब्रह्मणो हेतोः सर्वे परिमुच्यन्त इत्यर्थः । ब्रह्मलोकशब्दस्य कर्मधारयः स्वतः प्राप्तः, वर्तमानशब्दाध्याहारस्तुल्यः, अन्तकालशब्दस्य चरमदेहावसानपरत्वं स्मृतिप्रसिद्धम् । अतोऽस्मिन्नेव पक्षे स्वारस्यम् । अधिकरणार्थमुपसंहरति ( तस्मादिति )

अत्र परेषां पूर्वपक्षसूत्राण्येव सिद्धान्तसूत्राणि, 'परं जैमिनि'रित्यादिसूत्रत्रयं पूर्वपक्षविषयं, तत्तु सर्वाधिकरणरीतिविरोधात् सूत्रकाराभिप्रायविरुद्धम् । सत्यपि सिद्धान्तोपक्रमेऽधिकरणे सिद्धान्तावसानत्वं सर्वत्र दृष्टम् , न तु पूर्वपक्षावसानत्वं, परविद्याप्रकरणे गतिकीर्तनं स्तुत्यर्थमित्यनुपपन्नम् , अन्यफलतयाऽवगम्यमानेनान्यस्तुत्यनुपपत्तेः , गतिर्हि सगुणविद्याफलत्वेन मता, यत्तूक्तं 'प्रजापतेः सभा'मित्यत्र कार्ये प्रत्यभिसन्धिरुपपद्यते 'ते यदन्तरा' इति पूर्ववाक्यविच्छेदात् , प्रकरणाद्धि श्रुतिवाक्ये बलीयसी इति, तदयुक्तं 'यशोऽहं

* भावप्रकाशिका *

भाष्ये पूर्वपक्षोक्तवचनस्य सिद्धान्ते अपरिहृतत्वात् स्वयं तस्यार्थमाह ( ब्रह्मणा सह ते सर्वे इत्यादीति ) ( परेषामित्यादि ) ( परविद्याप्रकरण इति ) कठवल्लीषु तयोर्ध्वमायन्निति गतिकीर्तनमित्यर्थः ( श्रुतिवाक्ये बलीयसी इति )

* श्रुतप्रकाशिका *

भवाणि ब्राह्मणाना' मिति सर्वात्मकत्वकीर्तनात्सगुणब्रह्मणस्सर्वात्मत्वकीर्तनानुपपत्त्या च परप्रकरणाविच्छेद इति यतः, न च वाच्यं सगुणेऽपि ब्रह्मणि सर्वकामत्वादिवदुपासनार्थं प्रशंसार्थं वा तदिति, तत्र पूर्वापरवाक्ययोः परविषयत्वेऽवगम्यमाने मध्यगतवाक्यस्य पदश्रुतेर्वाऽग्निना सिञ्चेदितिवदयोग्यार्थत्वेन दुर्बलत्वात्प्रजापतिशब्दस्य परविषयत्वेऽपि 'प्रजापतिश्चरति गर्भे अन्त' रितिवत् प्रयोगोपपत्तेः, परविषयत्वकार्यविषयत्वयोरेकवाक्यत्वानुपपत्त्या वाक्यभेदकल्पनप्रसङ्गात् एकवाक्यत्वे सम्भवति वाक्यभेदायोगाच्च प्रत्यभिसन्धिरनुपपन्नः, परब्रह्मण एव निरवधिककल्याणगुणकस्य सर्वान्तरात्मत्वात्सर्वात्मत्वकीर्तनस्य प्रशंसार्थत्वमप्ययुक्तम्। यत्तूक्तं—विभोर्गन्तव्यत्वानुपपत्तिर्भूगतेन प्रदेशान्तरगमनवत् पयसो दध्याद्यवस्थापत्तिवच्चांशभेदेनावस्थाभेदेन च गन्तव्यभावोऽनुपपन्नः, निरंशत्वादवस्थाभेदशून्यत्वाच्च ब्रह्मणः गन्तुश्च जीवस्य ब्रह्मावयवत्वे तद्विकारत्वे च तत्प्रहाणेन स्थित्यभावात् गमनमयुक्तं, मध्यमपरिमाणत्वे अनित्यत्वात् अणुत्वे कृत्स्नशरीरवेदनानुपपत्तेः व्यापित्वे गत्यनुपपत्तेश्च न मार्गगमनं, संसार्यात्मनः पारमार्थ्ये बन्धादनिर्मोक्षः, मोक्षे स्वरूपनाश इत्यादितर्कबलात् 'परं जैमिनि' रित्यादिसूत्राणां पूर्वपक्षविषयतेति, तदप्ययुक्तं, ग्रामादिगतेरिव ब्रह्मसंयोगार्थत्वाभावादर्चिरादिगतेः, निःशेषप्रतिबन्धनिवृत्त्यर्था हि सा, तस्याश्च

* भावप्रकाशिका *

प्रजापतिश्रुतिः तद्युक्तं वाक्यं चेत्यर्थः ( प्रशंसार्थं वा तदिति ) तत् सर्वात्मककीर्तनमित्यर्थः, वाक्यभेदस्तु अस्माकमिष्ट एवेत्याशङ्क्याह ( एकवाक्यत्वे सम्भवतीति ) ( भूगतेन प्रदेशान्तरगमनवदिति ) यथा पृथिवीस्थ एव पृथिवीं देशान्तरद्वारेण गच्छति, नहि तत्र पृथिवीप्रागप्राप्तेति शक्यते वक्तुं, यथा न्यग्रोधं प्राप्तेन वानरेण अग्रप्रदेशविशेषविशिष्टस्य न्यग्रोधस्यैव प्राप्यत्वं तद्वदित्यर्थः ( पयसो दध्याद्यवस्थाप्राप्तिवच्चेति ) यथा प्राप्तस्यैव पयसो दध्याद्यवस्थतया आतञ्चनादिभिः प्राप्यत्वमित्यर्थः, यद्वा दध्याद्यवस्थाभिन्नस्वरूपप्राप्तिवदित्यर्थः ( बन्धादनिर्मोक्ष इति ) स्वरूपस्य अन्यथाकर्तुमशक्यत्वादिति भावः , ( उभयथा च दोषादिति पठ्यमानत्वादिति ) एतस्यैव साम्प्रदायिकत्वेन उभयथा अदोषात् तत्क्रतुश्चेति

* श्रुतप्रकाशिका *

कालापेक्षावद्देशापेक्षा युज्यते, 'यावन्न विमोक्ष्ये' इति कालापेक्षा ह्युपलभ्यते, परिमाणविकल्पेन गमनानुपपत्तिरपरविद्याफलत्वेऽपि प्रसजेदिति स्वव्याघातः, न च गतेर्मिथ्यात्वेन तत्रोपपत्तिः, विभुत्वस्य गतिमात्रविरोधित्वात्सत्यगमनमेव विभुत्वविरोधीति चेन्न, दृष्टान्ताभावात् व्याप्त्यसिद्धेः, विभुत्वगत्योर्विरोधो नाम नियमेन भिन्नाधारत्वलक्षणः, ततश्च यत्र विभुत्वाभावस्तत्रैव सत्यगतिदर्शनात् विरोधो निश्चीयेत, न च विभुत्वानाश्रयघटादिनिष्ठं गमनं त्वन्मते सत्यम् , तस्मात् गतिमात्रं विभुत्वविरोधीति स्वव्याघातो दुस्तरः, अणुत्वे कृत्स्नदेहवेदनानुपपत्तावपि तुल्यो व्याघातः, तत्रापि वास्तवकृत्स्नवेदनस्यैवाणुत्वविरोध इति चेत्, पूर्ववत् दृष्टान्ताभावात् व्याप्त्यसिद्धेः, प्रभाप्रभावन्न्यायेनानुपपत्तिरपि नास्तीति प्रागेवोक्तं, संसारित्वस्य पारमार्थ्येऽपि स्वरूपत्वाभावादनिर्मोक्षस्वरूपनाशौ न स्याताम् । यत्तु संसारस्य कर्मनिमित्तत्वे सूक्ष्मापराधसम्भवात् कर्तृत्वशक्तिसद्भावाच्च निश्शेषकर्मक्षयाऽनुपपत्त्यादि जल्पितं, तत् 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते' इति शास्त्रबलादीश्वरप्रसादशक्तिद्वारा निवर्तनीयत्वान्नोपपन्नं, या तु स्वपक्षे मोक्षोपपत्तिः, सा च प्रागेव ध्वस्ता । अप्रतीकालम्बनानिति पृथगधिकरणयन्ति, सगुणब्रह्मव्यतिरिक्तविकारालम्बनाः प्रतीकालम्बनाः, तेषां पितृयाणतृतीयस्थानसम्बन्धाभावात् प्रतीकविशेषणत्वेन ब्रह्मणोऽप्युपासितत्वात् 'ये चेमेऽरण्ये' इत्यत्र तेषामप्युपादानात्सर्वान् विकारालम्बनानमानवो ब्रह्मलोकं नयतीति पूर्वपक्षं कृत्वा प्रतीकालम्बनान्वर्जयति, तद्व्यतिरिक्तान्विकारालम्बनान् नयतीत्युभयथाऽभ्युपगमेऽपि दोषाभावादिति योजयन्ति, तत्र तावदधिकरणभेदोऽनुपपन्नः, त्रिशिरस्के विचारे जैमिनिपक्षस्य सिद्धान्त्येकदेशिमतत्वादप्रतीकालम्बनानित्यस्य साक्षात्सिद्धान्तपरत्वाच्चाधिकरणभेदानुपपत्तिः 'उभयथा च दोषा' दिति पठ्यमानत्वाददोषादिति पदमनुपपन्नम्, उभयथा दोषादित्यर्थानौचित्यं च। स्वपक्षे दोषाभावमात्रादपि परपक्षे दोषोद्घाटनं हि स्वपक्षदार्ढ्यहेतुः ।

अपरे तु 'सामीप्यात्तु तद्व्यपदेश.' इत्यन्तं पूर्वपक्षमुक्त्वा सिद्धान्तं वक्तु-

☙ भावप्रकाशिका ☙

पाठोऽसांप्रदायिक इति भावः ( अपरे त्वित्यादि ) ( वाक्यभेदप्रसंगादिति )

* श्रुतप्रकाशिका *

मन्तरा चिन्तान्तरपरं 'कार्यात्यये' इत्येतद्व्याचक्षते, कार्यब्रह्मप्राप्तानां पुनरावृत्तिरस्ति, 'तेषामिह न पुनरावृत्ति'रिति वाजसनेयके इहशब्दश्रवणात्तस्य कल्पविषयत्वात् कल्पान्तरे चावृत्तिरिति पूर्वपक्षं कृत्वा 'श्वो भूते निर्वपे' दिति श्वोभावस्येव सर्वकल्पानामिहशब्दार्थत्वाविशेषादन्यथा अनावृत्तिः स्यात् इह स्यादिति वाक्यभेदप्रसङ्गात्, 'एकया यान्त्यनावृत्तिमन्ययाऽऽवर्तते पुन' रित्युक्तवैषम्याभावप्रसङ्गाच्च कार्यब्रह्मप्राप्तानामपि नावृत्तिरिति, अतस्तत्सामर्थ्यात् कार्यात्यये तदध्यक्षेण सह परब्रह्मप्राप्तिरित्येवं निर्णीय 'परं जैमिनि' रिति पूर्वोक्तस्य पूर्वपक्षस्य सिद्धान्तमाहुः, तत्र चाप्रतीकालम्बनान् प्रतीकालम्बनव्यतिरिक्तान् कार्यब्रह्मोपासकान् परब्रह्मोपासकांश्च नयति, हिरण्यगर्भोऽहम्भविष्यामीति प्रवृत्ताः कार्यब्रह्मोपासकाः, उभयेषामप्यर्चिरादिमार्गेण गतिः 'तयोर्ध्वमाय'न्नित्यादिश्रुतेः, पर्यङ्कविद्यापञ्चाग्निविद्ययोः कार्यब्रह्मोपासकस्यार्चिरादिश्रवणात् कार्यब्रह्मविदः क्रममुक्तिरतोऽनावृत्तिः, परब्रह्मविदस्तु सद्योमुक्तिः, अर्चिरादिना सत्यलोकमतिक्रम्य कारणे ब्रह्मणि सूक्ष्मदेहस्य करणानाञ्च प्रविलय इति 'परं जैमिनि' रित्यनेन न विरोधः, ब्रह्मणो विभुत्वेऽपि कार्यमण्डलातिक्रमरूपा गतिः, जीवत्वस्यौपाधिकत्वाल्लिङ्गगमनमेव गतिरिति सिद्धान्तयन्ति, तत्र हिरण्यगर्भं प्राप्तानां सर्वेषामपुनरावृत्तिश्चेदयुक्ता, ब्रह्मलोकगतानां श्वेतमहाभीषादीनां पुनरावृत्तिस्मरणात् तत्रत्यज्ञानिनामपुनरावृत्तिश्चेदभिमता, यत्तु हिरण्यगर्भोऽहं भविष्यामीति कार्यब्रह्मोपासीनानामर्चिरादिगत्या तत्प्राप्तिरिति, तदयुक्तं, हिरण्यगर्भस्य क्षेत्रज्ञतया तदुपासकानाममृतत्वप्राप्त्यभावादेवार्चिरादिगत्यनुपपत्तेः, तस्य च कार्यत्वकर्मवश्यत्वानुपास्यत्वादि च मुहुरुपपादितम्, अतस्तदुपासकानामप्रतीकालम्बनत्वमयुक्तं, जापकोपाख्याने

* भावप्रकाशिका *

अनावृत्तिसम्बन्धस्य एतत्कल्पसम्बन्धस्य च बोधनादिति भावः (परं जैमिनिरित्यनेन विरोध इति) परं जैमिनिरित्यनेन सिद्धान्तसूत्रेण अप्रतीकालम्बनानिति सूत्रस्येति भावः (कार्यमण्डलातिक्रमरूपा गतिरिति) उपपद्यत इति शेषः, ननु उपाधिपरिच्छिन्नब्रह्मप्रदेशस्य घटावच्छिन्नब्रह्मप्रदेशस्य घटावच्छिन्नाकाशस्थानीयस्य जीवस्य कथं गमनमित्यत्राह (जीवत्वस्यौपाधिकत्वा-

* श्रुतप्रकाशिका *

ब्रह्मकायं प्रविशतो जापकस्य जिह्वया निष्क्रा... मूर्द्धन्यनाड्या निष्क्रमणाभावादर्चिरादिगत्यभावः स्फुटतरः । 'अथवा गच्छेत तत्र ब्रह्मकायनिषेवणम् । उत्क्रान्ति च मार्गस्थः शीतीभूतो निरामयः' इति ब्रह्मकायनिषेवणमिच्छतो मुक्तिमार्गस्थतयोत्क्रमणवचनाच्च हिरण्यगर्भं प्राप्नुवतो नार्चिरादिगतिः, अर्चिरादिना प्राप्यत्वं च न चतुर्मुखलोकस्योपपद्यते, नारदादीनामादित्यमण्डलमभित्त्वा ब्रह्मलोकगमनदर्शनात्, 'अपुनर्भवाय कोशं भिनत्ति कोशं भित्त्वा शीर्षकपालं भिनत्ति' इत्युपक्रम्य 'पृथिवीं भिनत्ति अपो भिनत्ति' इत्यारभ्य 'अव्यक्तं भिनत्त्यक्षरं भिनत्ति मृत्युं भिनत्ति' इत्यभिधानात् ब्रह्माण्डतदावरणात् बहिर्भूतत्वादव्यक्ताक्षरतमसां च न शरीरानुप्रविष्टपृथिव्यादीनां भेदनं तत्रोच्यते 'कोशं भिनत्ति शीर्षकपालं भिनत्ती' त्यभिधाय पृथिव्यादिभेदनप्रतिपादनस्य पार्थिवाण्डकटाहतदावरणविषयतया अवर्जनीयत्वात्, जापकोपाख्याने 'द्वाभ्यां मुक्तं त्रिभिर्मुक्त' मिति मुक्तप्राप्यस्य परमस्थानस्य गुणत्रयोत्तीर्णत्वाभिधानात् 'न कालस्तत्र वै प्रभु' रित्यत्राकालकाल्यत्वप्रतिपादनात्, ब्रह्मलोकस्य च प्राकृतत्वेन गुणत्रयोत्तीर्णत्वायोगात् द्विपरार्द्धावसानत्वेन अकालकाल्यत्वायोगात्, अत एव 'अक्षरे परमे व्योम' न्नित्यक्षरत्वश्रवणविरोधाच्च तमसः परत्वाद्ययोगाच्च न चतुर्मुखलोकोऽर्चिरादिप्राप्यः, कार्यब्रह्मोपासकान् परब्रह्मोपासकांश्च नयतीत्युभयथाशब्दव्याख्यानमनुपपन्नम्, एवमुभयथाभाव एव दोषात्, न स कारणं, 'कारणं तु ध्येयः' इति कार्योपासनं हि प्रतिषिध्यते, क्रममुक्त्यभ्युपगमादविरोध इति चेन्न, अर्चिरादिगतस्य क्रममुक्तेः श्रुतिविरुद्धत्वात्, स 'एनान् ब्रह्म गमयती' ति हि श्रुतिः न तु क्रमेण गमयतीति, हिरण्यगर्भादीनां मोक्षप्रदत्वाभावादेव तदुपासकानामर्चिरादिगत्ययोगाच्चैवं व्याख्यातुमयुक्तं, कार्योपासकस्यार्चिराद्यन्वये पर्यङ्कविद्यादिकं प्रमाणमिति चेन्न— कारणत्वबलादाकाशादिशब्दानां प्रसिद्धार्थपरत्वाभावददर्चिराद्यन्वयबलेन

* भावप्रकाशिका *

दिति ) ( ब्रह्मकायं प्रविशत इति ) प्रवेक्ष्यत इत्यर्थः ( पर्यङ्कविद्यादिकं प्रमाणमिति चेदिति ) नहि परब्रह्मणः पर्यङ्कारूढविग्रहत्वं सम्भवतीति भावः (विलक्षणविग्रहयोगस्यैवेति ) 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' इति

* श्रुतप्रकाशिका *

तस्याप्युपास्यसमर्पकशब्दस्य कार्यपरत्वासिद्धेः, विग्रहाद्यन्वयात् कार्यत्वमिति चेत् विलक्षणविग्रहयोगस्यैव कारणत्वसाधकत्वात् ।— अन्ये त्वाहुः—कार्यं ब्रह्म हिरण्यगर्भलोकः 'परं चापरं च' इत्युपक्रम्य 'स सामभिरुन्नीयते ब्रह्म-लोक' मिति प्रयोगदर्शनात्सर्वगतस्य परब्रह्मणो गन्तव्यत्वायोगात् पर्यङ्कविद्यायां ह्रदनदीवृक्षादिविशेषवत्त्वदर्शनात् हिरण्यगर्भसामीप्येन लोकस्य ब्रह्मशब्दवाच्यत्वोपपत्तेश्च लोकप्राप्तिरिति पूर्वपक्षं कृत्वा ब्रह्मशब्दमुख्यत्वात् लोकस्थस्य हिरण्यगर्भस्य सतः परमात्मनः प्राप्यत्वेऽपि पूर्वपक्षयुक्तीनां सम्भवान्मुक्तानां चतुर्मुखलयावधि ब्रह्मलोके भोगाभ्युपगमाद्धिरण्यगर्भाकारं परं ब्रह्मैव नयतीति सिद्धान्तयन्ति । अत्र चतुर्मुखलोकप्राप्तिरेव विद्याफलं तत्राप्रलयात् भोगः तल्लोकनाशे सृज्यताहेतुकर्माभावात् मोक्ष इति बादरिमतं, ब्रह्मलोकप्राप्त्य-नन्तरमेव ब्रह्मणि लयः तेन लिङ्गनाशः, ततश्च गुणाष्टकाविर्भावात्स-मानभोगता, ब्रह्मलोके लीने परमाकाशप्राप्तिः तत्र च भोग इति जैमि-नेरभिप्राय इति पक्षद्वयवैषम्यं दर्शितं भवति, अप्रतीकालम्बनानिति किं सर्वेऽप्युपासका देवयानेन ब्रह्मलोकं यान्ति ? उत नेति चिन्ता, तत्र देवयानेन गतान्सर्वानमानवः परं ब्रह्म हिरण्यगर्भाख्यं नयति ? उत नेति, 'द्वे सृती अश्रृणवं पितॄणामहं देवानामुत मर्त्यानां'मिति मार्गद्वित्वं प्रतिज्ञाय 'अथ ये यज्ञेन दानेन तपसा लोकं जयन्ति ते धूममभिसं-विशन्ति इतीष्टादिकारिणां धूमादिप्राप्तिश्रवणात्, तद्व्यतिरिक्तसर्वोपासकानामु-त्तरमार्गस्य प्राप्तत्वादब्रह्मविदां पञ्चाग्निवित्प्रभृतीनामप्यर्चिरादिश्रवणात् 'एष पन्था ब्रह्मणो भानुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च' इति तैजसाख्यपञ्चा-ग्निवित्प्रभृतिपुण्यकृतां ब्रह्मविन्मार्गगमनदर्शनात्, 'अयं वा व एषोऽग्निश्चित',

* भावप्रकाशिका *

विद्युद्वर्णविग्रहयोगस्य कारणत्वसाधकत्वादिति भावः ( अन्ये त्वाहुरित्यादि ) ( ब्रह्मलोकमिति प्रयोगदर्शनादिति ) उपक्रमोपसंहारस्थब्रह्मलोकशब्दयोरैका-र्थ्यस्य वक्तव्यत्वात् ब्रह्मलोकशब्दस्य पृथिव्यन्तरिक्षलोकप्रायपाठेन चतुर्मुख-लोकपरत्वस्य वक्तव्यत्वाच्चतुर्मुखलोकस्य ब्रह्मशब्दप्रयोगविषयत्वं सिद्धमिति भावः ( ह्रदनदीति ) 'तस्य वा एतस्य ब्रह्मलोकस्यारो ह्रदो मुहूर्ते यष्टिहा

* श्रुतप्रकाशिका *

इत्यादि चित्याग्न्युपासनेष्वपि देवयानश्रवणात्' 'विद्ययैव तदारोहन्ति यत्र कामाः परागता' इत्यन्ते ब्रह्मलोकप्राप्तिश्रवणाच्च सर्वोपासकानां देवयानप्राप्तौ सिद्धायां 'स एना' निति विशेषणोक्तान् देवयानेन गतान्सर्वानमानवो ब्रह्म गमयतीति पूर्वपक्षं कृत्वा 'यावन्नाम्नो गत' मित्यादि फलप्राप्तौ ब्रह्मलोकस्य देवयानापेक्षायां प्रमाणाभावान्न सर्वेषां देवयानप्राप्ति रिति सिद्धेः, पञ्चाग्निवित्प्रभृतीनामब्रह्मविदाममपि ब्रह्मलोकप्राप्ततया प्रमाणसिद्धानां लोकवासमात्रमेव, न तत्रत्यचतुर्मुखप्राप्तिः, ब्रह्मविदामेव चतुर्मुखप्राप्तिः, एवमुभयथाभावे दोषाभावात्सर्वेषां ब्रह्मप्राप्तौ ब्रह्मशब्दस्य कार्यवचनत्वे परवचनत्वे चोभयथाऽपि ब्रह्मविदामितरतुल्यफलत्वमितरेषां ब्रह्मवित्तुल्यफलत्वं चेति दोषप्रसङ्गात्, ततश्च तत्क्रतुन्यायविरोधात्। अतो देवयानेन ब्रह्मलोकगतेषु अब्रह्मविदो न ब्रह्म गमयति, ब्रह्मविदस्तु गमयति, अब्रह्मविदोऽपि तत्र लब्धज्ञानाश्चेत् क्रमेण मुच्यन्ते, यथा पञ्चाग्निविदः यथा च चित्याग्निविदः– इति सिद्धान्तयन्ति, अत्र ब्रूमः–कार्यं ब्रह्म ब्रह्मलोकः चतुर्मुखः परं ब्रह्मेत्ययुक्तं तस्यापि सृज्यत्वश्रवणेनानपोदितेन कार्यब्रह्मान्तर्भावावगमात्, न च तत्र ब्रह्मगुणानां ज्ञानानन्दैश्वर्यादीनां नित्याविर्भूतत्वात् परमात्मत्वम्, वेदापहारादिषु ज्ञानशक्त्यैश्वर्यादीनां परिमितत्वदर्शनात् योगाधीनभगवत्साक्षात्कारत्व–तदाहितसर्गशक्तित्वदर्शनादुभयभावनान्वयेनानुपास्यत्वावगमाच्च 'ब्रह्मा विश्वः कतमः स्वयम्भुः प्रजापतिः संवत्सर इति' 'संवत्सरोऽसावादित्यो य एष आदित्ये पुरुषः स परमेष्ठी ब्रह्मात्मा' इत्यादिश्रुतयस्तु ब्रह्माण्डोदरवर्तितत्तद्विभूतिविशेषनिर्वाहकत्वाभिप्रायतया न निरङ्कुशैश्वर्ये प्रमाणं, 'हिरण्यगर्भः समवर्तत' इत्याद्यप्यृचं स्वाकाशप्राणादिवाक्यतुल्यन्यायत्वादुपपत्यन्तरैश्च परमपुरुषपरमिति समर्थितम्। अपरेषां प्रतिक्षेपे दर्शितैर्मानन्यायैर्देवयानमार्गस्य चतुर्मुखलोकप्राप्तिहेतुत्वमयुक्तमिति, तन्न सिद्धान्तेऽनुमन्तव्यम्, ह्रदनदीवृक्षसंस्थानादियोगो न चतुर्मुखलोकत्वे प्रमाणं तलवकारसाम्नि 'सप्तमो ब्रह्मलोकः' इत्युपक्रम्य 'उत परस्मात् उतापरस्मात्पर-

* भावप्रकाशिका *

विरजा नदी तिल्यो वृक्षः' इत्यादि प्रमाणादिति भावः, ( अहीननयादिति )

* श्रुतप्रकाशिका *

स्तृतीयादथवा चतुर्थात् । सहस्रस्थूणे विधृते दृढ उग्रे यत्र देवानामधिदेव आस्ते' इति चतुर्मुखलोकात्परतः परत्र सहस्रस्थूणाविशिष्टस्थानविशेषावगमात्, अतः सत्यलोकचतुर्मुखयोर्देवयानप्राप्यत्वपरब्रह्मत्वाभावात् चतुर्मुखलोके गुणाष्टकाविर्भाव आप्रलयान्मुक्तानां तत्रावस्थानं ततः परमाकाशप्राप्तिरित्यनुपपन्नम् , अनन्तरं चाब्रह्मविदोऽपि देवयानेन गच्छन्तीति न युक्तं 'स एनान् ब्रह्म गमयति' इति देवयानगतानामविशेषेण ब्रह्मप्राप्तिश्रवणात् , न पञ्चाग्निविदां ब्रह्मप्राप्तिश्रवणं 'स एना' निति वाक्यसङ्कोचकं तेषामब्रह्मवित्त्वे प्रमाणान्तराभावात् देवयानगतिश्रवणेनैव तत्रापि ब्रह्मवेदनस्य कल्प्यत्वात् चित्याग्निविदां प्रकरणे देवयानश्रवणं प्रासङ्गिकमहीननयात् परविद्याप्रकरणान्वयि स्यात्, 'तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च' इत्यत्र ब्रह्मविद एव पदान्तरविशेष्यत्वसम्भवात् तदपि नाब्रह्मविदां देवयानगतौ प्रमाणम्, 'द्वे सृती अशृणव' मित्यत्र द्वित्वावधारणमपि नास्मिन्नर्थे प्रमाणम् 'अथ ये यज्ञेन दानेन' इति वाक्यस्य परविद्याव्यतिरिक्तश्रेयःप्रदर्शनार्थत्वसम्भवात्, एवं सर्वत्र ब्रह्मवेदनकल्पन—प्रकरणोत्कर्ष—सामानाधिकरण्य— प्रदर्शनार्थत्वादिभिर्निर्वाहसम्भवात् न काचिदपि श्रुतिरब्रह्मविदां देवयानगमने प्रमाणम्, अत एव देवयानगतान्सर्वान् वा, न वेति चिन्ता निरवकाशा । हिरण्यगर्भमेव परं ब्रह्म मन्वानस्य नाब्रह्मविदां परब्रह्मप्राप्तिः, तत्र गुणाष्टकाविर्भावात् ब्रह्मसमानभोगः, तत्र परब्रह्मप्राप्तानामपुनरावृत्तिरिति सर्वमिदमनुपपन्नम् , अब्रह्मविदां श्वेतमहाभीषकरैवतप्रभृतीनां ब्रह्मसभायामासिकाप्रतिपादनात् , क्षुत्पिपासाकामाद्यभिभवपुनर्जन्मप्रतिपादनाच्च, श्वेतादीनामब्रह्मवित्त्वं च पुनरावृत्त्यैव सिद्धम् । नन्वब्रह्मविदां देवयानेन परब्रह्मप्राप्तिरेव निवार्यते, न तु परब्रह्मप्राप्तिमात्रम्, अमानवेन

* भावप्रकाशिका *

ज्योतिष्टोमप्रकरणश्रुतायाः 'द्वादशाहीनस्ये' ति विहितायाः द्वादशोपसत्ताया अहर्गणे उत्कर्षवदिति भावः ( परविद्याव्यतिरिक्तश्रेयःप्रदर्शनार्थत्वसम्भवादिति ) 'ये यज्ञेन दानेन तपसा लोकान् जयन्ति ते धूममभिसम्भवन्ती' त्येतत् सर्वेषां परविद्याव्यतिरिक्तश्रेयसां धूमादिमार्गसाधनत्वपरम् , नतु यज्ञादिमात्रस्येति भावः । ( हिरण्यगर्भमेव परं ब्रह्म मन्वानस्येति ) सर्वमिदमनुपपन्नमित्युत्तरेण-

* श्रुतप्रकाशिका *

नयनं देवयानगतब्रह्मविदामेव, नान्येषाम्, अमानवनीतानामेव अपुनरावृत्तिर्नान्येषां ब्रह्मप्राप्तानाम्, अतः सर्वमुपपन्नमिति, नैवम्—'नान्यः पन्था अयनाय विद्यते इति ब्रह्मविद्व्यतिरिक्तानां ब्रह्मप्राप्तिनिषेधात्, तत्राप्यब्रह्मविदां देवयानेन ब्रह्मप्राप्तिर्निषिध्यते, न ब्रह्मप्राप्तिमात्रमिति चेत्, तर्ह्यब्रह्मवित्तयाऽभिमतानां पञ्चाग्निविदां देवयानगतिर्न स्यात्, यद्युच्येत विशिष्टमिह निषेध्यमब्रह्मविदां देवयानविशिष्टब्रह्मप्राप्तिर्नास्ति, तस्मादब्रह्मविदां ब्रह्मप्राप्तिविधुरदेवयानगतिर्देवयानगतिविधुरब्रह्मप्राप्तिश्चोपपद्यत इति, तदयुक्तम्—अयनायेत्येतावन्मात्रस्य श्रुतत्वात् देवयानेन ब्रह्मण इत्यध्याहारप्रसङ्गाच्च । ननु नाध्याहारापेक्षा, अयनं चेद्देवयानपूर्वकं ब्रह्मकर्मकं च विदितमिति चेन्न, त्वया देवयानविधुरब्रह्मप्राप्तेर्ब्रह्मप्राप्तिविधुरदेवयानगतेश्चाभ्युपगतत्वात् । किञ्च अयनशब्दस्य कस्सङ्कोचः, येन विशिष्टायनविवक्षाऽऽश्रीयेत । अब्रह्मविदां देवयानगमनशास्त्रं ब्रह्मप्राप्तानां केषाचित्पुनरावृत्तिशास्त्रं चेति चेन्न, तयोस्तद्विषयत्वेऽयनशब्दसङ्कोचः, तत्सङ्कोचे तयोस्तद्विषयत्वमित्यन्योन्याश्रयप्रसङ्गात्, तस्माद्यस्मिन्मते श्रुत्यसङ्कोचः शास्त्रद्वयार्थवत्त्वं च तदेवोपपन्नमिति तावकः पक्षोऽनुपपन्नः । किञ्च सर्वैरितरैरधिकरणभेदो वर्णितः, तदयुक्तं—सूत्रकारशैलीविरोधात्, अस्मिन्शास्त्रे सर्वत्र बादरायणकीर्तनस्य ऋष्यन्तरमतव्यावृत्तिविवक्षामूलत्वं तावत् दृश्यते, 'तदुपर्यपि बादरायणः सम्भवा' दित्यत्र कर्मकाण्डदेवताधिकरणप्रसिद्धजैमिनिमतात् वैषम्यविवक्षया बादरायणकीर्तनं दृष्टं 'मध्वादिष्वसम्भवादनधिकारं जैमिनिः' 'भावं तु बादरायणोऽस्ति हि' 'धर्मं जैमिनिः' 'पूर्वं तु बादरायणः' 'शेषत्वात् पुरुषार्थवादो यथाऽन्येऽष्विति जैमिनिः' 'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्' 'परामर्शं जैमिनिः' 'अनुष्ठेयं बादरायणः साम्यश्रुतेः' इत्यधिकरणेषु पूर्वसूत्रोपन्यस्तऋष्यन्तरमतव्यावृत्त्यर्थत्वं बादरायणकीर्तनस्य दृष्टं, यत्र ऋष्यन्तरमतमङ्गीकृतं तत्र न बादरायणकीर्तनं दृष्टम्, यथा 'अनुस्मृतेर्बादरिः' 'सम्पत्तेरिति जैमिनिः' 'सुकृतदुष्कृते एवेति तु बादरिः' 'अवस्थितेरिति काशकृत्स्नः' 'तद्भूतस्य तु नातद्भावो जैमिनेरपि' 'आर्त्विज्यमित्यौडुलोमिः' इत्यादिषु । ऋष्यन्तराणां मिथो विरुद्धेषु मतेषु चरमस्याङ्गी-

* श्रुतप्रकाशिका *

कारात् बादरायणमतस्य पृथक्कीर्तनाभावश्च दृष्टः, 'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः' 'अवस्थितेरिति काशकृत्स्नः' 'तदुपलक्षणार्थेति तु कार्ष्णाजिनिः' 'सुकृतदुष्कृते एवेति तु बादरिः' 'स्वामिनः फलश्रुतेरित्यात्रेयः' 'आर्त्विज्यमित्यौडुलोमिः' इत्यादिषु सूत्रेषु । अतो बादरायणकीर्तनम् अत्यन्तरमतवैषम्यप्रदर्शनार्थम्, उभयशब्दश्चोपन्यस्ताकारद्वयपरो दृष्टः, 'उपपूर्वमपीत्येके' 'बहिस्तूभयथाऽपि' 'अभावं बादरिः' 'भावं जैमिनिर्विकल्पामननात्' 'द्वादशाहवदुभयविधं'मिति च, एवमुभयशब्दस्य कीर्तितमतद्वयव्यावृत्त्यर्थत्वदर्शनात् बादरायणकीर्तनस्य अत्यन्तरमतवैषम्यप्रदर्शनार्थत्वात्, अत एव दोषशब्दस्य नञ्पूर्वकत्वायोगाच्च त्रिशिरस्कविचारास्पदैकार्थविषयत्वं 'कार्यं बादरिः' इत्यादिसूत्रसमुदायस्य स्वरसतः प्रतिपन्नमिति युक्तमैकाधिकरण्यम्, 'दर्शनाच्च' इति सूत्रे 'तयोर्ध्वमायन्' 'तस्य तावदेव' इति वाक्यमितरैरुदाहृतं, ततोऽपि 'परं ज्योतिरुपसम्पद्य' इति वाक्योदाहरणं सफलम्, अस्य वाक्यस्य साक्षान्मोक्षपरत्वसम्प्रतिपत्त्या क्रममुक्तिविषयत्वेन निर्वाहस्यानुपपन्नत्वादत्र च शरीरादुत्थानश्रवणेनार्चिरादिगतिविषयत्वस्य दुरपह्नवत्वाच्च ॥ १५ ॥

कार्याधिकरणं समाप्तम् ॥



इति श्रीहारितकुलतिलकवाग्विजयसूनुना श्रीरङ्गराजदिव्याज्ञालब्ध-
वेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधि-
गतभगवद्रामानुजविरचितशारीरकमीमांसा-
भाष्यहृदयेन श्रीसुदर्शनसूरिणा विलि-
खितायां श्रुतप्रकाशिकायां चतुर्थ-
स्याध्यायस्य तृतीयः पादः ॥



॥ भावप्रकाशिका ॥

न्वयः । तदेवोपपादयति ( अब्रह्मविदामित्यादि ) ॥ ७ ॥

कार्याधिकरणं समाप्तम् ।

इति दशोपनिषद्भाष्यकारैः श्रीरङ्गरामानुज-
मुनिभिर्विरचिताया श्रुतप्रकाशिका-
व्याख्यायां भावप्रकाशिका-
यां चतुर्थस्याध्यायस्य
तृतीयः पादः ॥

---

समाप्तश्चाध्यायः ।

समुदिताधिकरणसङ्ख्या–१५०–समुदितसूत्रसङ्ख्या–५२२ ।





श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

## चतुर्थेऽध्याये चतुर्थः पादः ।

### सम्पद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

१ अधिकरणम्

परं ब्रह्मोपासीनानामात्मानञ्च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनानामर्चिरादिना मार्गेणापुनरावृत्तिलक्षणा गतिरुक्ता । इदानीं मुक्तानामैश्वर्यप्रकारं चिन्तयितुमारभते । इदमाम्नायते–[1]"एव

* श्रुतप्रकाशिका *

सम्पद्याविर्भावः स्वेन शब्दात् ॥ १ ॥ पादसङ्गतिमाह ( परं ब्रह्मेत्यादिना ) विषयवाक्ये 'न च पुनरावर्तते' इति श्रवणादपुनरावृत्तिलक्षणेत्युक्तम्, किम् 'अस्माच्छरीरा'दित्यादिवाक्ये मुक्तस्य साध्येन रूपेण सम्बन्धः प्रतिपाद्यते ? उत स्वाभाविकस्वरूपाविर्भावः, किञ्च स्वरूपाविर्भावपरत्वे मोक्षशास्त्रस्य पुरुषार्थावबोधित्वं सम्भवति ? नेति, किं स्वरूपस्य स्वतोऽपरिच्छिन्नानन्दत्वं सम्भवति, नेति, किमानन्दस्वरूपस्य तिरोधानं सम्भवति, नेति, किमाविर्भाव-

॥ भावप्रकाशिका ॥

ननु अपुनरावृत्तिलक्षणा गतिरुक्तेति भाष्यमयुक्तं, तस्यार्थस्य 'अनावृत्तिश्शब्दा'दित्यधिकरणे समर्थयिष्यमाणत्वादित्याशङ्क्याह ( विषयवाक्य इति ) 'आप्रयाणात्तत्रापि हि दृष्टम्' इत्यधिकरणविषयवाक्ये इत्यर्थः, अर्चिरादि-

1. छा० ८-१२-२ ॥

मेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति । किमस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पन्नस्य देवादिरूपवत्साध्येन रूपेण सम्बन्धोऽनेन वाक्येन प्रतिपाद्यते ? उत स्वाभाविकस्य स्वरूपस्याविर्भावः ? इति संशये—साध्येन रूपेण सम्बन्ध इति युक्तम् । अन्यथा ह्यपुरुषार्थावबोधित्वं मोक्षशास्त्रस्य स्यात्स्वरूपस्य स्वतोऽपुरुषार्थत्वदर्शनात् । न हि सुषुप्तौ देहेन्द्रियव्यापारेषु उपरतेषु केवलस्यात्मस्वरूपस्य पुरुषार्थसम्बन्धो दृश्यते; न च दुःखनिवृत्तिमात्रं परं ज्योतिरुपसम्पन्नस्य पुरुषार्थः, येन स्वरूपाविर्भाव एव मोक्ष इत्युच्येत "स एको ब्रह्मण आन-

* श्रुतप्रकाशिका *

परत्वेऽभिनिष्पत्तिशब्दवैयर्थ्यमस्ति, नेति च, यदा वैयर्थ्यं, यदा च तिरोधानासम्भवेन स्वतोऽपरिच्छिन्नानन्दायोगात् शास्त्रस्य न पुरुषार्थपर्यवसानम्, तदा साध्येन रूपेण सम्बन्धः प्रतिपाद्यः स्यात्, यदा नाभिनिष्पत्तिव्यपदेशवैयर्थ्यं यदा च तिरोधानसम्भवेन स्वतोऽपरिच्छिन्नानन्दत्वोपपत्तेः मोक्षशास्त्रस्य पुरुषार्थपर्यवसानं, तदा स्वाभाविकस्वरूपाविर्भावः प्रतिपाद्यः स्यात्, रूपेण—आकारेण, (न च दुःखनिवृत्तिमात्रं परं ज्योतिरुपसम्पन्नस्य पुरुषार्थ इति) अत्रायं भावः—दुःखनिवृत्तिमात्रं मोक्षश्चेत्, संसारनिर्विशेषः स्यात्पुरुषार्थापुरुषार्थ-

* भावप्रकाशिका *

पादगताधिकरणविषयवाक्यपरत्वस्य वक्तव्यत्वे 'एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इति वाक्यं विवक्षितं द्रष्टव्यम् । ननु अस्मिन्नधिकरणे आगन्तुकत्वानागन्तुकत्वविचारः किमवस्थाविषयः उतावस्थावद्द्रव्यविषयः, न तावदाद्यः विकासरूपावस्थायाः सम्पत्त्यनन्तरभावि-

न्दः । श्रोत्रियस्य चाकामहतस्य" "रसꣳह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्यादिभ्यो मुक्तस्य सुखानन्त्यश्रवणात् । न चापरिच्छिन्नानन्दरूपचैतन्यमेवास्य स्वरूपं; तच्च संसारदशायामविद्यातिरोहितं परं ज्योतिरुपसम्पन्नस्याविर्भवतीति शक्यं वक्तुं, ज्ञानस्वरूपस्य तिरोधानासम्भवात्, प्रकाशपर्यायस्य ज्ञानस्य तिरोधानं तद्विनाश एवेति हि पूर्वमेवोक्तम् । न च प्रकाशमात्रस्यानन्दता सम्भवति, सुखस्वरूपता ह्यानन्दस्वरूपता, सुखस्वरूपत्वं चात्मनोऽनुकूलत्वम् । प्रकाशमात्रात्मवादिनः कस्य प्रकाशोऽनुकूलवेदनीयो

---

* श्रुतप्रकाशिका *

मिश्रत्वात् , दुःखनिवृत्तिः सुखप्राप्तिश्चेष्टे दृष्टे, सुखनिवृत्तिर्दुःखप्राप्तिश्चानिष्टे दृष्टे, तत्र दुःखनिवृत्तेरिष्टत्वात्सुखनिवृत्तेरनिष्टत्वादिष्टानिष्टमिश्रो मोक्षः संसारतुल्य इति, तस्मात्पुरुषार्थापुरुषार्थमिश्रो न मोक्ष एवेति स्वरूपभूतस्यैवापरिच्छिन्नस्यानन्दस्य तिरोधाननिवृत्तौ तथात्वं प्रकाशत इति श्रुत्यर्थ इत्यत्राह— ( न चेति ) तदुपपादयति ( ज्ञानस्वरूपस्येति ) तिरोधानतन्निवृत्त्योः सम्भवेऽपि पुरुषार्थरूपत्वं स्वरूपस्य प्रतिक्षिपति ( न च प्रकाशेति ) ( कस्येति )

ॐ भावप्रकाशिका ॐ

त्वस्य सिद्धान्तेऽभ्युपेतत्वात् , न द्वितीयः— असत्कार्यवादानभ्युपगमेनावस्थावतो ज्ञानद्रव्यस्याऽऽगन्तुकत्वशङ्काया अभावात् , घटादिष्वप्यवस्थावतो नित्यत्वात् अवस्थासम्बन्धस्यैवोत्पत्तिरूपत्वात् , नह्युत्पत्तावागन्तुकत्वात्स्वर्गसुखाद्वैलक्षण्यं मोक्षसुखे उपलभामहे , किञ्च ब्रह्मानुभवरूपस्यानन्दस्य महापुरुषार्थस्य सत्त्वेन जीवस्वरूपस्यैव साध्यत्वपुरुषार्थत्वप्रतिपादकं 'मुक्तः प्रतिज्ञानात्' 'आत्मा प्रकरणात्' इतिसूत्रद्वयमप्ययुक्तमिति चेन्न, स्वेन रूपेणाभिनिष्पद्यते' इत्यत्र रूपशब्देन ब्राह्मं रूपमपहतपाप्मत्वादिकं विवक्षितमिति 'ब्राह्मेण

भवेदिति प्रकाशमात्रात्मवादिनः कथञ्चिदप्यानन्द-स्वरूपता दुरुपपादा। स्वरूपापत्तिमात्रे च साध्ये स्वरूपस्य नित्यनिष्पन्नत्वादुपसम्पन्नस्य "स्वेन रूपे-णाभिनिष्पद्यते" इति वचनमनर्थकं स्यात्। अतो-ऽपूर्वेण साध्येन रूपेण सम्बध्यते। एवं चाभिनि-ष्पद्यत इति वचनं मुख्यार्थमेव भवति, स्वेन रूपे-णेत्यप्यानन्दैकान्तेन स्वासाधारणेनाभिनिष्पद्यत इति सङ्गच्छते इति।

---

* श्रुतप्रकाशिका *

अनुकूलत्वं नाम सप्रतियोगिको धर्मविशेषः प्रकाशवदित्यर्थः, अन्यथाऽनुकू-लत्वमेव न स्यादिति भावः। न केवलं तर्कविरोधः श्रुतिविरोधश्चेत्याह (स्वरूपापत्तीति) अनर्थकं स्यात्—अभिनिष्पत्तिशब्दानर्थक्यमित्यर्थः। स्वेन-शब्दः कथमित्यत्राह (स्वेनेति) स्वशब्दोऽसाधारण्यपरः, न त्वसाध्यत्व-परः, अभिनिष्पत्तिवचनात्स्वरूपेणाभिनिष्पद्यते—रूपविशिष्टतया साध्यत इति रूपं साध्यमित्यर्थः, (एवं चेति) स्वशब्दाभिनिष्पत्तिशब्दावुभावपि मुख्या-वित्यर्थः।

* भावप्रकाशिका *

जैमिनि'रित्यत्र स्पष्टयिष्यते, तत्सिद्धवत्कृत्य तर्कि ब्राह्मं रूपमागन्तुकम्, उत प्राक्सिद्धमिति विचार्यत इत्यभ्युपगमे दोषाभावात्, आगन्तूनां ज्ञानावस्थाविशे-षाणामप्रत्याख्यानात्, यदुक्तं किञ्चेत्यादि तन्न, अपहतपाप्मत्वादिविशिष्टस्व-स्वरूपस्यापि निरतिशयानन्दत्वसमर्थनपरमात्रपरत्वेन दोषाभावात्, भाष्ये—आत्मा-नुकूलत्वमिति, यमात्मानं प्रति यदनुकूलत्वेन वेदनीयं तत्तस्य सुखमित्यर्थः, आत्मत्वञ्च चैतन्याश्रयत्वं, ततश्च ज्ञानमात्रात्मवादे न किञ्चिदुपपद्यत इति भावः (स्वशब्दोऽसाधारण्यपर इति) आत्मात्मीयज्ञातिधनवाची स्वशब्द इत्युक्ते-रात्मीयत्वमात्रवचनोऽयं स्वशब्द इति भावः (नत्वसाध्यत्वपर इति) ... स्वशब्दस्यात्मात्मीयज्ञातिधनमात्रवाचित्वेन कथमसाध्यत्वप्रतिपादकत्वशङ्केति

एवं प्राप्ते प्रचक्ष्महे- सम्पद्याविर्भावः-इति। अयं प्रत्यगात्माऽर्चिरादिना परं ज्योतिरुपसम्पद्य यं दशाविशेषमापद्यते, स स्वरूपाविर्भावरूपः, नापूर्वाकारोत्पत्तिरूपः । कुतः ? स्वेनशब्दात्-स्वेन रूपेणेति विशेषणोपादानादित्यर्थः । आगन्तुकविशेषपरिग्रहे हि स्वेन रूपेणेति विशेषणमनर्थकं स्यात् । अविशेषणेऽपि तस्य स्वकीयरूपत्वसिद्धेः ॥ १ ॥

---

* श्रुतप्रकाशिका *

राद्धान्तं वक्तुं सूत्रमुपपादयते ( सम्पद्येति ) ( यं दशाविशेषमिति ) दशा-अवस्था, ज्ञानविकासस्य कालविशेषेऽभावादवस्थात्वं, ज्ञानस्य विकासार्हत्वात्स्वाभाविकत्वं, ( स्वेन रूपेणेति विशेषणमनर्थकं स्यादिति ) कथमानर्थक्यं स्वासाधारण्यं ह्युक्तमित्यत्राह ( अविशेषणेऽपीति ) 'परं ज्योतिरुपसम्पद्या-

* भावप्रकाशिका *

वाच्यम्, स्वीयवाचिनः सार्वदिकस्वीयपरत्वसम्भवेन असाध्यत्वप्रतिपादकत्वस्य फलतस्सम्भवादिति भावः । यद्वा आत्मपरोयं स्वशब्दः, ततश्च असाध्यत्वं फलतीति भावः, रूपं साध्यमित्यर्थ इति ग्रन्थानन्तरमेवञ्चेति प्रतीकग्रहणं दृश्यते, तत् स्वेनशब्दः कथमित्यत्राहेतिग्रन्थात्पूर्वमेव द्रष्टव्यम्, कोशान्तरं वा निरीक्षणीयम् । भाष्ये-यं दशाविशेषमापद्यत इति, अभिनिष्पत्तिवाच्यं यं दशाविशेषमापाद्यत इत्यर्थः, ततश्च स्वेन रूपेणाऽभिनिष्पद्यते इत्यस्यापहतपाप्मत्वादिविशिष्टेन स्वेन रूपेणाभिनिष्पद्यते-धर्मभूतज्ञानेन विषयीक्रियत इत्यर्थः, ततश्च विकासावस्थासम्बन्धरूपोत्पत्तेः धर्मभूतज्ञानगतत्वेऽपि अपहतपाप्मत्वादिगुणाष्टकविशिष्टात्मस्वरूपस्यापरिच्छिन्नानन्दतया पुरुषार्थरूपस्य नोत्पत्तिः, अस्मिन्नधिकरणे अपहतपाप्मत्वादिकं तद्विशिष्टस्वरूपञ्च नागन्तुकम्, अपितु संसारदशायां धर्मभूतज्ञानस्य कर्मणा प्रतिबद्धत्वात् अपहतपाप्मत्वादिगुणाष्टकविशिष्टात्मस्वरूपविषयीकरणसामर्थ्यं नास्ति तिरोधाननिवृत्तौ तु तद्विषयकं भवति,

यत्तूक्तं स्वरूपस्य नित्यप्राप्तत्वादुपसम्पद्याभिनिष्पद्यत इति वचनमनर्थकमिति; तत्रोत्तरम्—

मुक्तः प्रतिज्ञानात् ॥ २ ॥

कर्मसम्बन्धतत्कृतदेहादिविनिर्मुक्तः स्वाभाविकेन रूपेणावस्थितोऽत्र "स्वेन रूपेणाभिनिष्पद्यते" इत्युच्यते, अतो नित्यप्राप्तस्यापि स्वरूपस्य कर्मरूपाविद्यातिरोहितस्य तिरोधाननिवृत्तिरत्राभिनिष्पत्तिरुच्यते, कुतः? प्रतिज्ञानात्, सा हि प्रतिपाद्यतया प्रतिज्ञाता कुत इदमवगम्यते, य आत्मेति प्रकृतं प्रत्यगा-

* श्रुतप्रकाशिका *

भिनिष्पद्यते' इत्येतत्सम्बन्धादेव तदसाधारणत्वं सिद्धं, न ह्यन्यस्य रूपेणान्यो निष्पद्यते अतस्तत्सम्बन्धादेव तदसाधारण्यं सिद्धमिति स्वेनपदमनर्थकं स्यादित्यर्थः ॥ १ ॥

उत्तरसूत्रशङ्कामाह ( यत्तूक्तमिति ) ।

मुक्तः प्रतिज्ञानात् ॥ २ ॥ मुक्त इति प्रतिज्ञाखण्डं व्याचष्टे ( कर्मेति ) ततः किमित्यत्राह ( अत इति ) पूर्वमसिद्धायास्तिरोधाननिवृत्तेर्वाचकत्वादभिनिष्पत्तिशब्दो नानर्थक इत्यर्थः । प्रतिज्ञानादिति हेतुं व्याचष्टे ( सा हीति ) सा—तिरोधानानिवृत्तिः, निवृत्ततिरोधानं स्वरूपं प्रतिज्ञातमिति भावः, तथा प्रतिज्ञातमिति कथमवगतमित्याह ( कुत इदमिति ) ( य आत्मे-

* भावप्रकाशिका *

ततश्च तद्विषयकं ज्ञानं परमुत्पद्यते नापहतपाप्मत्वादिरूपं तद्विशिष्टस्वरूपं वा इत्येव प्रतिपाद्यते, नतु मुक्तौ धर्मभूतज्ञानस्याप्युत्पत्तिः प्रत्याख्यायते, इयांस्तु विशेषः—संसारदशायां घटादिविषयकं ज्ञानं चक्षुरादीन्द्रियव्यापारसव्यपेक्षं, मुक्तौ तिरोधानापगमे सर्वविषयकं ज्ञानं न किञ्चिदागन्तुकं कारणमपेक्षत इत्येतदभिप्रायेणैवमागन्तुकरूपसामान्याभावप्रवादः ॥ ७ ॥

भाष्ये— तिरोधाननिवृत्तिरत्राभिनिष्पत्तिरुच्यते इति, नच कर्मरूपबन्धक्षये

त्मानं जागरिताद्यवस्थात्रितयविनिर्मुक्तं प्रियाप्रिय-हेतुभूतकर्मारब्धशरीरविनिर्मुक्तं च प्रतिपादयितुम् "एतं त्वेव भूयोऽनुव्याख्यास्यामि" इति पुनः पुनरुक्त्वा "एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यभिधानात्। अतः कर्मणा सम्बद्धस्य परं ज्योतिरुपसम्पद्य बन्ध-निवृत्तिरूपा विनिर्मुक्तिः स्वेन रूपेणाभिनिष्पद्यत

* श्रुतप्रकाशिका *

त्यादि ) जाग्रदाद्यवस्थासूच्यमानासु प्रत्यवस्थम् 'एतं त्वेव ते भूयोऽनुव्या-ख्यास्यामि' इत्युक्तं, तत्र 'एतं त्वेव तेऽनुव्याख्यास्यामि' इति प्रतिपर्यायमुक्त-स्यैतच्छब्दस्य प्रकृतपरामर्शित्वात् 'य आत्मे'त्यादिना प्रकृतस्यापहतपाप्मत्वादिगुण-कत्वादपहतपाप्मत्वादीनां च जाग्रदाद्यवस्थस्यासम्भवात् गुणाष्टकयुक्तस्वा-भाविकरूपकथनमेव प्रतिज्ञातम् , श्रोतुराशयपरीक्षार्थं जाग्रदादिकथनम् , तस्मात् व्याख्यास्यामीत्युक्तम् , व्याख्यातव्यरूपं स्वाभाविकमेवेत्यर्थः, ततः किमित्य-त्राह ( अतः कर्मणेति ) अभिनिष्पत्तिशब्दः कथं वाचक इत्यत्राह

छ भावप्रकाशिका छ

विकासरूपाविर्भावो नानुपपन्न इति सुष्ठूक्तमित्युपसंहारभाष्येण—निवृत्ततिरोधानस्य स्वरूपाविर्भाव एवेत्युक्तमिति ब्राह्मेण जैमिनिरित्यधिकरणभाष्येण च विरोधः, तिरोधाननिवृत्त्यभिनिष्पत्त्योर्भेदेनोपन्यासादिति वाच्यम्, भावान्तराभावपक्षमा-दाय निवृत्त्यभिनिष्पत्त्योरभेदकथनम् , अतिरिक्ताभावपक्षावलम्बनेन भेदोक्तिरिति केचित् । अपरे तु तिरोधाननिवृत्तिरभिनिष्पत्तिरुच्यत इति भाष्यमभेदोपचार निबन्धनमिति समादधते, भाष्ये जागरिताद्यवस्थात्रयविनिर्मुक्तमित्युक्तमयु-क्तम् 'य एषोऽक्षिणि पुरुषो दृश्यते' 'एष स्वप्ने महीयान् चरति तद्यत्रै-तत्सुप्तः समस्तसम्प्रसन्नः' इत्यादिना जागरितावस्थायुक्तस्यैव प्रतिपादनादित्या-शङ्क्याह ( जागरिताद्यवस्थासूच्यमानास्वित्यादिना ) ॥ छ ॥

इत्युच्यते, स्वरूपाविर्भावेऽप्यभिनिष्पत्तिशब्दो दृश्यते युक्त्याऽयमर्थो निष्पद्यत इत्यादिषु ॥ २ ॥

यच्चोक्तम् आत्मस्वरूपस्य सुषुप्तावपुरुषार्थत्वदर्शनात् स्वरूपाविर्भावे मोक्षशास्त्रस्यापुरुषार्थावबोधित्वं स्यादिति कृत्वा देवाद्यवस्थावत्सुखसम्बन्ध्यवस्थान्तरप्राप्तिरभिनिष्पत्तिरिति, तत्रोत्तरम्—

आत्मा प्रकरणात् ॥ ३ ॥

स्वरूपेणैवायमात्माऽपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणक इति प्रकरणादवगम्यते [1]"य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इति हि प्रजापतिवाक्यप्रक्रमः । इदं च प्रकरणं प्रत्यगात्मविष-

---

* श्रुतप्रकाशिका *

( स्वरूपाविर्भावेपीति ) ( निष्पद्यत इत्यादिष्विति ) आदिशब्देन 'विचार्य च पुनःपुनः' 'इदमेकं सुनिष्पन्न' मित्यादिप्रयोगो विवक्षितः, एवमयमर्थः साध्यत इति सिद्धिपर्यायत्वेन प्रयुज्यमानोऽभिनिष्पत्तिशब्द आविर्भावस्यापि वाचक इत्यर्थः ॥ २ ॥

उत्तरसूत्रशङ्कामाह ( यच्चोक्तमिति ) ।

आत्मा प्रकरणात् ॥ ३ ॥ परमात्मविषयं हीदं वाक्यमित्यत्राह ( इदं चेति ) स्वाभाविकत्वे सर्वदोपलभ्येरन्निमे गुणा इत्यत्राह ( अत इति ) आनन्दश्चेदौपाधिकाकारसम्बन्धनिबन्धनो न भवति संसारदशायां

छ भावप्रकाशिका छ

आनन्दश्चेत् विषयसम्पर्कनिबन्धन एव जाग्रत्सुषुप्त्यादौ तथान्वयव्यतिरेकविधानादिति व्याप्तिं दूषयति ( आनन्दश्चेदित्यादिना ) भाष्ये— विकासरूपा-

---

1. छा० ८-१२-२ ॥

यमिति "उत्तराच्चेदाविर्भूतस्वरूपस्तु" इत्यत्र प्रतिपादितम् । अतोऽपहपाप्मत्वादिस्वरूप एवायमात्मा संसारदशायां कर्माख्ययाऽविद्यया तिरोहितस्वरूपः परं ज्योतिरुपसम्पद्याविर्भूतस्वरूपो भवति । अतः प्रत्यगात्मनोऽपहतपाप्मत्वादयः स्वाभाविका गुणाः परं ज्योतिरुपसम्पन्नस्याविर्भवन्ति, नोत्पद्यन्ते, यथोक्तं भगवता शौनकेनापि- "यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ॥ दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा । यथोदपानकरणात् क्रियते न जलाम्बरम् । सदेव नीयते व्यक्तिमसतः सम्भवः कुतः ? । तथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते" इति । अतोज्ञानानन्दादिगुणानां कर्मणाऽऽत्मनि सङ्कुचितानां परं ज्योतिरुपसम्पद्य कर्मरूपबन्धक्षये विकासरूपा-

---

* श्रुतप्रकाशिका *

स्वाभाविकानन्दस्य तिरोहितत्वादौपाधिकरूपसम्बन्धसापेक्ष आनन्दयोगो भवति, अत एव सुषुप्तौ चानन्दायोगो न त्वानन्दस्यौपाधिकाकारहेतुत्वस्वाभाव्यात्, तिरोधाननिवृत्तौ स्वाभाविकानन्द आविर्भवतीति स्वरूपाविर्भावपरत्वे मोक्षशास्त्रस्य नापुरुषार्थावबोधित्वमित्यर्थः ।

परे चापरे च 'परं ज्योति' रिति ज्योतिश्शब्दस्य भौतिकपरत्वशङ्कायामात्मविषयत्वप्रतिपादकं 'आत्मा प्रकरणा' दिति सूत्रं व्याचक्षते,

❀ भावप्रकाशिका ❀

विर्भावो नानुपपन्न इति, धर्मभूतज्ञानविकासरूपोऽपहतपाप्मत्वादिगुणाष्टकाविर्भावो नानुपपन्न इत्यर्थः, गुणाष्टकस्याविर्भावो हि धर्मभूतज्ञानविषयीक्रियमा-

**विर्भावो नानुपपन्न इति सुष्ठूक्तं–सम्पद्याविर्भावः– इति ॥ २ ॥**

सम्पद्याविर्भावाधिकरणं समाप्तम् ।

—————◇○❀○◇—————

* श्रुतप्रकाशिका *

तदयुक्तम्, अस्माभिर्दहराधिकरणे निर्णीतत्वात्तैश्च 'ज्योतिर्दर्शना' दित्यत्र समर्थितत्वाच्च भौतिकविषयत्वशङ्कानुदयादधिकशङ्काहेत्वभावाच्च, अतोऽपुरुषार्थत्वपरिहारपरत्वं युक्तम् । अनध्याहारे सूत्रवैयर्थ्यात् तत्परिहारार्थोऽध्याहारो न दोषाय, अपि तु गुणायैव, तस्मिंश्च न्याय्ये सत्यात्मसम्बन्धितया श्रुतगुणवाचिपदाध्याहारो न्याय्यः, कः पुनर्विशेषः पूर्वावस्थात इति शङ्कायां द्वितीयसूत्रमवतारयन्ति, तत्र परे प्रष्टव्याः–किं काल्पनिकाकार-

७ भावप्रकाशिका ७

णत्वमेवेति भावः । ननु अपहतपाप्मत्वादीनां नित्यसिद्धत्वे बन्धस्याऽपारमार्थिकत्वं दुर्वारम् । नित्यसिद्धापहतपाप्मत्वं हि सर्वदा पापरहितत्वं, नच वस्तुतस्सर्वदा पापरहिते पाप्मसम्बन्धः तन्मूलकर्तृत्वभोक्तृत्वादिसम्बन्धो वा पारमार्थिकः सम्भवति, एवञ्च जीवस्य ईश्वरभावोपि दुर्वारः, श्रुतिबोधिताभेदविरोधिबन्धसत्यत्वासम्भवात्, अन्यथा संसारिणि नित्यसिद्धसत्यसङ्कल्पतिरोधानोक्त्ययोगाच्च, नहि जीवस्य संसारदशायामपि अनुवर्तमानो यत्किञ्चित्कार्यगोचरोऽस्त्यवितथस्सङ्कल्पः स तिरोहित इति वक्तुं युज्यते, तस्मादीश्वरस्य यन्नित्यसिद्धनिरवग्रहसत्यसङ्कल्पत्वं तदेव संसारदशायां जीवस्य ईश्वराभेदानभिव्यक्त्या स्वकीयत्वेन अनवभासमानं तं प्रति तिरोहितमिति समर्थयितव्यम् । अपहतपाप्मत्वं न पाप्मविरहः, येन तस्य नित्यसिद्धत्वेन बन्धस्य मिथ्यात्वप्रसङ्गः, किन्तु पापहेतुकर्माचरणेपि पापोत्पत्तिप्रतिबन्धकशक्तियोगित्वम्, एवं सत्यसङ्कल्पत्वमपि शक्तिरूपेण निर्वाह्यमिति नेश्वराभेदप्रसङ्ग इति चेन्न, एवं शब्दार्थकल्पने प्रमाणाभावात्; नहि पापजननप्रतिबन्धिका शक्तिः संसारपरिभ्रमणदशायां पापानुत्पत्त्यर्थं कल्पनीया, तदानीं तदुत्पत्तेरिष्टत्वात्, विद्योदयप्रभृति तु विद्यामाहात्म्यादेव अश्लेषः 'तदधि-

* श्रुतप्रकाशिका *

निवृत्तिः स्वरूपं वा तदतिरिक्तं वेति, आद्ये मोक्षोपायवैयर्थ्यं, द्वितीये निवृत्तिर्बाध्या वा, न वा, बाध्या चेत्, अपुनरावृत्तिश्रुतिविरोधः, अबाध्या चेत् परमार्थविशेषवत्त्वं, निवृत्तिर्जडा वा, न वा, जडा चेदजडस्य जडधर्मत्वं स्यात्, ततश्च भवद्भिरुक्ता एव दोषाः स्युः, विजातीयनानात्वञ्च

* भावप्रकाशिका *

गम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति सूत्रेण दर्शितः, तत एवमप्युक्तविश्लेष उपपद्यत इति व्यर्था शक्तिकल्पनेति चेत्—

अत्रोच्यते— अपहतपाप्मत्वं न पापात्यन्ताभाव इति वक्तुं शक्यम्, पाप्मनां स्वरूपेण अत्यन्ताभावप्रतियोगित्वे निःस्वरूपत्वापत्तेः, पारमार्थिकत्वाकारेण अभावप्रतियोगित्वे अभ्युपगम्यमानेऽपि किं तत्पारमार्थिकत्वमिति पर्यालोचने अबाध्यत्वमिति पर्यवस्यति, बाध्यत्वञ्च न अत्यन्ताभावप्रतियोगित्वमिति वक्तुं शक्यम्, तत्रापि स्वरूपेण वा पारमार्थिकत्वाकारेण वेति विकल्पग्रासात्, किन्तु ज्ञाननिवर्त्यत्वम्, ततश्च ज्ञानानिवर्त्यत्वरूपाबाध्यत्वकारेण अत्यन्ताभावप्रतियोगित्वं पाप्मनां पर्यवसितम्, ततश्च पाप्मनां ज्ञाननिवर्त्यत्वमिति फलितोर्थः, अयञ्चास्माकमिष्ट एव । किञ्च मुक्तस्य त्वन्मते अपहतपाप्मत्वादिप्रादुर्भाव एव न सम्भवति, एकजीववादे तावत् तदेकाज्ञानपरिकल्पितस्य जीवेश्वरविभागादिकृत्स्नभेदप्रपञ्चस्य तद्विद्योदये विलयात् निर्विशेषचैतन्यमात्ररूपेणावस्थानमिति न बद्धमुक्तव्यवस्थासम्भवः, अनेकजीववादमभ्युपगम्य बद्धमुक्तव्यवस्थाङ्गीकारेऽपि यद्यपि कस्यचिद्विद्योदये तदविद्याकृतभेदप्रपञ्चस्य विलयेऽपि बद्धपुरुषान्तराविद्याकृतो भेदप्रपञ्चोऽनुवर्तत इति वक्तुं शक्यते, तथापि जीव इव ईश्वरोऽपि प्रतिबिम्ब इति पक्षे मुक्तस्य बिम्बभूतशुद्धचैतन्यमात्ररूपेणैवावस्थानौचित्येन प्रतिबिम्बान्तरत्वापत्त्यसम्भवात्, तत्सम्भवे हि कदाचित् जीवरूपप्रतिबिम्बान्तरत्वापत्तेरपि दुर्वारत्वेन अवच्छेदपक्ष इव पुनर्बन्धापत्तेः, अत एव अनेकजीववादे अवच्छेदपक्षो नाद्रियते, यदवच्छेदेन मुक्तिः तदवच्छेदेन अन्तःकरणान्तरसंसर्गे पुनरपि बन्धापत्तेः, अतः प्रतिबिम्बो जीवः, बिम्बस्थानीय ईश्वरः उभयानुस्यूतं शुद्धचैतन्यमिति पक्षे मुक्तस्य वत्सर्वमुक्तिसर्वज्ञत्वसर्वेश्वरत्व-

* श्रुतप्रकाशिका *

स्यात् , अजडा चेत्सजातीयनानात्वं स्यात् , सा च निवृत्तिः कस्मै प्रकाशते, यदि ब्रह्मणः, तदयुक्तं स्वानुभवस्वभावस्याविद्यया विनाऽप्यन्यानुभवरूपत्वविरोधात् , यदि स्वस्मै, तदा प्रत्यगर्थद्वयप्रसङ्गः ।

अन्ये तु परं ज्योतिरुपसम्पन्नस्य जक्षणादिश्रवणात् विलक्षणसांसारिकफलप्राप्तोऽयं मुक्त इति पूर्वपक्षं कृत्वा मुक्तात्मप्रतिपादनप्रतिज्ञानात् जक्षणादेः साङ्कल्पिकत्वोपपत्तेश्च सिद्धान्तपरमधिकरणान्तरं द्वितीयसूत्रं व्याचक्षते, तदयुक्तं 'सङ्कल्पादेव तच्छ्रुते' रित्यत्र पितृलोकादिसृष्टेः सत्यसङ्कल्पमूलताया उपपादयिष्यमाणत्वात् अत्र वक्तव्याभावादश्लिष्टविनष्टोत्तरपूर्वाघत्वात्सांपराये विधूतकर्मत्वाच्च परं ज्योतिरुपसम्पन्नस्य संसारित्वशङ्कानुदयात् , अभिनिष्पन्नं रूपं किमपहतपाप्मत्वादिविशिष्टस्वरूपम् ? उत जक्षणादिनिष्पादनशक्तिरिति विचारे पूर्वं कर्मसम्बन्धभाजः पाप्मप्रागभावप्रध्वंसात्यन्ताभावरूपापहतपाप्मत्वाद्ययोगात्तदाविर्भावानुपपत्तेः जक्षणादिशक्तिरिति पूर्वपक्षं कृत्वा पुण्यपापहेतुभूतव्यापारचिरधृतदेहेन्द्रियशोकादिहेतुषु सत्स्वपि पापजराद्युत्पत्तिप्रतिबन्धशक्तेर्नित्यायाः प्राक्तिरोभूताया आविर्भावोपपत्तेर्जक्षणादिशक्तेरपि सत्यसङ्कल्पत्वान्तर्भावाच्चापहतपाप्मत्वादिलक्षणं स्वरूपमिति सिद्धान्तपरमधिकरणान्तरं तृतीयं सूत्रं व्याचक्षते, तदयुक्तम्—अपहतपाप्मत्वादिलक्षणं

* भावप्रकाशिका *

सत्यकामत्वादिगुणकपरमेश्वरभावापत्तिर्वक्तव्या, यथा अनेकदर्पणेषु एकस्य मुखस्य प्रतिबिम्बे सति एकदर्पणापनये सति तत्प्रतिबिम्बोऽपि बिम्बभावेनावतिष्ठते नतु मुखमात्ररूपेण, तदानीमपि दर्पणान्तरसन्निधानप्रयुक्तस्य मुखे बिम्बत्वस्यानपायात्, तथा एकस्य चैतन्यस्य अनेकेषूपाधिषु प्रतिबिम्बे सति एकस्मिन्प्रतिबिम्बे विद्योदयेन च तदुपाधिनाशे तत्प्रतिबिम्बस्य बिम्बभावेन अवस्थानावश्यम्भावादिति वक्तव्यम्, अयञ्च पक्षो न सम्भवति, यतो रूपानुपहितस्य प्रतिबिम्बो न युक्तः, सुतरां नीरूपे अचाक्षुषे, अचाक्षुषप्रतिफलनवादस्य परिहास्यत्वादित्यलमतिप्रसङ्गेन ।

( अन्ये त्वित्यादि ) ( पाप्मप्रागभावप्रध्वंसाभावात्यन्ताभावेति ) घटात्यन्ताभावस्येव तत्प्रागभावप्रध्वंसयोरपि अत्यन्ताभावत्वाङ्गीकारात् पाप्म-

# अविभागेन दृष्टत्वात् ॥ ४ ॥

२ अधिकरणम्

किमयं परं ज्योतिरुपसम्पन्नः सर्वबन्धविनिर्मुक्तः प्रत्यगात्मा स्वात्मानं परमात्मनः पृथग्भूतमनुभवति ? उत तत्प्रकारतया तदविभक्तमिति विशये [1]"सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" [2]"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं । तदा विद्वान्पुण्यपापे विधूय निर-

---

* श्रुतप्रकाशिका *

स्वरूपमिति व्यवस्थापिते सति 'ब्राह्मेण जैमिनि' रित्यधिकरणस्यानुत्थानप्रसङ्गात् अतोऽपुरुषार्थाभिनिष्पत्तिवचनवैयर्थ्यशङ्कापरिहारपरत्वमेव सूत्रद्वयस्य न्याय्यम् ॥ ३ ॥ सम्पद्याविर्भावाधिकरणं समाप्तम् ।



अविभागेन दृष्टत्वात् ॥ ४ ॥ अवान्तरसङ्गतिः स्पष्टा, मुक्तः किमात्मानं परमात्मनः पृथग्भूतमनुभवति ? उत तत्प्रकारतया तदविभक्तम्, ? किं साहित्यसाम्यसाधर्म्यवचनान्यविभागेनानुभवे विरुध्यन्ते, नेति, किं प्रकारभूतस्यैव साहित्यादिकमुपपन्नं, नेति, न चेत्, तद्वचनविरोधात्पृथग्भावेनानुभवः, उपपन्नं चेत्तद्वचनाविरोधादविभागेनानुभवः, यथाऽवस्थितस्योपास्यत्वे यथोपासनभावित्वे च फलस्य स्थिते कथं पूर्वपक्षोत्थानमिति शङ्कायां सहश्रुतिसाम्यश्रुतिसाधर्म्यस्मृतीनां बलात्तत्क्रतुन्यायोऽपोदित इत्यभिप्रायेण पूर्वपक्षमाह ( सह ब्रह्मणेति ) श्रुतेर्भोक्तृसाहित्यपरत्वं पूर्वपक्षिणो गतं, साम्य-

* भावप्रकाशिका *

प्रध्वंसवति मुक्ते पापात्यन्ताभावरूपापहतपाप्मत्वासम्भवादित्यर्थः ॥ * ॥

इति सम्पद्याविर्भावाधिकरणम् ।



ननु भाष्ये साहित्यसाम्यसाधर्म्यादित्युक्तिरयुक्ता, साम्यस्यैव साधर्म्यरूप-

---

१. तै० आन० १-२ ॥ | २. मु० ३-१-३ ॥

अनः परमं साम्यमुपैति" [1]"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" इत्यादिश्रुतिस्मृतिभ्यो मुक्तस्य परेण साहित्यसाम्यसाधर्म्यावगमात् पृथग्भूतमनुभवति–

इति प्राप्ते उच्यते–अविभागेन– इति । परस्माद् ब्रह्मणः स्वात्मानमविभागेनानुभवति मुक्तः । कुतः ? दृष्टत्वात्–परं ब्रह्मोपसम्पद्य निवृत्ताविद्यातिरोधानस्य याथातथ्येन स्वात्मनो दृष्टत्वात् । स्वात्मनः स्वरूपं हि [2]"तत्त्वमसि" "अयमात्मा ब्रह्म" [2]"ऐतदात्म्यमिदं सर्वं" [3]"सर्वं खल्विदं ब्रह्म" इत्यादिसामानाधिकरण्यनिर्देशैः [4]"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मा

* श्रुतप्रकाशिका *

साधर्म्यशब्दौ नार्थभेदविवक्षया प्रयुक्तौ, अपि तूदाहृतश्रुतिस्मृतिवचनस्थत्वात् प्रयुक्तौ, साम्यस्य पारम्ये सति प्रकारप्रकारिभावादिलक्षणवैषम्यं बद्धावस्थायामेवेति पूर्वपक्षिणोऽभिप्रायः ।

( अविभागेनेतीति ) याथातथ्येन स्वरूपं दृष्टमस्तु ततः किमित्यत्राह ( स्वात्मनः स्वरूपं हीति ) स्वरूपैक्यव्यावृत्त्यर्थमाह ( य आत्मनीति ) ( अहं ब्रह्मास्मीत्येवानुभवतीति ) अहमर्थस्य तत्पर्यन्तत्वेन

* भावप्रकाशिका *

त्वेन साहित्यसाम्यावगमादित्युक्त्यैव चारितार्थ्यादित्यत आह ( साम्यसाधर्म्यशब्दाविति ) ( भोग्यसाहित्यपरत्वादिति ) काम्यन्त इति कामाः कल्याणगुणाः, ब्रह्मणा सह कल्याणगुणान्सर्वाननुभवतीत्यर्थः, भोक्तृसाहित्यपरत्वे तु

१. गी० १४-२ ॥ २. छा० ६-८-७ ॥ ३. छा० ३-१४-१ ॥ ४. बृ० ५-७-२२ ॥

ऽन्तर्याम्यमृतः" [1]"अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इत्यादिभिश्च परमात्मात्मकं तच्छरीरतया तत्प्रकारभूतमिति प्रतिपादितम्—[2]"अवस्थितेरिति काशकृत्स्नः" इत्यत्र । अतोऽविभागेनाहं ब्रह्मास्मीत्येवानुभवति । साम्यसाधर्म्यव्यपदेशो ब्रह्मप्रकारभूतस्यैव प्रत्यगात्मनः स्वरूपं तत्सममिति देवादिप्राकृतरूपप्रहाणेन ब्रह्मसमानशुद्धिं प्रतिपादयति । सहश्रुतिस्त्वेवंभूतस्य प्रत्यगात्मनः प्रकारिणा ब्रह्मणा सह तद्गुणानुभवं प्रतिपादयतीति न कश्चिद्विरोधः । ब्रह्मप्रकारतया तदविभागोक्तेर्हि [3]"सङ्कल्पादेव तच्छ्रुते"रित्यादि न विरुद्ध्यते, [4]"अधिकं तु भेदनिर्देशात् [5]"अधिकोपदेशात्" इत्यादि च ॥ ४ ॥

अविभागेन दृष्टत्वाधिकरणं समाप्तम् ।



* श्रुतप्रकाशिका *

तद्बुद्धिशब्दयोश्च तत्पर्यन्तत्वात्तथात्वेनानुभवतीत्यर्थः । (न कश्चिद्विरोधः) सहश्रुतेर्भोग्यसाहित्यपरत्वात् भोग्यसाहित्यस्य ब्रह्मपर्यन्तत्वेऽपि सम्भवात्तत्पर्यन्तत्वेनानुभवे न विरोध इत्यर्थः । उक्तप्रकार एवाविभागः, न तु स्वरूपैक्यमविभागः, तथा सति पूर्वापरवैघट्यादित्याह (ब्रह्मप्रकारतयेति)।

परे त्वत्र 'स तत्र पर्येति' इत्यधिकरणाधिकर्तव्यभावेनोपसम्पत्तौ कर्मकर्तृभावेन च भेदं पूर्वपक्षीकृत्य तत्त्वमसीत्यादिवाक्यैः परमात्मनो दृष्टत्वा-

* भावप्रकाशिका *

भोक्तृजीवापेक्षया ब्रह्मणोऽप्राधान्यप्रसङ्गः, ततश्च ब्रह्मणः प्रकारित्वभङ्गप्रसङ्ग इति भावः । ननु भोग्यसाहित्येपि कामापेक्षया ब्रह्मणोऽप्राधान्यप्रसङ्गः

१. आरण० १-३-२१ ॥ २. शारी० १-४-२२ ॥ ३. शारी० ४-४-८ ॥
४. शारी० २-१-२२ ॥ ५. शारी० ३-४-८ ॥

* श्रुतप्रकाशिका *

यथादर्शनं फलत्वान्नदीसमुद्रनिदर्शनादिभिश्चाविभागं सिद्धान्तयन्ति, 'स्वे महिम्नि प्रतिष्ठितः' इतिवत् 'स तत्र पर्येति' इत्यादीनामर्थः, अस्मिन्पक्षे परविद्याप्रकरणस्थानां मुक्तौ भेदश्रुतीनां गुणानुभवश्रुतीनां चामुख्यार्थत्वमिति, तासामभेदश्रुतीनाञ्च मुख्यार्थत्वानुगुणः पक्ष एव प्रबलः ।—भेदश्रुत्यमुख्यार्थत्वदोषोऽपरेषामपि समानः । औपाधिकनामरूपप्रहाणेन संश्लेषे दृष्टान्तो नदीसमुद्रघटकरकाकाशादिरिति सर्वमुपपन्नम् ।—अन्ये तु 'सह ब्रह्मणा' 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव' इत्यत्र तादृक्त्वमुक्तं न तु तद्भावः, 'सर्वेष्वात्मस्वन्नमत्ती' त्यादिभेदव्यपदेशात् मुक्तस्य स्वपरविज्ञानवत्तया स्वापप्रलययोरिव विभागशक्तिमत्तया निर्वाहायोगात् 'शुकस्सर्वगतो भूत्वा सर्वात्मा सर्वतोमुखः । प्रत्यभाषत धर्मात्मा भोशब्देनानुनादय' न्निति सर्वात्मभूतस्यापि सम्भाषणादिदर्शनात्, वेदान्ते तेषु 'य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवती' त्याम्नातो मुक्तस्य सर्वात्मभावः संश्लेषमात्रमिति पूर्वपक्षं कृत्वा भोक्तृभोग्येश्वरैर्जले जलवत्क्षीरे नीरवदविभागं गच्छति, नामरूपविलयप्रतिपादनसामानाधिकरण्याभ्यां 'परे ऽव्यये सर्व एकं भवन्ति, इत्यादिश्रुतेश्च, शक्तिभेदस्य विद्यमानत्वाद्भेदवादा अविरुद्धाः, अविभागापत्तावपि स्वपरसम्बोध उपपन्नः सुषुप्ताविव करणाधीनज्ञानत्वे सत्युपरतकरणत्वाभावात्, अतः स्थित एव सर्वात्मभावे शरीरभेदेन विहर्तुमिच्छति चेद्विहरतीति सिद्धान्तयन्ति, अस्मिन् पक्षे पूर्वपक्षात्सिद्धान्तस्य शब्दमात्रेण भेदः, न त्वर्थतः, स्वपरसम्बोधविभागशक्त्यनपगमात्तत्कार्यसम्बोधस्य पृथग्व्यवहाराणां च विद्यमानत्वात्कदाचिदसम्बोधेनापि तिष्ठतीति चेत्, तदयुक्तं—करणानपेक्षज्ञानस्य सङ्कोचकाभावात्, यद्यप्यसम्बोधः तथाऽपि सुषुप्तात्मनां परस्परैक्याभावात्तद्वन्नाविभागः, देहाद्युपाधिसम्बन्धान्न परस्परैक्यमिति चेत्तर्हि सूक्ष्माचित्त्वादिव भेदो दुरपह्नवः,

* भावप्रकाशिका *

इति चेन्न, इष्टापत्तेः, ( विभागशक्तिमात्रेण स्वपरविज्ञानादेः निर्वाहायोगादिति ) भेदोपि वक्तव्य इत्यर्थः । ( करणाधीनज्ञानत्वे सतीति ) करणाधीनज्ञानत्वे सति उपरतकरणत्वं स्वपरसम्बोधाभावे प्रयोजकं, मुक्ते करणाधीनज्ञानत्वाभावात् ज्ञानाभावाभावः । ( न परस्परैक्यमिति चेदिति ) सुषुप्ताविति शेषः । ननु न सूक्ष्म-

* श्रुतप्रकाशिका *

अचितः शक्तिमात्रशेषत्वाभावान्नानावस्थत्वात् तस्माद्भेद इति चेत्, तर्हि निस्सम्बोधेऽपि तस्मिन्नीश्वरात्सर्वज्ञाद्भेदः स्यादेव, अन्यतरशिरसि भेदकधर्मस्य विद्यमानत्वादेव । किञ्च यद्ययुतसिद्धिरविभागः, अस्मत्सिद्धान्ताभ्युपगमः स्यात् , न ह्यध्यस्तभेदनिवृत्तिः, ब्रह्माज्ञानपक्षप्रसङ्गात्, नाप्यौपाधिकभेदनिवृत्तिः; भास्करमतादविशेषापातात्, नाप्येकसमुदायान्तर्भावः; देवदत्तस्य परिषत्सामानाधिकरण्यवत् 'स इदं सर्व' मिति सामानाधिकरण्यस्य मुख्यत्वायोगात्, नापि सर्वथा भेदनिवृत्तिः, शक्तितो भेदस्याभ्युपगमात्, विभागशक्तिव्यतिरिक्तभेदाभाव इति चेत्, किं तदा विभागो नास्ति किंतु विभागशक्तिरेवेति मतम् , तत्र अणुत्वस्य स्थितत्वात् , अणुत्वं त्यक्तं न वा त्यक्तं चेत्सर्षपघटमहीधरादीनामिव स्वरूपगतपरिमाणविरहेण लयाभ्युपगमे स्वरूपानित्यत्वमेव स्यात् , न चेत् , विभागशक्तिव्यतिरिक्तभेदस्य स्थितौ नाविभागः । किञ्च विभागशक्तिव्यतिरिक्तनित्यभेदानभ्युपगमे विभागशक्त्या कदाचिदात्मानं विभज्य विहरन्मुक्तः किं पूर्वमुक्त एवात्मा वा, रामकृष्णादिवत्परमात्मैकदेशो वेति विशये सति—इदानीमुद्धृतशीकरस्य पूर्वप्रलीनशीकरांशानन्यत्वनिश्चयस्येव देवदत्तात्मानन्यत्वनिश्चयस्य दुष्करत्वान्मुक्तेश्वरांशसङ्करः स्यात्, ततश्च कदाचिन्मुक्तस्यापि जगद्व्यापारसम्भवः स्यात्, ईश्वरः सर्वज्ञत्वाच्छक्तिमात्रावशेषमपि मुक्तमसङ्कीर्णं जानातीति न जगद्व्यापारप्रसङ्ग इति चेत्, तर्ह्यसङ्कीर्णतया ज्ञानं भेदकाकारेण विना स्वरूपभेदेन वा विनाऽनुपपन्नमिति विभागशक्तिव्यतिरिक्तभेदाभावरूपाविभागोऽनुपपन्नः । भोक्तृभोग्येश्वराणां विरुद्धस्वभावत्वाच्च मुक्तस्य तैरविभागोऽप्यनुपपन्नः ।

* भावप्रकाशिका *

चित्त्वात् भेदोऽभ्युपगम्यते, किन्तु तत्रापि शक्तिमात्रमेव भेदकमित्याशङ्क्याह ( अचितश्शक्तिमात्रशेषत्वाभावादिति ) ( नानावस्थत्वादिति ) नानावस्थत्वतदभावरूपभेदकाकारसद्भावात् अचिदपेक्षया भेदसत्त्वेपि चिदीश्वरयोर्न भेद इति चेदित्यर्थः, ( असङ्कीर्णतया जानातीति न जगद्व्यापारप्रसङ्ग इति चेदिति ) असङ्कीर्णतायमीश्वरज्ञानविषयतया भेदस्य प्रामाणिकत्वात् न

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

३ अधिकरणम्

प्रत्यगात्मनः परं ज्योतिरुपसम्पद्य निवृत्ततिरोधानस्य स्वरूपाविर्भाव एवेत्युक्तम् । तत्र येन स्वरूपेणायमात्माऽऽविर्भवति तत्स्वरूपं श्रुतिवैविध्याद्विचार्यते । किमपहतपाप्मत्वादिकमेवास्य स्वरूपमिति तेन रूपेणायमाविर्भवति ? उत विज्ञानमात्रमेवेति तेन रूपेण ? अथोभयोरविरोध इत्युभयस्वरूपेणेति । किं तावत्प्राप्तम् ? ब्राह्मेणेति जैमि-

* श्रुतप्रकाशिका *

अतः पूर्वपक्षाद्विशेषसिद्धिर्दुरुपपादा ॥ ४ ॥

अविभागेन दृष्टत्वाधिकरणं समाप्तम् ।

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥ अवान्तरसङ्गतिमाह (प्रत्यगात्मन इति) प्रथमाधिकरणेन सङ्गतिरित्यर्थः (अपहतपाप्मत्वादिकमेवेति) एवकारेण स्वप्रकाशत्वव्यावृत्तिः, (विज्ञानमात्रमेवेति) मात्रशब्देनांशतो जाड्यव्युदासः, एवकारेण गुणाष्टकव्युदासः, किं गुणाष्टकविशिष्टमेवास्य स्वरूपम् ? उत विज्ञानमात्रमेव, उतोभयं स्वरूपं, किं गुणाष्टकवैशिष्ट्यज्ञानमात्रस्वरूपत्वविषयश्रुत्योः प्राबल्यदौर्बल्यविभागो युज्यते, नेति ? तयोः किमविरोधः सम्भवति नेति, विज्ञानघन एवेत्यवधारणं किं गुणान्तरं व्यावर्तयितुं शक्नोति ? नेति, यदाऽवधारणं गुणान्तरव्यावर्तनक्षमम्, तदानीमविरोधासम्भवेन प्राबल्यदौर्बल्यविभागाश्रयणस्य न्याय्यत्वाद्दृष्टिद्वयपक्षापेक्ष-

* भावप्रकाशिका *

जगद्व्यापारप्रसङ्ग इति भावः ॥ ७ ॥

इति अविभागेन दृष्टत्वाधिकरणम् ।

(दृष्टिद्वयपक्षापेक्षयेति) मतद्वयमध्ये अन्यतरपरिग्रह इत्यर्थः । (स्वरूपं

निराचार्यो मन्यते। ब्राह्मेण—अपहतपाप्मत्वादिनेत्यर्थः। अपहतपाप्मत्वादयो हि दहरवाक्ये ब्रह्मसम्बन्धितया श्रुताः। ब्राह्मेणेति कुतोऽवगम्यते; उपन्यासादिभ्यः, उपन्यस्यन्ते हि ब्रह्मगुणाः अपहतपाप्मत्वादयः प्रत्यगात्मनोऽपि प्रजापतिवाक्ये "य आत्माऽपहतपाप्मा" इत्यादिना "सत्यसङ्कल्पः" इत्यन्तेन। आदिशब्देन सत्यसङ्कल्पत्वादिगुणायत्ता जक्षणादयः, "जक्षत्क्रीडन् रममाणः" इत्यादिवाक्यावगता व्यवहारा गृह्यन्ते। अत एभ्य उपन्यासादिभ्यः प्रत्यगात्मनो विज्ञानमात्रस्वरूपत्वं न सम्भवतीति जैमिनेर्मतम् ॥ ५ ॥

चिति तन्मात्रेण तदात्मकत्वा-
दित्यौडुलोमिः ॥ ६ ॥

चैतन्यमात्रमेवास्यात्मनः स्वरूपमिति तेन रूपे-

---

* श्रुतप्रकाशिका *

याऽन्यतरस्वरूपत्वसिद्धिः, यदा न व्यावर्तनक्षमं तदा विरोधाभावेन प्राबल्यदौर्बल्यविभागाश्रयणस्यायुक्तत्वादुभयस्वरूपत्वम्, अपहतपाप्मत्वादेः कथं ब्राह्मत्वमित्यत्राह (अपहतपाप्मत्वादयो हीति) व्यवहाराः—प्रवृत्तयः (न सम्भवतीति) स्वरूपं जडं ज्ञानत्वे ज्ञानाद्याश्रयत्वायोगादिति भावः ॥ ५ ॥

चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥ (तेनेति) सूत्रे भाष्ये

ॐ भावप्रकाशिका ॐ

जडमिति) ननु जैमिनिमते ज्ञानमात्रस्वरूपत्वमात्मनो माभून्नाम, अपहतपाप्मत्वादीनां सद्भावात्, न ह्येतावता आत्मनो जडत्वमङ्गीकृतमित्यत्र किञ्चित्प्रमाणमस्तीति चेन्न, अपहतपाप्मत्वादेः ज्ञानस्वरूपत्वस्य चाभ्युपगमे सिद्धान्तादविशेषप्रसङ्गादिति भावः ॥ ५ ॥

णाविर्भवतीत्यौडुलोमिराचार्यो मन्यते । कुतः? तदात्मकत्वात्–तावन्मात्रात्मकत्वादस्य प्रत्यगात्मनः, "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरेऽयमात्मानन्तरोऽबाह्य कृत्स्नः प्रज्ञानघन एव विज्ञानघन एव" इत्यवधारणाद्विज्ञानमात्रमेवास्य स्वरूपमित्यवगम्यते । अतोऽस्य गुणान्तराभावादपहतपाप्मेत्यादयः शब्दाः विकारसुखदुःखाद्यविद्यात्मकधर्मव्यावृत्तिपरा इति चिति तन्मात्ररूपेणाविर्भाव इत्यौडुलोमेर्मतम् ॥ ६ ॥

सम्प्रति भगवान्बादरायणः स्वमतेन सिद्धान्तमाह–

* श्रुतप्रकाशिका *

च तृतीयान्तनिर्देशः औपचारिकः, ( विकारसुखदुःखादीति ) आदिशब्दादुपेक्षाग्रहणं, विजर इत्यादिपदानि निर्विकारत्वपराणि, विशोकः–निर्दुःखः, सत्यकामः–सत्यम्–अकादाचित्कं सुखमस्येति सत्यकामपदं कादाचित्कसुखराहित्यपरं, न तु नित्यसुखत्वपरं, सत्यसङ्कल्पः–उपेक्षारहितः, न ह्युपेक्षकः सत्यसङ्कल्पः, मोघेन सङ्कल्पेन रहित इति वा पूर्वपक्षार्थः ॥ ६ ॥

७ भावप्रकाशिका ७

( कादाचित्कसुखराहित्यपरमिति ) अत्र चोदयन्ति–यद्यकादाचित्कसुख इति श्रूयते, तदा नञः कादाचित्कसुखपदेन समासे कादाचित्कसुखराहित्यमर्थः स्यात् , नहि अनीलो घटो यस्येति बहुव्रीहिसमासाश्रयणेन अनीलघट इति निर्घटो देशो वक्तुं शक्यत इति, अत एव सत्यसङ्कल्प इत्यस्य मोघेन सङ्कल्पेन रहित इतिवेत्युत्तरग्रन्थोऽप्ययुक्त इति चेत् , अत्र केचित्–सतीतिपृथक्पदं सप्तम्यन्तं, सति पृथिव्यादौ वस्तुनि अकामः निष्काम इत्यर्थः । एवं सत्यसङ्कल्प इत्यादावपि द्रष्टव्यम्, इत्येवंरूपे निर्वाहे अस्य ग्रन्थस्य तात्पर्यमिति वदन्ति ॥ ७ ॥

## एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

एवमपि— विज्ञानमात्रस्वरूपत्वप्रतिपादने सत्यपि, सत्यकामत्वादीनां पूर्वोक्तानां गुणानामविरोधं बादरायण आचार्यो मन्यते । कुतः ? उपन्यासात् पूर्वभावादौपनिषदात् "य आत्माऽपहतपाप्मा" इत्याद्युपन्यासात्प्रमाणात्पूर्वेषामपहतपाप्मत्वसत्यसङ्कल्पत्वादीनामपि भावात्—विद्यमानत्वात् । तुल्यप्रमाणकानामितरेतरबाधो न युज्यते इत्यर्थः । न च वस्तुविरोधादपहत-

* श्रुतप्रकाशिका *

एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥ विज्ञानमात्रप्रतिपादनपरत्वापातप्रतीतिं विज्ञानघन एवेत्यादिवाक्यस्याभ्युपगम्य परिहरति ( एवमपीत्यादिना ) अपहतपाप्मेत्यादिके वाक्ये सत्यपि तत्पूर्वपक्षीकृत्य ह्यौडुलोमिमतमुदीरितमिति शङ्कायां सूत्रतात्पर्यमाह ( तुल्यप्रमाणकानामिति ) एवकारः कस्यचिद्वाक्यस्य शेषभूततया न स्वतन्त्रार्थप्रतिपादकः, अवधारणीयसापेक्षत्वादवधारणस्य, अतः शेषभूतैवकारस्वारस्याय न शेषिभूतपदजातभङ्गः कार्यः, अपि तु शेषिणमभङ्क्त्वा शेषभूतभङ्ग एव कार्यः, तस्मादेवकारस्वारस्यार्थं वाक्यान्तरगता गुणा न भञ्जनीया इति विज्ञानरूपत्वमपहतपाप्मत्वादिकं च तुल्यप्रमाणकत्वादेवकारभङ्गेनापि स्वीकर्त्तव्यमित्यर्थः । ( न च वस्तुविरोधादिति ) वस्तुविरोधः—ज्ञानस्य ज्ञानान्तराश्रयत्वासम्भवः, स किं व्याप्त्याऽभिधीयते ? उत श्रुतिबलात् , व्याप्त्या चेत् ज्ञानं कस्यचित् गुणभूतं दृष्टमिति ब्रह्म च तथा स्यात् , श्रुतिप्रतिपन्नत्वान्न गुणभूतमिति चेत्तत एव श्रुतिबलात् गुणाश्रयत्वमप्य-

* भावप्रकाशिका *

( तत्पूर्वपक्षीकृत्य हीति ) नष्टस्य पुनरुन्मज्जनाभावादित्यर्थः । अन्यपर-

पाप्मत्वादीनामविद्यापरिकल्पितत्वं न्याय्यम्। विशेषाभावाद्विपरीतं कस्मान्न भवतीति न्यायात्। तुल्यबलत्वे ह्यशक्यस्यावधारणस्यान्यपरत्वमेव न्याय्यम्। एवमप्यविरोध इत्यभ्युपगम्य वदन् ज्ञानमात्रमेवास्य स्वरूपं नान्यत्किञ्चिदस्तीत्ययमर्थो 'विज्ञानघन एव' इत्यादिभिर्न प्रतिपाद्यत इति मन्यते। कस्तर्हि 'विज्ञानघन एव' इत्यवधारणस्यार्थः? कृत्स्नोऽप्यात्मा जडव्यावृत्तः स्वप्रकाशो नान्यायत्तप्रकाशः स्वल्पोऽपि प्रदेशोऽस्तीत्ययमर्थो वाक्यादेव सुव्यक्तः, "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" इति। न चैवं प्रत्यगात्मनो धर्मिस्वरूपस्य कृत्स्न-

* श्रुतप्रकाशिका *

ङ्गीक्रियताम्। यत्तु न ज्ञानं ज्ञानान्तराश्रयमिति, तन्न ज्ञानत्वप्रयुक्तम्, अपि तु गुणभूतज्ञानत्वप्रयुक्तम्, आत्मनस्तु गुणत्वाभावात् ज्ञानस्वरूपस्यापि ज्ञानाश्रयत्वे व्याप्तिविरोधोऽपि नास्तीत्यनुसन्धेयम्, (विशेषाभावादिति) उभयमपि श्रुतिसिद्धत्वाविशेषान्नान्योन्यबाधकं, बाधकं चेद्विपर्ययेण स्यादित्यर्थः। अशक्यस्य गुणान्तराबाधेन निर्वोढुमशक्यस्य, अन्यपरत्वम्—अविरुद्धार्थान्तरपरत्वम्, अभ्युपगम्य वदतस्तात्पर्यमाह (एवमपीति) अपहतपाप्मत्वादिविरुद्धार्थप्रतीत्यभावं मन्यत इत्यर्थः। तमेव चोद्यपूर्वकमुपपादयति (कस्तर्हीत्यादिना) वाक्यादेव सुव्यक्तत्वं वाक्यैकदेशभूतदृष्टान्तवाक्येनोपपादयति (स यथेति) आत्मनः सर्वत्र विज्ञानघनत्वं स्यात् ततः किं गुणाश्रयत्वस्येत्यत आह (न चैवमिति) स यथेति दृष्टान्तवाक्येऽप्यविरोधः कथमवगम्यत इत्य-

ᛃ भावप्रकाशिका ᛃ

—मिति व्याख्येयं पदं, जडांशव्यवच्छेद इत्यर्थः। भाष्ये स्वल्पोपि प्रदेशो-

स्य विज्ञानघनत्वेऽप्यपहतपाप्मत्वसत्यसङ्कल्पत्वादिधर्मसम्बन्धो वाक्यान्तरावगतो विरुध्यते; यथा सैन्धवघनस्य रसघनत्वे रसनेन्द्रियावगते चक्षुराद्यवगताः रूपकाठिन्यादयो न विरुध्यन्ते। इदमत्र वाक्यतात्पर्य—यथा रसवत्स्वाम्रफलादिषु त्वगादिप्रदेशभेदेन रसभेदे सत्यपि सैन्धवघनस्य सर्वत्रैकरसत्वम्; तथाऽऽत्मनोऽपि सर्वत्र विज्ञानस्वरूपत्वं, स्वप्रकाशस्वरूपत्वमित्यर्थः ॥ ७ ॥

ब्राह्माधिकरणं समाप्तम् ।



* श्रुतप्रकाशिका *

त्राह ( यथेति ) दृष्टान्तवाक्यगतावधारणस्य कोऽर्थः, तत्रोपजीव्यांशश्च क इत्यत्राह ( इदमत्र वाक्यतात्पर्यमिति ) प्रदेशभेदे जडत्वं व्यावर्त्यमित्यर्थः । विज्ञानस्वरूपत्वमित्येतद्व्याचष्टे ( स्वप्रकाशस्वरूपत्वमिति ) ।

परे तु तृतीयं सूत्रमेवं वर्णयन्ति, ज्ञानमात्रस्वरूपत्वेऽपि सत्यसङ्कल्पत्वादीनां व्यावहारिकत्वादविरोधं बादरायणो मन्यत इति, तदयुक्तं व्यावहारिकत्वाश्रयणस्य विरोधफलत्वेनाविरोधसूत्रप्रणयनस्य निष्प्रयोजनत्वात्सम्भवत्यविरोधादुभयपारमार्थ्ये विरोधफलभूतव्यावहारिकत्वाश्रयणायोगात्सत्यकामत्वादीनां दुःखाद्यभावपरत्वेन निर्वाहेऽभिमते तेषां पदानाममुख्यत्वाच्च, अपरैरविरोधः । अन्येषां पक्षे सन्मात्ररूपेण सर्वात्मभावेन स्थित एवान्येन विभक्तेन रूपेण नानाशरीरवर्तिना विहरतीति यदुक्तं, तन्निरूप्यम्, किं स्वरूपं सर्वात्मभावेन तिष्ठति, विसर्पता ज्ञानेनाधिष्ठितशरीरो विहरतीत्यभिप्रायः, तत्र स्वरूपस्य सर्वात्मभावोऽनुपपन्नः, अणुत्वात्, तत्प्रहाणेन सन्मात्रब्रह्मतापत्तिर्जलबिन्दोर्बिन्दुत्वप्रहाणेन समुद्रतापत्तितुल्या, ततश्च जृम्भमाणस्य तरङ्गस्य पूर्वप्रलीनबिन्दुविशेषाश्रयत्वनिर्धारणवत् विसर्पतो ज्ञानस्य मुक्तात्मविशेषाश्रयत्वनिर्द्धारणायोगात् न मुक्तो विहरतीति वक्तुं युक्तम् । ननु मुक्तस्य

* श्रुतप्रकाशिका *

त्मभावो नाम—जलबिन्दोः समुद्र इव न भेदकाकारप्रहाणेन लयः, किन्तु क्षीरे नीरस्येव भेदकाकाराप्रहाणेन संसर्गः, तस्य च स्वरूपस्य विसर्पणसङ्कोचनविभागाविभागविषयाः शक्तयः सन्ति, अतो विभागशक्त्या विभक्त एकदेशो विहरतीति चेत्, विभक्तांशः किमिदन्तया भाति ? उताऽहमिति, आद्ये च सोंऽशोऽनादिश्चेद्धर्मभूतनित्यज्ञानविकासाद्यभ्युपगमादस्मदीय एव पक्षः स्यात्, सादिश्चेत् प्रत्यगर्थैकदेशस्य पराक्तया परिणामान्निर्विकारत्वश्रुतिभङ्गः। अहमिति भातीति चेत्तस्याहमिति भासमानस्य विभक्तस्यांशस्यांशान्तरं किमिदन्तया भाति ? उताहन्तया ? आद्ये तयोरात्मान्तरत्वं विभक्तस्यांशस्यादिमत्त्वं ध्रुवस्यैकस्य परिणामित्वं च स्यात्, द्वितीये च परस्परापेक्षयाऽहमिति भासमानावंशौ किमहं चाहं चेति समुच्चयार्हौ भवतः, किमहमेवेति, आद्ये मिथो भेदकधर्मग्रहणेन विना समुच्चयावभासायोगात् व्यावर्तकधर्मग्रहणं स्याज्जीवान्तरव्यवच्छेदायैक्यग्रहणं च स्यात्, तत्रेदन्तया व्यावृत्तिरहन्तयैकत्वञ्च वक्तव्यम्, अत एकं प्रत्येकस्याहन्तया इदन्तया च भानं विरुद्ध्येत, समुच्चयानर्हमहमेवेति भातीति चेत्तर्हि भेदकधर्माभावात् विभक्तत्ववादोऽर्थशून्यः स्यात्। अधिष्ठेयदेहभेदसम्बन्ध एव भेदकाकार इति चेन्न, धर्मभूतज्ञानसम्बन्धेनापि करचरणादीनामिवाधिष्ठेयत्वोपपत्तेः, अतः सन्मात्ररूपेण सर्वात्मभावेनावस्थानमन्येन विभक्तरूपेण नानाशरीरवर्तिना विहरणं चानुपपन्नम्॥ ७॥

आत्माधिकरणं समाप्तम्।



* भावप्रकाशिका *

स्मीति च्छेदः। (परे त्वित्यादि) (सर्वात्मभावेन स्थित एवेति) मुक्त इति शेषः (ध्रुवस्येति) विभागावधिभूतस्येत्यर्थः॥ ७॥

इति आत्माधिकरणम्।



## सङ्कल्पादेव तच्छ्रुतेः ॥ ८ ॥

४ अधिकरणम्

मुक्तः परं ब्रह्मोपसम्पद्य ज्ञानस्वरूपोऽपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणक आविर्भवतीत्युक्तम् । तमधिकृत्य तस्य सङ्कल्पत्वप्रयुक्ता व्यवहाराश्च श्रूयन्ते [1]"स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा" इति । किमस्य ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षा ? उत परमपुरुषस्येव सङ्कल्पमात्रादेव भवतीति विशये—लोके राजादीनां सत्यसङ्कल्पत्वेन व्यवह्रियमाणानां कार्यनिष्पादने प्रयत्नान्तरसापेक्षत्वदर्शनादस्यापि तत्सापेक्षा ।

---

* श्रुतप्रकाशिका *

सङ्कल्पादेव तच्छ्रुतेः ॥ ८ ॥ अवान्तरसङ्गतिमाह ( मुक्त इति ) विज्ञानघन एवेतिवत्सङ्कल्पादेवेत्यवधारणस्य सङ्कोचशङ्कया च सङ्गतिरभिप्रेता । ( प्रयत्नान्तरेति ) प्रयत्नशब्दः सङ्कल्पव्यतिरिक्तव्यापारपरः, सत्यसङ्कल्पत्वं किं प्रयत्नान्तरसापेक्षम् ? उत नेति विशय इत्यर्थः । मुक्तस्य किं ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षा ? उत सङ्कल्पमात्रमूला ? किमस्य सत्यसङ्कल्पत्वं राजादीनामिव भवति ? उत परमपुरुषस्येव, किं सङ्कल्पादेवेत्यवधारणं राजादितुल्यतां निवर्त्तयितुं प्रभवति ? नेति, किमीश्वरसङ्कल्पवन्मुक्तात्मसङ्कल्पस्यामोघत्वं सम्भवति ? नेति, किमस्य जक्षणादयो व्यापाराः पुण्यपापरूपतया बन्धका भवन्ति नेति, बन्धकाश्चेत् तत्सङ्कल्पस्य कर्माधीनप्रतिघातसम्भवेनेश्वरवत्तत्सङ्कल्पस्यामोघत्वाभावेनावधारणस्य राजादितुल्यतानिवर्त्तनाक्षमत्वान्मुक्तस्य ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षा स्यात्, यदा बन्धका न भवन्ति, तदा मुक्तात्मनः कर्माधीनप्रतिघातासम्भवेनेश्वर-

---

१. छा० ८-१२-३ ॥

इति प्राप्त उच्यते—सङ्कल्पादेव— इति। कुतः ? तच्छ्रुतेः, [1]"स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति" इति हि सङ्कल्पादेवास्य पित्रादीनां समुत्थानं श्रूयते । न च प्रयत्नान्तरसापेक्षत्वाभिधायि श्रुत्यन्तरं दृश्यते ; येनास्य सङ्कल्पादेवेत्यवधारणस्य विज्ञानघन एवेतिवद् व्यवस्थापनं क्रियते ॥ ८ ॥

* श्रुतप्रकाशिका *

वदमोघसङ्कल्पत्वसम्भवेनावधारणस्य राजतुल्यत्वनिवर्त्तनक्षमत्वात् मुक्तस्य ज्ञात्यादिप्राप्तिः सङ्कल्पमात्रमूला स्यात् । ( अस्यापि तत्सापेक्षेति ) ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षेत्यर्थः, सङ्कल्पादेवेत्येवकारस्तु विज्ञानघन एवेति वदयोगव्यवच्छेदपरः, न त्वन्ययोगव्यवच्छेदपर इत्यभिप्रायः ।

राद्धान्ते ( विज्ञानघन एव इतिवदिति ) अनेन सङ्गतिविशेषोऽप्यभिप्रेतः ॥८॥

ঙ भावप्रकाशिका ঙ

( विज्ञानघन एवेतिवदयोगव्यवच्छेदपर इति ) नच विज्ञानघन एवेत्यत्र कृत्स्नोप्यात्मा जडव्यावृत्तस्वप्रकाश इत्यादिना अन्ययोगव्यवच्छेदपरत्वस्य पूर्वसूत्रे प्रतिपादनात् तद्विरोध इति वाच्य, तस्य विशेषणसङ्गतैवकारत्वेन शङ्खः पाण्डुर एवेत्यत्र एवकारस्य पाण्डुरत्वायोगव्यवच्छेदकत्ववत् एतस्यापि विज्ञानत्वायोगव्यवच्छेदपरत्वेन ज्ञानत्वायोगे सर्वत्र व्यवच्छिन्ने तद्व्यतिरिक्तजाड्यव्यवच्छेदस्य फलीभूतस्य प्रतिपादकतया तस्य ग्रन्थस्यान्ययोगव्यवच्छेदे तात्पर्याभावात्, भाष्ये— नच प्रयत्नान्तरसापेक्षत्वाभिधायीति, मुक्तसङ्कल्पस्य लौकिकसङ्कल्पवत् सङ्कल्पत्वेन यत्सापेक्षत्वानुमानम् , तत् नरशिरःकपालशौचानुमानवदागमबाधितत्वात् न प्रतिरोधीत्यर्थः, इतरथा अगस्त्यादेः समुद्रपानादिवृत्तान्तो असत्यः स्यादिति भावः, नन्वियं चिन्ता वृथा, यथा मनोरथमात्रोपस्थापितापि स्त्री स्त्रैणाना चरमधातुनिसर्गे हेतुः, एवं पित्रादयोपि अस्य सङ्क-

1. छा० ८-२-१ ॥

## अत एव चानन्याधिपतिः ॥ ९ ॥

यतो मुक्तः सत्यसङ्कल्पः; अत एवानन्याधिपतिश्च । अन्याधिपतित्वं हि विधिनिषेधयोग्यत्वम्, विधिनिषेधयोग्यत्वे हि प्रतिहतसङ्कल्पत्वं भवेत् । अतः सत्यसङ्कल्पत्वश्रुत्यैवानन्याधिपतित्वं च सिद्धम् । अत एव 'स स्वराड् भवति' इत्युच्यते ॥ ९ ॥

सङ्कल्पाधिकरणं समाप्तम् ।



* श्रुतप्रकाशिका *

अत एव चानन्याधिपतिः ॥ ९ ॥ सत्यसङ्कल्पत्वोपपादकमिदं सूत्रं जक्षणादिव्यापाराणां पुण्यपापरूपत्वेन सङ्कल्पप्रतिघातसम्भवान्मोघसङ्कल्पत्वशङ्काव्युदासेनावधारणस्य सङ्कोचनिरासकं हीदम् । अक्षरार्थमाह ( यत इति ) अन्याधिपतित्वं विवृणोति ( विधिनिषेधेति ) अनन्याधिपतित्वसत्यसङ्कल्पत्वयोरुपपाद्योपपादकभावं व्यतिरेकेण दर्शयति ( विधिनिषेधयोग्यत्वे हीति ) ननु सत्यसङ्कल्पत्वात् विधिनिषेधायोग्यत्वं तदयोग्यत्वात्सत्यसङ्कल्पत्वमित्यन्योन्याश्रय इत्यत्राह ( अतः सत्यसङ्कल्पत्वश्रुत्यैवेति ) सङ्कल्पादेवेत्यवधारणासङ्कोचः स्वतः प्राप्तः, मुक्तस्य जक्षणादिव्यापाराणां पुण्यपापरूपत्वमश्रुतं, न च तत्कल्प्यं, स्वर्गिणां कर्मफलभूतेषु तिरश्चां

* भावप्रकाशिका *

ल्पोपस्थापिताः कल्पिष्यन्ते स्वकार्यजननाय किमर्था सृष्टिरभ्युपेयते, मैवं सन्ति हि कानिचिद्वस्तुस्वरूपसाध्यानि कार्याणि दंतक्षतमणिमालादीनि, कानिचित् तद्ज्ञानसाध्यानि, यथा उक्तानि चरमधातुविसर्गरोमहर्षादीनि, तत्र पित्रादेः मनोरथमात्रोपनीतत्वे ज्ञानमात्रसाध्यानि कार्याणि परं भविष्यन्ति, नतु वस्तुस्वरूपसाध्यानि, नहि स्त्रैणस्य रोमहर्षणादिवद्भवन्ति, स्त्रीवस्तुसाध्या दन्तक्षतमणिमालादयः, अतस्तत्कार्यसकलभोगसिद्ध्यर्थं सृष्टिः कर्त्तकार्या ॥ ७ ॥

( स्वर्गिणां कर्मफलभूतेष्विति ) जक्षणादिष्विति शेषः, नहि स्वर्गिणां

* श्रुतप्रकाशिका *

व्यापारेषु च व्यभिचारात्, अतः सङ्कोचकाभावादसङ्कुचितेनावधारणेन सत्यसङ्कल्पत्वं सिद्धमिति तथैव श्रुत्या विधिनिषेधागोचरत्वं च ज्ञापितमित्यर्थः। उक्ततर्कानुगृहीतं श्रुत्यन्तरं च विधिनिषेधायोग्यत्वे प्रमाणमित्याह (अत एवेति) अनेन सूत्रस्थचशब्दार्थो व्याख्यातो भवति, एवमनेन सूत्रेण मुक्तानामीश्वरवद् ब्राह्मणगुणान्वयः प्रतिष्ठापितो भवति, अपहतपाप्मत्वं नाम न पापप्रध्वंसवैशिष्ट्यम्, अपि तु पुण्यपापसजातीयव्यापारेषु सत्स्वपि तत्फलसम्बन्धानर्हत्वमित्यत्रैव हि स्पष्टं दर्शितम्। अत्रानधिपतिरिति नोक्तं, किन्त्वनन्याधिपतिरिति, अत्रायमभिप्राय—स्वाभाविकशेषिणः परमपुरुषादन्यो नाधिपतिर्मुक्तस्येति, अन्यथा ह्यनधिपतिरित्येतावताऽलम्, अन्यशब्दो बहुव्रीहिसूचनार्थं इति चेन्न, अनन्याधिपतिरित्युक्तेऽप्यन्येषामिति समाससद्भावात्, अतोऽन्यशब्दस्योक्त एवार्थं इति सम्प्रदायः।

परे तु सङ्कल्पादेव पित्रादि सृजन्नपि मुक्तोऽनन्याधिपतिः, न स्वामिनं सङ्कल्पयतीत्येतदर्थपरमनन्याधिपतिशब्दमाहुः, तत्र को हेतुः, स्वामिपारतन्त्र्यस्यापुरुषार्थत्वादिति चेत्पित्रादिपारतन्त्र्येऽपि तुल्यं, पित्रादयः

☙ भावप्रकाशिका ☙

तिरश्चां वा जक्षणादीनि पुण्यं पापं वा आर्जयन्तीति भावः (तथैव च श्रुत्या विधिनिषेधागोचरत्वञ्च ज्ञापितमित्यर्थ इति) यथा पीनत्वकल्प्यस्य रात्रिभोजनस्य पीनत्वोपपादकत्वं, एवं सत्यसङ्कल्पत्वकल्प्यस्याप्यनन्याधिपतित्वस्य तदुपपादकत्वे नानुपपत्तिरिति भावः, अत एव 'सूक्तवाकेन प्रस्तरं प्रहरति' इत्यत्र प्रस्तरप्रहरणस्यायागरूपत्वेन देवतासम्बन्धासम्भवात् देवताप्रकाशकस्य सूक्तवाकस्य तृतीयाश्रुत्या न तच्छेषत्वप्रतिपादनं सम्भवतीत्याशंक्य तृतीयाश्रुत्यवगतसूक्तवाककरणत्वान्यथानुपपत्त्यैव सूक्तवाकप्रतिपाद्यदेवतासम्बन्धेन यागरूपत्वं प्रस्तरप्रहरणस्य कल्प्यत इति प्रतिपादितमिति भावः। ननु अपहतपाप्मत्वस्य पूर्वं सिद्धतया एतत्सूत्रव्यावर्त्यशङ्काया अनुत्थानमित्याशंक्याह (अपहतपाप्मत्वं नामेति) (अत्रैव हि स्पष्टं दर्शितमिति) सूत्र इति शेषः।

(परे त्वित्यादि) अत एव सत्यसङ्कल्पत्वादेव न स्वामिनं सङ्कल्पा-

* श्रुतप्रकाशिका *

प्रियङ्कराश्च स्युः, अतस्तत्सङ्कल्प इति चेत्तत्स्वामिनोऽपि तुल्यम्, अतो नायमर्थ उपपन्नः । अपरेषामपि तुल्येयमनुपपत्तिः ।—अन्ये तु 'अत एव' इति सूत्रमधिकरणान्तरमाहुः, सर्वेश्वरत्वपरवाक्यैर्मुक्तस्यापीश्वरोऽधिपतिरिति पूर्वपक्षं कृत्वा मुक्तस्य सत्यसङ्कल्पत्वादेव नास्याधिपतिरित्याहुः, कथं दुःखहेतुविरहेण मुक्ते तदापादनायोगात् दुःखासद्भावादेव तन्निवर्तनायोगात्स्वतःसिद्धानन्दतया तदापादनतन्निवर्तनायोगात्प्रवृत्तस्य विघाते निवृत्तस्य प्रवर्तने च प्रवृत्तिनिवृत्तिविषयसङ्कल्पयोर्मोघत्वप्रसङ्गाच्च । 'अथ येऽन्यथा विदुरन्यराजानस्ते क्षय्यलोका भवन्ती'त्यन्यराजवतः क्षय्यलोकतां दर्शयन्नात्मविदोऽनन्यराजत्वं दर्शयति 'स स्वराड् भवती'त्यादिश्चायमेवार्थ इति । अत्र ब्रूमः—अधिपतिशब्दस्य शेषिवाचित्वमभिमतं चेत्तदप्रतिषेध्यं शेषलक्षणस्य मुक्तात्मनि विरोधासम्भवात् । यदि नियन्तृत्वं विवक्षितं तच्च मुक्तं प्रति सम्भवत्येव । तथा हि नियमनशब्देन यदि नियमनसामान्यं विवक्षितं तदा धारणमपि तदन्तर्गतत्वेन विवक्षितं स्यात्, तत्तावदप्रतिषेध्यं 'स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते । ब्रह्मणो हि प्रतिष्ठाह' मिति वचनात्, स्वेच्छया परप्रवृत्तिनिवृत्त्योरुत्पादनरूपनियमनविशेषो यदि विवक्षितः, तत्प्रतिषेधस्तावत्स्वपक्षव्याघातकः, 'जगद्व्यापारवर्ज' मित्यत्रेश्वराधीनं मुक्तस्य सङ्कल्पादि प्रवर्तते, अस्य जगद्व्यापारवर्जितेषु स्वभोगार्थेषु नित्यं सङ्कल्पो भूयात्, मा भूत्तत्सङ्कल्पविरुद्धेषु जगद्व्यापारेष्वित्यपवर्गप्रदानसमय एवेश्वरः सङ्कल्पयतीत्यभ्युपगमात्, अपवर्गप्रदानोत्तरकाले तु न तादधीन्यमिति चेन्न, जगद्व्यापारविषयसङ्कल्पोत्पत्तिप्रतिबन्धे तत्प्रतिबन्धकेश्वरसङ्कल्पस्य नित्यस्य वा तदा सञ्जातस्य वा विद्यमानत्वस्यापेक्षितत्वात् । न हि प्रतिबन्धकासन्निधौ कार्यप्रतिबन्धसम्भवः । अथ मतं—प्राथमिकसङ्कल्पजन्यः कश्चिदतिशयो मुक्तात्मगतः सर्वदा जगद्व्यापारं प्रतिबध्नाति, न तदेश्वरनियाम्यत्वं, न ह्यतिश-

* भावप्रकाशिका *

त्सृजति स्वामिपारतन्त्र्ये स्वसत्यसङ्कल्पत्वविरोधप्रसङ्गात् अतोऽनन्याधिपति.... कुर्वन्तीत्यर्थः ( दुःखहेतुविरहेणेति ) यो यस्मिन्सुखदुःखे आपादयितुं निवर्तयितुं च प्रभवति स तस्याधिपतिरिति भावः ( शेषलक्षणस्येति ) मोक्षणादौ

## अभावं बादरिराह ह्येवम् ॥ १० ॥

५ अधिकरणम् — किं मुक्तस्य देहेन्द्रियाणि न सन्ति अथवा यथासङ्कल्पं सन्ति ? न सन्ति चेति

* श्रुतप्रकाशिका *

याधायकानां नियन्तृत्वम् , आधायकविनाशेऽप्याहितातिशयस्य कार्यकरत्वदर्शनादिति, तन्न कल्पनागौरवप्रसङ्गात् , ईश्वरसङ्कल्पजन्यातिशयस्य स्थायित्वाभ्युपगमादपि वरं हीश्वरसङ्कल्पस्यैव स्थायित्वोपगमः । अतः स्ववचनव्याघातः सर्वेश्वरत्ववाचिश्रुतिस्वारस्यभङ्गश्च स्यात् , 'यस्यात्मा शरीर' मिति श्रुतिविरोधश्च । काष्ठाप्राप्तं नियाम्यं हि शरीरं, न चात्मशब्दो बद्धमात्रपरः, सर्वदेवसर्वभूतानां बद्धानां तन्नियाम्यत्वस्योक्तत्वात्, नाप्यन्तःकरणविषयः, अमुख्यत्वादात्मशब्दस्य, 'यो मनसि तिष्ठ' न्नित्यनेन पुनरुक्तत्वाच्च, 'येन येन धाता गच्छति तेन तेन सह गच्छती' ति मुक्तस्य परमात्मानुविधानश्रुतिविरोधश्च, नित्यस्य परसापेक्षत्वमीश्वरप्रमितिनित्यपदार्थगतपरिमाणादिषु सर्वसम्प्रतिपन्नत्वात्सम्भवति ॥ ९ ॥

सङ्कल्पाधिकरणं समाप्तम् ।



अभावं बादरिराह ह्येवम् ॥ १० ॥ (यथा सङ्कल्पमिति) अनेन सङ्गतिर्दर्शिता, किं मुक्तस्य देहेन्द्रियाणि न सन्ति ? उत सन्ति ! उत यथासङ्कल्पं सन्ति न सन्ति चेति, तदर्थं 'स एकधा भवती'त्यादिश्रुतिरशरीरत्वश्रुतिं सङ्कोचयितुं शक्नोति ? नेति, किं स 'एकधा भवतीत्या'दिश्रुतिर्मुक्तस्य सशरीरत्वं प्रतिपादयितुं प्रभवति ? उत न, प्रतिपादनेऽपि किं सशरीरत्वमात्रं प्रतिपादयति ? उत तस्यैच्छत्वमप्यवगमयति, तदर्थमेकधा भवनत्रिधाभवनादिकं मुक्तस्य शरीरेण विना सम्भवति ? उत न, अस-

* भावप्रकाशिका *

सुखदुःखापादननिवर्तनाक्षमस्यापि व्रीह्यादेः शेषित्वादिति भावः ( ब्रह्मणो हि प्रतिष्ठाहमिति ) मुक्तस्य धारक इत्यर्थः ॥ ९ ॥

इति सङ्कल्पाधिकरणम् ।

विशये—शरीरेन्द्रियाणामभावं बादरिराचार्यो मन्यते । कुतः ? आह ह्येवम् [1]"न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति शरीरसम्बन्धे दुःखस्यावर्जनीयत्वमभिधाय "अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति मुक्तस्याशरीरत्वं ह्याह श्रुतिः ॥ १० ॥

भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

* श्रुतप्रकाशिका *

म्भवे च मुक्तस्य ब्रह्मानुभवैकभोगस्य तद्व्यतिरिक्तदेहसर्गादाविच्छादिकं सम्भवति, नेति, अणोर्जीवस्यानेकशरीरपरिग्रहः सम्भवति, नेति च, यदा अनेकशरीरपरिग्रहो न सम्भवति यदा च शरीरेण विनापि त्रिधाभवनादिकमुपपद्यते, तदा 'स एकधे'त्यादिवाक्यस्य शरीरप्रतिपादकत्वाभावेनाशरीरत्वश्रुतिसङ्कोचनासामर्थ्यान्मुक्तोऽशरीर एव स्यात्, यदाऽणोरप्यनेकशरीरयोगः सम्भवति, यदा च शरीरेण विना त्रिधाभवनादिकमनुपपन्नं, ब्रह्मानुभवैकभोगस्य देहसर्गादीच्छा च न स्यात्तदाशरीरस्यावश्यापेक्षितत्वादिच्छाधीनान्वयव्यतिरेकत्वाभावाच्च तत्प्रतिपादकवाक्येनाशरीरत्वश्रुतिसङ्कोचे सति मुक्तः सशरीर एव स्यात्, यदाऽनेकशरीरपरिग्रहोपपत्तिः अनेकधाभवनञ्च शरीरसापेक्षं, ब्रह्मानुभवैकभोगस्य देहसर्गादाविच्छा च सम्भवति, तदानीमैच्छशरीरप्रतिपादनक्षमेण स एकधा भवतीत्यादिवाक्येनाशरीरत्वश्रुतेः सङ्कोचे सति मुक्तो यथेच्छं सशरीरोऽशरीरश्च स्यादिति, (शरीरेन्द्रियाणामभावमिति) अभावप्रतिसम्बन्धि किमित्यपेक्षायां 'तन्वभाव' इति सूत्रस्थतनुशब्देन प्रतियोगिविशेषावगम इति भावः । (शरीरसम्बन्ध इति) शरीरत्वप्रयुक्तं दुःखहेतुत्वमिति भावः । एवमशरीर एवेत्येकः पक्षः ॥ १० ॥

भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥ अत्र शरीरिवाचिशब्दो न श्रुत

1. छा० ८-१२-१ ॥

मुक्तस्य शरीरेन्द्रियभावं जैमिनिराचार्यो मन्यते, कुतः? विकल्पामननात्– विविधः कल्पो विकल्पः वैविध्यमित्यर्थः, [1]"स एकधा भवति त्रिधा भवति पञ्चधा भवति सप्तधा" इत्यादिश्रुतेः। आत्मन एकस्याच्छेद्यस्यानेकधाभावासम्भवात् त्रिधाभावादयः शरीरनिबन्धना इत्यवगम्यते। अशरीरत्ववचनं तु कर्मनिमित्तशरीरभावपरं, तदेव हि शरीरं प्रियाप्रियहेतुः॥

भगवांस्तु बादरायणः स्वमतेन सिद्धान्तमाह—

द्वादशाहवदुभयविधं बादरायणोऽतः॥ १२॥

'सङ्कल्पादेव' इत्येतदतश्शब्देन परामृश्यते, अत एव सङ्कल्पात्, उभयविधं सशरीरमशरीरं च मुक्तं भग-

* श्रुतप्रकाशिका *

इत्यत्राह (आत्मन एकस्येति) द्विधाशब्दादीनां धर्मिभेदे एव स्वारस्यं 'तदखण्डमकरोत द्विधा' इत्यादिप्रयोगात् द्रव्यत्वपृथिवीत्वादिजातिसंयोगादिगुणपरिस्पन्दरूपक्रियासहस्रान्वितेऽपि घटे द्विधा त्रिधा सहस्रधाऽभूदिति प्रयोगाभावाच्च, तथाऽऽप्यात्मनि स्वरूपभेदासम्भवात् शरीरद्वारकमित्यर्थः। तर्ह्यशरीरत्वश्रुतिः कथमित्यत्राह (अशरीरत्ववचनं त्विति) स्ववाक्येनैव तदुपपादयति (तदेव हीति) प्रियाप्रियहेतुतया शरीरस्य निषेधात्, प्रियाप्रिययोश्च कर्मफलत्वात्कर्मकृतशरीरविषयो निषेध इत्यर्थः। अतः सशरीरत्वश्रुतेर्निवारकाभावात् कादाचित्कहेत्वन्तरानुक्तेश्च सर्वदा सशरीरत्वं फलितमिति सूत्राभिप्रायः॥ ११॥

सिद्धान्तसूत्रमवतारयति (भगवांस्त्विति)।

द्वादशाहवदुभयविधं बादरायणोऽतः॥ १२॥ अतःपदं व्याचष्टे (सङ्कल्पादेवेति) त्रिधाभवनादेर्हेत्वाकाङ्क्षायां सत्यसङ्कल्पत्वश्रुतिरेव पूरयति, व्यापारान्तरेष्वपि तस्यैव हेतुत्वश्रवणौचित्यादिति भावः। सूत्रस्य वाक्या-

[1]. छा० ७-२६-२॥

वान्बादरायणो मन्यते । एवं चोभयी श्रुतिरुपपद्यते, द्वादशाहवत्—यथा "द्वादशाहमृद्धिकामा उपेयुः" "द्वादशाहेन प्रजाकामं याजयेत्" इत्युपैतियजतिचोदनाभ्यां सङ्कल्पभेदेन सत्रमहीनश्च भवति ॥ १२ ॥

* श्रुतप्रकाशिका *

र्थमाह ( अत एवेति ) ननु उभयी श्रुतिरिति सशरीरत्वाशरीरत्वश्रुती विवक्षिते, अशरीरत्वश्रुतेः कर्मकृतशरीरपरत्वमुक्तं, कर्मकृतशरीराभावश्च सर्वदाऽस्ति तत्कथं कदाचिदशरीरत्वे सा प्रमाणं, नैवं, प्रमाणतया विवक्षितत्वाभावात्, सत्यसङ्कल्पादिवाक्यानुगृहीतया सशरीरत्वश्रुत्या यथेच्छशरीरत्वे चाभ्युपगते सत्यशरीरत्वश्रुतिरप्यर्थवती सशरीरत्वश्रुतिरप्यबाधिता स्यादिति भाष्यार्थः । सङ्कल्पभेदेन—सत्रत्वेऽहीनत्वे च प्रामाणिके सति तत्तत्प्रयोगविशेषेषु सङ्कल्प-

* भावप्रकाशिका *

भाष्ये—सङ्कल्पभेदेन सत्रमहीनश्चेत्युक्तमयुक्तं, सत्रत्वाहीनत्वयोः आसीरन्यजतिचोदनानिबन्धनत्वेन सङ्कल्पभेदनिबन्धनत्वाभावात् इति न शंक्यम्, सङ्कल्पभेदेन सत्रमहीनश्च भवतीति नान्वयः, येनायं दोषः स्यात्, किन्तु उपैतियजतिचोदनाभ्यां द्विरूपत्वे सिद्धे यस्य यादृक्प्रयोगेच्छा स तं प्रयोगमनुतिष्ठतीत्यर्थ इत्याह ( सत्रत्वे अहीनत्वे चेत्यादिना ) सङ्कल्पभेदेनेति भाष्यग्रन्थः, 'प्रायणीयोतिरात्रः प्रथममहः, पृष्ठ्यः षडहः त्र्यश्छन्दोमाः, अविवाक्यमेकमहः उदयनीयोतिरात्रश्चरममहः' इत्येवंरूपोऽहर्गणो द्वादशाहः, स च उपैतियजतिचोदनाभ्यां सत्ररूपोऽहीनश्च, अहीने हि 'एको द्वौ बहवो वाऽहीनेन यजेरन्' इति कर्तृसंख्यानियमाभावः, तथा 'न दीक्षिता याजयेरन्' इति याजकेषु दीक्षितत्वप्रतिषेध इत्येवमादयो धर्मा व्यवस्थिताः, सत्रे 'गृहपतिसप्तदशाश्चतुर्विंशतिपरमाः स्वयमृत्विजो ब्राह्मणास्सत्रमुपेयु.' इति सप्तदशसङ्ख्याया अन्यूनत्वनियमः, दीक्षितानामेव परस्परयाजकत्वमित्यादयो धर्मा व्यवस्थिताः । ततश्च यथा द्विरूपत्वं द्वादशाहस्य, एवं मुक्तस्यापि सदेहत्वं विदेहत्वं च प्रामाणिकमित्येवं रूपद्वये प्रामाणिके सति यथेच्छावशेन अही-

यदा शरीराद्युपकरणवत्त्वम्; तदा तानि शरीराद्युपकरणानि स्वेनैव सृष्टानीति नास्ति नियम इत्याह—

तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥

स्वेनैव सृष्टतनुप्रभृत्युपकरणाभावे परमपुरुषसृष्टैरुपकरणैर्भोगोपपत्तेः सत्यसङ्कल्पोऽपि स्वयं न सृजति। यथा स्वप्ने [1]"अथ रथान् रथयोगान् पथः सृजते" इत्यारभ्य [1]"अथ वेशन्तान् पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्ता" इति [2]"य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते तस्मिँल्लोकाः श्रितास्सर्वे तदु नात्येति कश्चन" इति चेश्वरसृष्टैः रथाद्युपकरणैर्जीवो भुङ्क्ते, तथा मुक्तोऽपि लीलाप्रवृत्तेनेश्वरेण सृष्टैः पितृलोकादिभिर्लीलारसं भुङ्क्ते ॥ १३ ॥

* श्रुतप्रकाशिका *

भेदो नियामक इत्यर्थः । बहुयजमानसङ्कल्पात् सत्रम्, एकस्य सङ्कल्पादहीनम् ॥ १२ ॥

पूर्वसूत्रसङ्गतमुत्तरसूत्रार्थं संक्षिपन्सूत्रमवतारयति ( यदेति ) ।

तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥ परमपुरुषसृष्टैः—अद्वारकसृष्टैरित्यर्थः । ( भोगोपपत्तेरिति ) देहादिसृष्टेर्ब्रह्मानुभवानन्तर्गतत्वे तत एव तदिच्छाद्यसम्भवेऽभ्युपगम्यमानेऽपि एकधाभवनादिश्रवणबलात्तदनुगुणप्रकारपरिकल्पनेन नि-

७ भावप्रकाशिका ७

नसत्रान्यतरप्रयोगपरिग्रहः, एवं सङ्कल्पवशेन सदेहत्वविदेहत्वान्यतरपरिग्रह इत्यर्थः ॥ ७ ॥

( तदनुगुणप्रकारपरिकल्पनेनेति ) मुक्तसङ्कल्पाभावेऽपि परमात्मसङ्कल्पात्

१. बृ० ६-३-१० ॥ | २. कठ० २-५-८ ॥

भावे जाग्रद्वत् ॥ १४ ॥

स्वसङ्कल्पादेव सृष्टतनुप्रभृतिपितृलोकाद्युपकरणभावे जाग्रत्पुरुषभोगवन्मुक्तोऽपि लीलारसं भुङ्क्ते ; परमपुरुषोऽपि लीलार्थं दशरथवसुदेवादिपितृलोकादिकमात्मनः सृष्ट्वा तैर्मनुष्यधर्मलीलारसं यथा भुङ्क्ते, तथा मुक्तानामपि स्वलीलायै पितृलोकादिकं स्वयमेव सृजति कदाचित्, कदाचिच्च मुक्ताः सत्यसङ्कल्पत्वात् परमपुरुषलीलान्तर्गतस्वपितृलोकादिकं स्वयमेव सृजन्तीति सर्वमुपपन्नम् ॥ १४ ॥

नन्वात्माऽणुपरमाण इत्युक्तम्, कथमनेकशरीरे-

---

* श्रुतप्रकाशिका *

र्वाहो न्याय्य इति भावः ( यथेति ) अस्य निर्वाहस्यौचित्यप्रदर्शनार्थं सूत्रे सन्ध्यदृष्टान्तोपादानमित्यभिप्रयन्सार्थत्वमाह ॥ १३ ॥

भावे जाग्रद्वत् ॥ १४ ॥ सूत्रं योजयति ( स्वसङ्कल्पादेवेति ) ननु मुक्तस्य पित्रादिसर्गसापेक्षत्वे ब्रह्मानुभवादन्यपरत्वं ब्रह्मणि भोग्यतावैकल्यं पित्रादीच्छाया अकर्मकृतत्वं च न स्यादिति शङ्कायामाह ( परमपुरुषोऽपीति ) पितृलोकादिसृष्टेर्भगवल्लीलान्तर्गतत्वे निदर्शनं दशरथादिसृष्टिः, तदन्तर्गतत्वादेव पित्रादिसृष्टावपि मुक्तस्य न ब्रह्मानुभवादन्यपरत्वं, ब्रह्मसम्बन्धिलीलाविशेषस्यानुकूलत्वं ब्रह्मणः प्रियतमत्वातिशयनिबन्धनम्, अत एव न ब्रह्मणः प्राप्यत्ववैगुण्यं, मुक्तात्मनां पित्रादीच्छाया अकर्मकृतत्वं भगवतो वसुदेवादिकल्पनेच्छाया इवोपपन्नमित्यर्थः ॥ १४ ॥

उत्तरसूत्रशङ्कामाह ( नन्विति ) ।

* भावप्रकाशिका *

देहादिसृष्टिरित्यर्थः, ततश्च पूर्वसूत्रे अतश्शब्दपरामृष्टस्य सङ्कल्पस्य मुक्ताश्रितत्वानियम इति भावः ( सार्थमाहेति ) तन्वभाव इति सूत्रार्थस्य 'सङ्कल्पा-

त्वेकस्याणोरात्माभिमानसम्भव इत्यत्राह—

प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

यथा प्रदीपस्यैकस्यैकस्मिन्देशे वर्तमानस्य स्वप्रभया देशान्तरावेशः, तथाऽऽत्मनोऽप्येकदेशस्थितस्यैव स्वप्रभारूपेण चैतन्येन सर्वशरीरावेशो नानुपपन्नः। यथा चैकस्मिन्नपि देहे हृदयाद्येकप्रदेशवर्तिनोऽपि चैतन्यव्याप्त्या सर्वस्मिन्देहे आत्माभिमानस्तद्वत्। इयान्विशेषः—अमुक्तस्य कर्मणा सङ्कुचितज्ञानस्य देहान्तरेष्वात्माभिमानानुगुणा व्याप्तिर्न सम्भवति; मुक्तस्य त्वसङ्कुचितज्ञानस्य यथासङ्कल्पमात्माभिमानानुगुणा व्याप्तिरिदमिति ग्रहणानुगुणा च नानुपपन्ना। तथा हि दर्शयति— "वालाग्रशतभागस्य

* श्रुतप्रकाशिका *

प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥ अत्र वक्तव्यं सर्वं 'गुणाद्वाऽऽलोकव'दित्यत्रापेक्षितत्वादुक्तं, स्वरूपस्यैकदेशस्थत्वेऽपि धर्मस्य प्रदेशान्तरे कार्यकरत्वमात्रं दृष्टान्तोपजीव्यं, तर्हि वस्त्वन्तराण्यपि ज्ञानेनाधितिष्ठेदित्यत्राह (इयानिति) (आत्माभिमानानुगुणेति) प्रवर्तकत्वशक्तिविशिष्टेत्यर्थः। आत्माभिमानो हि शरीरस्वाभिमानः, तदेकप्रवर्त्यं हि शरीरं तत्प्रेरकत्वं शरीरित्वमिति, इदमिति ग्रहणानुगुणेति प्रकाशकत्वशक्तिरुक्ता। (तथा हि

७ भावप्रकाशिका ७

देव तेच्छ्रुत'रित्यधिकरणविरुद्धत्वात् स नाभिमत इति भावः ॥ ७ ॥

(प्रवर्तकत्वशक्तिविशिष्टेत्यर्थ इति) आत्माभिमानस्य प्रवृत्तिहेतुतया आत्माभिमानानुगुण्येन प्रवृत्त्यानुगुण्यमस्तीति आत्माभिमानानुगुणशब्देन प्रवृत्तिशक्तियुक्तत्वं लक्ष्यत इति भावः, आत्माभिमानस्य प्रवृत्तिहेतुत्वमुपपादयति (आत्माभिमानो हीत्यादिना) (प्रकाशकत्वशक्तिरुक्तेति) घटपटादिबाह्यवस्तुप्रका-

शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" इति। अमुक्तस्य कर्म नियामकम्, मुक्तस्य तु स्वेच्छेति विशेषः।

ननु परं ब्रह्म प्राप्तस्यान्तरबाह्यज्ञानलोपं दर्शयति श्रुतिः, "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इति, तत्कथं मुक्तस्य सार्वज्ञ्यमुच्यते ? तत्रोत्तरम्—

स्वाप्ययसम्पत्त्योरन्यतरापेक्षमा-
विष्कृतं हि ॥ १६ ॥

नेदं वचनं मुक्तविषयम्, अपि तु स्वाप्ययसम्पत्त्योरन्यतरापेक्षम् । स्वाप्ययः– सुषुप्तिः, सम्पत्तिश्च

---

* श्रुतप्रकाशिका *

दर्शयति ) स्वरूपाणुत्वे ज्ञानेनानेकशरीरित्वोपपत्तौ च श्रुतिरस्तीत्यर्थः । अमुक्तेष्वपि सौभर्यादिष्वनेकशरीरपरिग्रहो दृश्यते, मुक्तस्य को भेदः, मुक्तोऽनेकशरीरपरिग्रहक्षमश्चेत्पूर्वावस्थायामपि करोत्वित्यत्राह (अमुक्तस्य कर्मेति) ॥१५॥

उत्तरसूत्रशङ्कामाह ( नन्विति ) ।

स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥ 'सता सोम्य तदा सम्पन्नो भवति' इत्यादिभिः स्वापे ब्रह्मसम्पत्तिः प्रसिद्धेति मृतौ ब्रह्मसम्पत्ति-

* भावप्रकाशिका *

ज्ञानशक्तियुक्ता ज्ञानव्याप्तिरित्यर्थः ॥ * ॥

भाष्ये—सम्पत्तिश्च मरणमिति, प्रतिज्ञातार्थोपपादकतया 'वाङ्मनसि सम्पद्यते' इत्यारभ्य 'तेजः परस्यां देवतायाम्' इत्यन्तो ग्रन्थः तदेकवाक्यतयाऽपि योजयितुं शक्यते, 'वाङ्मनसि सम्पद्यते' इत्यारभ्य 'तेज परस्यां देवताया'मिति वचनात्, तयोश्चावस्थयोः प्राज्ञप्राप्तिः निस्सम्बाधत्वञ्च विद्यते इत्युत्तरग्रन्थैकवाक्यतामभिप्रेत्याह ( सता सोम्य तदा सम्पन्नो भवतीत्यादिभि-

मरणं, 'वाङ्मनसि सम्पद्यते' इत्यारभ्य 'तेजः परस्यां देवताया'मिति वचनात् तयोश्चावस्थयोः प्राज्ञप्राप्तिर्निःसम्बोधत्वं च विद्येते । अतस्तयोरन्यतरापेक्षमिदं वचनम् । सुषुप्तिमरणयोर्निःसम्बोधत्वं मुक्तस्य च सर्वज्ञत्वमाविष्कृतं हि श्रुत्या [1]"नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामि" इति सुषुप्तिवेलायां निस्सम्बोधत्वमुक्त्वा तस्मिन्नेव वाक्ये मुक्तमधिकृत्य [2]"स वा एष दिव्येन चक्षुषा मनसैतान्कामान् पश्यन् रमते

* श्रुतप्रकाशिका *

विषयं प्रमाणमाह (तेजः परस्यामिति) अस्य वाक्यस्य मरणविषयत्वद्योतनाय वाङ्मनसीत्यादिकमुक्तं, ब्रह्मसम्पत्तिनिर्बोधत्वयोस्तदा सम्भवे सति ह्यस्य वाक्यस्य तयोरन्यतरपरत्वमिति शङ्काव्यावृत्त्यर्थमाह (तयोश्चावस्थयोरिति) इति वचनाद्विद्येते इत्यन्वयः । सूत्रखण्डान्तरं व्याचष्टे (सुषुप्तीति) 'सता सोम्य' 'तेजः परस्यां देवताया'मिति च सुषुप्तिमरणयोर्ब्रह्मसम्पत्तिश्रुतिश्चानुसन्धेया,

❀ भावप्रकाशिका ❀

रिति) पूर्ववाक्यैकवाक्यतामभिप्रेत्याह (ब्रह्मसम्पत्तिनिर्बोधत्वयोरित्यादिना) एवञ्च योजनाद्वयमपि भाष्यकृदभिमतमिति सूचितमिति द्रष्टव्यम्, 'प्राज्ञेनाऽऽत्मना सम्परिष्वक्तः' इति वाक्ये ब्रह्मसम्पत्तिनिर्बोधत्वयोः श्रवणात् 'आविष्कृतं ही'ति सूत्रखण्डेनापि द्वयमपि दर्शनीयमिति मत्वा ब्रह्मसम्पत्तिश्रुतिश्चानुसन्धेयेति 'अभावं बादरि'रिति सूत्रेण 'मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके' इतिश्रुतौ मनसेतिविशेषणात् मुक्तस्य शरीरेन्द्रियाणामभावोऽवसीयते, यदि हि मनसा शरीरेन्द्रियैश्च विहरेत् तदा मनसेति विशेषणमनर्थकं

1. छा० ८-११-२ ॥ 2. छा० ८-१२-५ ॥

य एते ब्रह्मलोके" इति सर्वज्ञत्वमुच्यते । तथा "सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति च स्पष्टमेव सर्वज्ञत्वमुच्यते । तथा मरणे च निस्सम्बोधत्वम्, 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इत्युक्तं, विनश्यति न पश्यतीत्यर्थः । अतः "प्राज्ञेनात्मना" इति वचनं स्वाप्ययसम्पत्त्योरन्यतरापेक्षम् ॥ १६ ॥

अभावाधिकरणं समाप्तम् ।



* श्रुतप्रकाशिका *

सङ्कल्पादेवेत्यनेन मनःसिद्धे शरीरेन्द्रियविषयोऽयं विचार इति परैरुक्तं शरीराभावपक्षेऽपि न भोगानुपपत्तिः, अत्र दृष्टान्तः सन्ध्यवदिति, तत्र शरीरावस्थानं मनोवस्थानाय न भोगाय शरीरस्थितेरन्यथासिद्धत्वादिति तन्वभाव इत्यस्यार्थमाहुः, तत्र मनःसृष्टावीश्वरस्यैव तत्साम्यापन्नस्य मुक्तस्य मनोऽनपेक्षसङ्कल्पोपपत्तेः सङ्कल्पान्मनःसिद्धिरनुपपन्ना, स्वप्ने चेश्वरसृष्टदेहादिसद्भावस्य प्रामाणिकत्वान्मनोमात्रेण भोगोत्पत्तौ न स्वप्नो दृष्टान्तः स्यात् ।

अपरे तु स्वप्ने मानसभोगस्य भ्रान्तिकृतत्वाच्छरीरभोगस्य कर्मकृतत्वान्मुक्तस्य भ्रान्तिकर्मणोरभावात् भोगासम्भवं पूर्वपक्षीकृत्य 'मनसैतान्कामान्' 'स एकधा भवती'त्यादिश्रुतेः, स्वप्ने केवलमनसा भोगदर्शनाच्च भ्रान्तिकर्मणोरभावेऽपि भोगसम्भवं राद्धान्तयन्तः 'तन्वभावे' इत्यधिकरणान्तरमाहुः ; तत्र

* भावप्रकाशिका *

स्यादिति व्याख्यातम्, 'भावं जैमिनिर्विकल्पामननात्' इति सूत्रे···· शेषः 'द्वादशाहवदुभयविधं बादरायणोऽतः' इति सूत्रे अत इत्यस्य 'मनसैतान् कामान्' इति श्रुतेः 'स एकधा भवती'त्यादिश्रुतेश्चेत्यर्थ इति व्याख्यातम्, तस्याविरुद्धत्वात् तमंशमुपेक्ष्य निराकर्तव्यांशमाह ( सङ्कल्पादेवेत्यादिना ) ( न भोगानुपपत्तिरिति ) पुष्कलभोगस्यानुपपत्तावपि मनोरथमात्रसाध्यस्वाप्नभोगवत् सूक्ष्मभोगो भवत्येवेत्यर्थः । शरीरेन्द्रियसद्भावे जाग्रद्वत्पुष्कलभोगः, तदभावे

* श्रुतप्रकाशिका *

तादर्थ्यनैरन्तर्याभ्यामधिकरणान्तरत्वमयुक्तम् , ईश्वरसृष्टदेहलाभादेव मनसैव भोगेऽपि न दृष्टान्तः । अन्येऽप्यैकाधिकरण्यं वदन्तः— स्वप्ने मनसैव रूपरसाद्यनुभवो दृष्टान्तः, स्वप्नधीश्च न स्मृतिः किन्त्वनुभवः, दोषसचिवत्वात् भ्रान्तिः, मुक्तस्य तु योगसचिवत्वाद्यथार्थ इत्याहुः, तदपि पूर्वमेव दत्तोत्तरम् , अत ईश्वरसृष्टदेहवत्त्वे प्रामाणिके सति स्वप्नजागरौ दृष्टान्तौ केवलेश्वरप्रयत्नसृष्टत्वजीवव्यापारद्वारकेश्वरप्रयत्नसृष्टत्वाभिप्रायाविति युक्तं, तदुपन्यासश्च देहसृष्टौ जीवपरयोरभिप्रायाविरोधज्ञापनार्थ इति युक्तम् । 'प्रदीपवदावेशः' इत्यादिसूत्रद्वयमधिकरणान्तरमितरे त्रयोऽपि वर्णयन्ति , 'स एकधा भवति त्रिधा भवती'ति मुक्तसृष्टानि शरीराणि सालभञ्जिकावन्निरात्मकानि निर्मनस्कानि, आत्मनो मनसश्च भेदानुपपत्तेरिति पूर्वपक्षं कृत्वा मनस एकत्वेऽपि एकमनोनुवर्तीनि समनस्कान्यपराणि सत्यसङ्कल्पत्वात्सृष्ट्वा उपाधिभेदेन भिन्नः सन्नात्मा तान्युपाधिभूतान्यधितिष्ठति, 'तत्केन कं विजानीया'दित्यादिभिर्मुक्तस्य द्वितीयदर्शनाभावादनेकशरीराधिष्ठानलक्षणैश्वर्यानुपपत्तिपरिहारपरं 'स्वाप्ययसम्पत्त्यो'रिति सूत्रम् । सुषुप्तौ कैवल्ये च द्वितीयदर्शनाभावः, तदधिकारवशात्तदाविष्कृतं हि, सगुणविद्याविपाकः स्वर्गादिवदस्थान्तर-

* भावप्रकाशिका *

सूक्ष्मभोग इति तैर्वर्णितत्वादिति भावः । ( शरीरस्थितेरन्यथासिद्धत्वादिति ) शरीरस्थितिमन्तरेणापि मनस्सिद्धिमात्रेण भोगस्य सिद्धत्वादित्यर्थः ( केवलेश्वरप्रयत्नसृष्टत्वेति ) यद्यपि जाग्रत्स्वप्नावस्थयोः द्वयोरपि स्वसृष्टभोगोपकरणसदसद्भावयोः सिद्धान्तेप्यविशेषात् 'तन्वभावे सन्ध्यवत्' 'भावे जाग्रद्वत्' इति व्यवस्थया निर्देशे किं बीजं, 'तन्वभावे' इत्यस्य स्वसृष्टतन्वभाव इत्यर्थकल्पनञ्च क्लिष्टमित्यपि परैस्सुवचम्, तथापि उक्तदूषणे तात्पर्यम् ( अभिप्रायाविरोधज्ञापनार्थ इति ) ननु मुक्तस्य ब्रह्मानुभवे अन्यानपेक्षत्वेऽपि ब्रह्मानुभवान्योपकरणैरीश्वरसृष्टैर्भोगान् भुंक्त इति 'तन्वभावे' इति सूत्रे प्रतिपादनात् विरुद्धाभिप्रायत्वस्यैवाविष्करणात् कथमविरोध इति चेन्न, औदासीन्यदशायामपि भगवान् मुक्तान् भोगं प्रापयतीत्युक्त्या विरुद्धाभिप्रायत्वानापत्तेरिति भावः, ( तदधिकारवशात्तदाविष्कृतं हीति ) यत्र द्वितीयदर्शनाभावः प्रति-

* श्रुतप्रकाशिका *

मिति तत्रैश्वर्योपपत्तिरिति परे व्याचक्षते, तत्र तादर्थ्यनैरन्तर्याभ्याम-धिकरणभेदानुपपत्तिः, मनःसृष्टावीश्वरस्येव मनोनपेक्षसङ्कल्पोपपत्तेः, आत्मभेद-स्यान्तःकरणोपाधिकत्वाभावाच्चैकमनोमूलत्वनिर्बन्धोऽत्यन्तानुपपन्नः, सगुणवि-द्याया एव परविद्यात्वात् साक्षान्मोक्षस्यैव परविद्याफलत्वाद्विज्ञानप्रतिषेधस्य स्वाप्ययकैवल्यविषयत्वमैश्वर्यस्य सगुणविद्याविपाकत्ववचनं चानुपपन्नम् ।—अपरे तु सुषुप्त्युत्क्रान्तिविषयो विज्ञानप्रतिषेध इति वदन्ति, तत्पक्षेऽपि विरुद्धांशः प्रागेव प्रत्युक्तः, आत्मभेदस्य निरुपाधिकत्वात् ।—अन्ये तु अणोरनेकशरीर-वृत्त्ययोगान्महत्त्वेऽपि भृत्यादिशरीरवृत्तेरपुरुषार्थत्वान्मुक्तानां मुक्तान्तरानुपसर्ज-नत्वादमुक्तानां मोक्षस्थानारोहणायोगाच्च जीवान्तरावेशायोगान्मुक्तसृष्टशरीरा-णि निरात्मकानीति पूर्वपक्षं कृत्वा विभागशक्तियोगान्मुक्तादणुपरिमाणा-दात्मसहस्रोत्पत्तेः 'आत्मनां तु सहस्राणि बहूनि भरतर्षभ । योगी कुर्या-द्बलं प्राप्य तैश्च सर्वैर्महीं चरेत्' इति स्मृत्या सङ्कोचविभागादिशक्तेर्दर्शित-त्वात् स्वेषु शरीरेष्वहङ्कारकरणात् स्त्र्यादिशरीरेष्वहङ्कारकरणाकरणयोर्विरोधा-भावात् भृत्यादिशरीरेषु चैतन्यप्रभासंसर्गेणाहङ्काराकरणात्तथा कूटस्थपुरुषस्य जीवसमष्टेर्व्यष्टिजीवत्वेनानुपयुक्तादंशाद्विभज्य तत्तच्छरीरेष्वात्मप्रवेशनोपपत्तेश्च सात्मकानीति सिद्धान्तयन्ति, तत्र मुक्तानां परस्परगुणभावाभावेऽपीश्वरानुस-ञ्चरणाय संसारमण्डले पित्रादिसङ्कल्पनं भवतीत्यमुक्तानां मोक्षस्थानारोह-णानुपपत्तिर्न वक्तव्या, अत एव भृत्यादिशरीरेष्वनुप्रवेशस्यापुरुषार्थत्वादिति न वक्तव्यम्, अविभक्तनामरूपजीवसमूहव्यतिरेकेण कूटस्थपुरुषो नाम न कश्चित्प्रामाणिकः, जीवसमूहविषयतया वचनोपपत्तेः । यस्त्वेकस्माज्जीवादात्म-

❀ भावप्रकाशिका ❀

पाद्यते, 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' 'यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति' इत्यादौ तत्र सर्वत्र सुषुप्तिं वा कैवल्यं वा अधिकृत्यैव प्रवृत्तेः तद्विषयत्वमेव द्वितीयदर्शनाभावस्येति भावः । नन्विदं त्रिधाभवनादिकं न कैवल्यविषयमित्यत आह ( सगुणविद्याविपाक इति ) ( अन्ये त्वित्यादि ) ( भृत्यादिशरीरवृत्तेरपुरुषार्थत्वादिति ) मुक्तिदशायां स्वभोगोपकरणत्वेन सृष्टभृत्यादिशरीरवृत्तेरित्यर्थः, ( ईश्वरानुसञ्चरणायेति )

## जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥

६ अधिकरणम्

किं मुक्तस्यैश्वर्यं जगत्सृष्ट्यादि परमपुरुषासाधारणं सर्वेश्वरत्वमपि ? उत तद्रहितं केवलपरमपुरुषानुभवविषयम् ? इति संशयः। किं युक्तं

* श्रुतप्रकाशिका *

सहस्रसङ्कल्पनं विभागशक्तिमत्त्वादिति, तत्पूर्वमेव निरस्तम्। आत्मनां तु सहस्राणी'त्यत्रात्मशब्दो देहवचन इति न तद्वचनं विभागशक्तौ प्रमाणं, स्त्र्यादिशरीरेष्वहङ्कारकरणाकरणे भृत्यादिशरीरेषु चैतन्यप्रभासंसर्गेणाहङ्कारं न करोतीति विभागकल्पना च निर्मूला। भृत्यादिभावस्यानिष्टत्वात्स्वयमेवाहङ्कारकरणाभावश्चेत्, शरीरसम्बन्धस्यैव दुःखहेतुत्वदर्शनात् शरीरसृष्टिरपि न स्यात्, स्वेच्छायत्ततया शरीरस्य दुःखहेतुत्वं चेत् भृत्यादिभावेनाधिष्ठेयत्वेऽपि तुल्यम् ॥ १६ ॥

अभावाधिकरणं समाप्तम्।



जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥ सत्यसङ्कल्पताविचाररूपत्वात्सङ्गतिरर्थसिद्धा। ( जगत्सृष्ट्यादि सर्वेश्वरत्वम् ) सर्वेश्वरत्वप्रकारो हि सृष्ट्यादिः, (परमपुरुषानुभवविषयम्) तदनुभवान्तर्गतशरीरसर्गादिविषयं, किं मुक्तस्य जगद्व्यापारविषयमैश्वर्यमस्ति ? नेति, परमसाम्यसत्यसङ्कल्पत्वश्रवणं किं

७ भावप्रकाशिका ७

'कामान्नीकामरूप्यनुसञ्चरन्' इति श्रुतिविहितेश्वरानुवर्तनायेत्यर्थः, भृत्यादिभावस्यानिष्टत्वात् स्वयमेवाहङ्कारकरणाभावश्चेदित्येकवाक्यम् ॥ ७ ॥

इति अभावाधिकरणम्।



भाष्ये– किं मुक्तस्यैश्वर्यमिति, ईश्वरस्य कर्म ऐश्वर्यम् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति कर्मणि ष्यञ्प्रत्ययः, राज्ञः कर्म राज्यं प्रजापरिपा-

जगदीश्वरत्वमपीति। कुतः? "निरञ्जनः परमं साम्यमुपैति" इति परमपुरुषेण परमसाम्यापत्तिश्रुतेः, सत्यसङ्कल्पत्वश्रुतेश्च । न हि परमसाम्यसत्यसङ्कल्पत्वे सर्वेश्वरासाधारणजगन्नियमेन विनोपपद्येते । अतः सत्यसङ्कल्पत्वपरमसाम्योपपत्तये समस्तजगन्नियमनरूपमपि मुक्तस्यैश्वर्यमिति ।

---

* श्रुतप्रकाशिका *

मुक्तैश्वर्यस्य जगद्व्यापारविषयत्वमवगमयितुं शक्नोति नेति, किं जगन्नियमनस्य मुक्तैश्वर्यान्तर्भावे 'यतो वा इमानी'त्यादिब्रह्मलक्षणवाक्यं विरुध्यते, नेति, किं मुक्तस्य सृष्टिप्रकरणासन्निधानेन जगद्व्यापारस्य ब्रह्मलक्षणत्वाश्रयणं न्याय्यम्? उत मुक्तस्य विकारलोकानुसञ्चरणश्रवणेन जगन्नियमनस्य ब्रह्मलक्षणत्वाश्रयणान्न न्याय्यम्, किं मुक्तस्य विकारलोकानुसञ्चरणं नियमनार्थम्? उत केवलभोगार्थम्, केवलभोगार्थत्वे किं मुक्तस्यापरिच्छिन्नानन्दत्वविरोधः स्यात्, उत? नेति, अत्र तदर्थो विचारस्त्रिविधः, किं विकारलोकानां भोगानित्यत्वेनानन्दानित्यता स्यात्, उत नेति, किं विकारलोकानां भोग्यत्वं विकारात्मकत्वात्, उत ब्रह्मविभूतित्वात्। किञ्च- किं मुक्तस्या—स्वातन्त्र्यमानन्दवैकल्यमापादयति? उत नेति, स्वातन्त्र्यं स्वातन्त्र्यरूपत्वादानन्दावहम्? उतात्माभिमानानुरूपत्वात् । किञ्च—अस्वतन्त्रस्यानावृत्तिः सम्भवति, नेति, किमनावृत्तिश्रुतिश्चातुर्मास्याक्षय्यफलत्वश्रुतिवच्चिराभिप्राया? उत मुख्यार्था, किं मुक्तात्मानावर्तनविषयः सङ्कल्प ईश्वरस्य न सम्भवति? उत सम्भवतीति, यदा न सम्भवति तदानावृत्तिश्रुतेश्चिराभिप्रायत्वेनावृत्तिसम्भवादानन्दः परिच्छिद्यते । स्वातन्त्र्यं स्वातन्त्र्यरूपत्वात्सुखरूपं चेत् तद्वैकल्यादानन्दवैकल्यं, विकारलोकानां विकारात्मकतया भोग्यत्वे तदनित्य-

* भावप्रकाशिका *

लनमितिवत्, ततश्चायमर्थः । किं मुक्तस्य ईश्वरसाम्यसाधर्म्यादिशब्दैः प्राप्तं यदीश्वरकृत्यं तत्परमपुरुषासाधारणं जगत्सृष्टिस्थितिसंहाररूपं सर्वेशनमपि भवति,

**एवं प्राप्ते प्रचक्ष्महे—जगद्व्यापारवर्जम्—इति । जगद्व्यापारः— निखिलचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदनियम-**

---

* श्रुतप्रकाशिका *

त्वादानन्दानित्यत्वम्, अतः केवलभोगार्थत्वाभावेन विकारालोकानुसञ्चरणस्य नियमार्थत्वाज्जगद्व्यापारस्य ब्रह्मलक्षणत्वाश्रयणमन्याय्यमिति तस्य लक्षणत्वाभावेन तदविरोधात्परमसाम्यादिश्रवणस्य मुक्तैश्वर्ये जगद्व्यापारान्तर्भावावगमकत्वाज्जगद्व्यापारविषयमैश्वर्यं मुक्तस्य सम्भवेत्, यदा मुक्तानावर्तननिषयः सङ्कल्प ईश्वरस्य न सम्भवति, तदाऽनावृत्तिश्रुतेर्मुख्यत्वेनानावृत्तिसम्भवान्नानन्दानित्यत्वं, यदा च स्वातन्त्र्यमात्माभिमानानुरूप्यात् सुखरूपं, तदा मुक्तेषु स्वात्माभिमानाननुरूपत्वात् स्वातन्त्र्यस्य तद्वैकल्यान्नानन्दवैकल्यं, यदा च विकारलोकानां मुक्तभोग्यत्वं ब्रह्मविभूतितया, तदा विकाररूपस्यानित्यत्वेऽपि सर्वावस्थासु जगतो ब्रह्मविभूतित्वस्यानपायित्वेन नानन्दविच्छेदः । एवं विकारलोकानुसञ्चरणस्य नियमनार्थत्वाभावेऽप्यपरिच्छिन्नानन्दत्वाविरोधात्केवलभोगार्थतया तदविरोधेन जगद्व्यापारस्य ब्रह्मलक्षणत्वाश्रयणस्य न्याय्यत्वात्परमसाम्यादिश्रवणस्य मुक्तैश्वर्ये जगन्नियमनान्तर्भावानवगमकत्वात् जगद्व्यापारवर्जमेव मुक्तैश्वर्यं स्यात् । यदि 'अनावृत्तिः शब्दा'दित्यधिकरणान्तरं तदाऽनावृत्त्यनुबन्धिनी विचारपरम्परा पृथगनुसन्धेया । तादर्थ्यसम्भवस्तु सङ्गतिमात्रोपयोगीति द्रष्टव्यः ।

पूर्वपक्षमुक्त्वा राद्धान्तमाह ( जगदिति ) ( निर्व्याजब्रह्मानुभवरूपं

* भावप्रकाशिका *

उत परमपुरुषानुभवान्तर्गतशरीरसर्गादिविषयमिति, जगत्सृष्ट्यादिसर्वेश्वरत्वं परमपुरुषानुभवविषयमिति त्रीण्यपि व्याख्येयपदानि आत्माभिमानानुरूपत्वात्, यः स्वं स्वरूपं स्वातन्त्र्ययोग्यमिति मन्यते, तस्य स्वातन्त्र्यं पुरुषार्थः, ( पूर्वपक्षमुक्त्वेति ) अयं भावः— नच 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतिविरोधात् साम्यं केनचिदेव रूपेणेति सङ्कोचनीयमिति वाच्यम्, साम्यश्रुतिविरोधात् तन्निषेधश्रुतिरेव संसारिषु ब्रह्मसाम्यनिषेधविषयेति सङ्कोचोपपत्तेः, अधिकारवाक्यावगतफलाविरोधेन 'को हि

नम्। तद्वर्ज्जं निरस्तनिखिलतिरोधानस्य निर्व्याजब्रह्मानुभवरूपं मुक्तस्यैश्वर्यम् । कुतः ? प्रकरणात्,

---

* श्रुतप्रकाशिका *

यथाऽवस्थितब्रह्मानुभवरूपमित्यर्थः । सृष्ट्यादेरपि नियमनविशेषरूपत्वाज्ज-

* भावप्रकाशिका *

तद्वेद यश्चामुष्मिन् लोकेऽस्ति' इत्यादेरिव स्वावयवत्वकल्पनौचित्याच्च, अपि च साक्षादेव उपास्यगुणप्राप्तिः फलमवगम्यते, यथाक्रतुरित्यादिश्रुतौ, नच परब्रह्मण ऐश्वर्यमात्रमुपास्यम् । नतु निरङ्कुशं सर्वजगदैश्वर्यम्, अतो मुक्तस्य स्वसङ्कल्पसृष्टकतिपयवस्त्वैश्वर्यसिद्धावपि तत्क्रतुन्याय उपपद्यत इति वाच्यं 'सर्वस्य वशी सर्वस्येशानः' 'कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः' इत्यादिश्रुतिषु निरङ्कुशसर्वैश्वर्यस्य उपास्यत्वावगमात्, किञ्च मुक्तस्य सर्वेषु लोकेषु कामसञ्चारः श्रूयते, न तस्य तत्तल्लोकगतफलभोगार्थत्वकल्पनं युक्तं, ब्रह्मानन्दमनुभवतोपि विषयान्तरलिप्सया सञ्चाराभ्युपगमे तस्य निरतिशयत्वभङ्गापत्तेः, अतो मुक्तस्य नियमनादिलीलार्थ एव लोकसञ्चारः, तस्मात् परमसाम्यतत्क्रतुन्यायसर्वलोकसञ्चारादिप्रतिपादनदर्शनात् मुक्तस्यापि परमेश्वरवत् सर्वजगत्स्रष्टृत्वादिकमङ्गीकर्तव्यम्, नच यद्गुणप्राप्तिर्यदधीना, तस्य गुणस्ततो न्यूनः इति नियमोऽस्ति, गुरोर्विद्यामधिगतवतां शिष्याणां तद्वदेव व्याख्यातृत्वप्रबन्धनिर्माणादिदर्शनात्, दृश्यन्ते च सामन्ताः पार्थिवैश्वर्याधीनैश्वर्यवन्तः पार्थिवेन स्पर्धमानाः तं विजयमाना अपि, तदिह निरतिशयैश्वर्यत्वात्परमात्मनोमा नाम भूवंस्तदधिकाः, तत्समानास्तु भविष्यन्त्येव, अतस्ते स्वतन्त्रास्सन्तः जगत्सर्गेऽपि प्रवर्तेरन्, नच सृष्ट्यादिप्रकरणेषु परमात्मन एव सृष्ट्यादिव्यापारो न मुक्तानामिति वाच्यम्, श्येनप्रकरणे श्येनवत् इषुनामकक्रतोरसन्निहितत्वेपि 'समानमितरच्छ्येनेन' इति साम्यवचनात् तदीयवैशेषिकाङ्गानामिषाविव मुक्तानां सर्वेश्वरसाम्यवचनात् तदीयसृष्ट्यादिव्यापाराणां तेषु सिध्युपपत्तेः । किञ्च गावामयनिकस्वरसाम—वैश्वदेव्यामिक्षा— द्यावापृथिव्यैककपालप्रकरणाम्नानानामपि प्रकरणान्तराम्नातस्वरसामवारुणैककपालमैत्रावारुण्यामिक्षाणां सादृश्यादिलिङ्गै-

निखिलजगन्नियमनं हि परं ब्रह्म प्रकृत्याम्नायते [1]"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" इति। यद्येतन्निखिलजगन्नियमनं मुक्तानामपि साधारणं स्यात्, ततश्चेदं जगदीश्वरत्वरूपं ब्रह्मलक्षणं न सङ्गच्छते। असाधारणस्य हि लक्षणत्वम्। तथा [2]"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" [3]"ब्रह्म वा

---

ॐ भावप्रकाशिका ॐ

बलात् तदीयधर्मान्तरप्राप्तिवत्सर्वलोकादिसञ्चारादिलिङ्गबलान्मुक्तानामपि ऐश्वर्यजगद्व्यापारप्राप्त्युपपत्तेरिति, जगद्व्यापारवर्जमिति 'द्वितीयायाञ्च' इति णमुल् तत्र परीप्सायामित्येतत् प्रायिकमित्युक्तम्—'अनुदात्तं पदमेकवर्ज्यम्' इत्यत्र वृत्तिव्याख्यातृभिः। यद्वा जगद्व्यापारं वर्जयतीति जगद्व्यापारवर्ज्जम्, कर्मण्यण् ऐश्वर्यमिति विशेष्यम्, अत एवोत्तरत्र जगद्व्यापारवर्ज्जत्वप्रसङ्ग इत्यादिनिर्देश उपपन्नः, णमुलन्तत्वे तु न भावप्रत्ययः स्यात्, रूपञ्चान्यथा स्यात्, भाष्ये मुक्तस्यैश्वर्यमिति, भवितुमर्हतीति शेषः। अतश्च धातुसम्बन्धविहितस्य णमुलो नानुपपत्तिः णमुलन्तत्वपक्षे इति द्रष्टव्यम्, भाष्ये— ततश्चेदं जगदीश्वरत्वरूपमिति, नन्वनाद्यन्तकल्पानुवृत्तसर्वप्रपञ्चजन्मादिकारणत्वं ब्रह्मलक्षणम्, मुक्तानान्तु स्वमुक्तिप्राचीनकालवर्तिप्रपञ्चकर्तृत्वाभावात् न लक्षणत्वविरोधः इति चेन्न, जगत्सृष्ट्यादिषु वर्तमानानां मुक्तानामैकमत्यनियमाभावात् कस्यचित्सिसृक्षायामन्यस्य सञ्जिहीर्षापि कदाचिद्भवेदिति किमपि कार्यं न निर्वर्तेत, नच सर्वेपि परमात्माधीना एव जगत्सर्गादौ प्रवर्तन्त इति ऐकमत्यमुपपद्यत इति वाच्यं, तर्हि तदधीनत्वेन तत्साम्याभावेन साम्यश्रुतेः सङ्कोचनीयत्वावश्यम्भावात् 'भोगमात्रसाम्यलिङ्गाच्च' इति वक्ष्यमाणसूत्रन्यायेन भोगमात्रसाम्यमादायापि तुला-

---

१. तै० भृगु० १ अनु० ॥ २. छा० ६-२-१ ॥ ३. बृ० ३-४-११ ॥

इदमेकमेवाग्र आसीत्तदेकं सन्नव्यभवत् तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवक्षत्राणि इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति" [1]"आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किञ्चन मिषत् स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजत" [2]"एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो न सूर्य्यः स एकाकी न रमेत तस्य ध्यानान्तःस्थस्यैका कन्या दशेन्द्रियाणि" इत्यादिषु । [3]"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः" इत्यारभ्य [4]"य आत्मनि तिष्ठन्" इत्यादिषु च निखिलजगन्नियमनं

* श्रुतप्रकाशिका *

गद्व्यापारशब्दोक्तिः, कन्या–मनःप्रकाशकत्वात्, कन दीप्ताविति धातुः ॥ १७ ॥

छ भावप्रकाशिका छ

धृतयोस्सुवर्णशिलाशकलयोर्गुरुत्वसाम्येनाप्यत्यन्तसाम्यव्यवहारवत् साम्यव्यवहारस्य जगत्कारणत्वमन्तरेणाप्युपपत्तेः न मुक्तस्य जगद्व्यापारप्रवृत्तिरिति भावः, नच तत्क्रतुन्यायविरोधश्शङ्कनीयः, कारणत्वविशिष्टस्य ब्रह्मणः प्राप्यत्वाङ्गीकारेण विरोधाभावात्, भाष्ये–तदेकं सन्नव्यभवदिति, तत–ब्रह्म, एकं–क्षत्रादिपरिपालयितृत्वादिशून्यं, सन्नव्यभवत्–विभववन्नाभूत्, कर्मणे न पर्याप्तमासीदिति यावत्, श्रेयोरूपं–प्रशस्तं रूपं, अत्यसृजत्–अतिशयेन असृजत् देवत्रा–देवेष्वित्यर्थः, क्षत्राणि–क्षत्रियाणीत्यर्थः, कानि पुनस्तानि क्षत्रियाणीत्यत्राह ( इन्द्रो वरुण इत्यादि ) ( कन दीप्ताविति धातुरिति ) 'कनः दीप्तिकान्तिगतिषु' इत्यस्माद्धौवादिकात् ण्यत्प्राप्तः 'कन्यायाः कनीन च' इति निर्देशान्न भवति, अपि तु यदेव भवति ॥ छ ॥

१. ऐत, १–१ ॥ २. महो० १-अ० १ ॥ ३. बृ० ५-७-३ ॥ ४. शतपथ० १४-५-३० ॥

परमपुरुषं प्रकृत्यैव श्रूयते । असन्निहितत्वाच्च— न चैतेषु निखिलजगन्नियमनप्रसङ्गेषु मुक्तस्य सन्निधानमस्ति, येन जगद्व्यापारस्तस्यापि स्यात् ॥ १७ ॥

प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥

[1]"स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति" [2]"स इमांल्लोकान्कामान्नीकामरूप्यनुसञ्चरन्" इति प्रत्यक्षेण श्रुत्या मुक्तस्य जगद्व्यापार उपदिश्यते । अतो न जगद्व्यापारवर्जमिति चेत्–तन्न, आधिकारिकमण्डलस्थोक्तेः, आधिकारिकाः–अधिकारेषु नियुक्ता हिरण्यगर्भादयः, मण्डलानि–तेषां लोकाः; तत्स्थाः–भोगा मुक्तस्याकर्मवश्यस्य भवन्तीत्ययमर्थः "तस्य सर्वेषु लोकेषु कामचारो भवति" इत्यादिनोच्यते, अकर्मप्रतिहतज्ञानो मुक्तो विकारलोकान् ब्रह्मविभूतिभूताननुभूय यथाकामं तृप्यती-

* श्रुतप्रकाशिका *

प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥ कामान्नित्वकामरूपित्वसर्वलोकसञ्चारश्रवणाज्जगतस्तदधीनत्वं सिद्धमिति मुक्तस्येश्वरत्वमपि स्यादिति पूर्वपक्षोत्थानं, प्रत्यक्षेणेति व्याख्येयस्य व्यासेनोपादानम्, तद्व्याचष्टे (श्रुत्येति) विकारलोकान्–कार्यभूतलोकान्, विकारशब्दो धर्मिपरः, हेयातीतस्य मुक्तस्य हेयास्पदविकारलोकभोगापेक्षा कथमित्यत्राह (अकर्मेति) भगवद्विभूतित्वेनात्यन्तभोग्यता स्यादित्यर्थः । एवं कामान्नीत्यादिश्रुतिवाक्यं व्याख्यातम्, उक्तश्रुतिवाक्यार्थप्रतिपादकस्य सूत्रस्यार्थं

१. छा० ७-२५-२ ॥ २ तै० भृ० १० ५ ॥

त्यर्थः । तदेवं विकारान्तर्वर्त्तिन आधिकारिकमण्डलस्थान्सर्वान् भोगान् ब्रह्मविभूतिभूताननुभवतीत्यनेन वाक्येनोच्यते; न जगद्व्यापारः ॥ १८ ॥

यदि संसारिवन्मुक्तोऽपि विकारान्तर्वर्त्तिनो भोगान् भुङ्क्ते; तर्हि बद्धस्येव मुक्तस्यापि अन्तवदेव भोग्यजातमल्पं च स्यात्तत्राह—

विकारावर्त्ति च तथा हि
स्थितिमाह ॥ १९ ॥

विकारे जन्मादिके न वर्त्तते इति विकारावर्त्ति, निर्धूतनिखिलविकारं निखिलहेयप्रत्यनीककल्याणैकतानं निरतिशयानन्दं परं ब्रह्म सविभूतिकं सकलकल्याणगुणमनुभवति मुक्तः । तद्विभूत्यन्तर्गतत्वेन विकारवर्त्तिनां लोकानामपि मुक्तभोग्यत्वं, तथा हि परस्मिन् ब्रह्मणि निर्विकारेऽनवधिकातिशयानन्दे मुक्तस्यानुभवितृत्वेन स्थितिमाह श्रुतिः [1]"यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति" [1]"रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्यादिका । तद्वि-

* श्रुतप्रकाशिका *

निगमयति ( तदेवमिति ) ॥ १८ ॥

उत्तरसूत्रशङ्कामाह ( यदीति ) ।

विकारावर्त्ति च तथा हि स्थितिमाह ॥ १९ ॥ मुक्तस्य सविभूतिक-

१. तै० आन० ७-२-१ १. ॥

भूतिभूतं जगत्तत्रैव वर्तते [1]"तस्मिल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इति श्रुतेः । अतः सविभूतिकं ब्रह्मानुभवन् विकारान्तर्वर्तिन आधिकारिकमण्डलस्थानपि भोगान् भुङ्क्ते इति 'सर्वेषु लोकेषु कामचारः' इत्यादिनोच्यते; न मुक्तस्य जगद्व्यापारः ॥ १९ ॥

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

अस्य प्रत्यगात्मनो मुक्तस्य नियाम्यभूतस्य नियन्तृभूतपरमपुरुषासाधारणं जगद्व्यापाररूपं नियमनं न सम्भवतीत्युक्तम् । निखिलजगन्नियमनरूपो व्या-

---

* श्रुतप्रकाशिका *

ब्रह्मानुभवितृत्वेन स्थितिवचनात्सर्वत्र कामचारादयो भवन्ति, न नियन्तृत्वादिकमित्यर्थः ॥ १९ ॥

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥ ( ब्रह्मणो हि प्रतिष्ठाहमिति )

छ भावप्रकाशिका छ

( सर्वत्र कामचारादयो भवन्तीति ) हर्षोद्रेकात्, 'एतत्सामगायन्नास्ते हाउ हाउ हाउ' इत्यादि श्रुतिप्रतिपन्नसामगानवत् हर्षोद्रेकाद्यथेष्टं सञ्चरत इत्यर्थः, तथाच 'उपस्थितेऽतस्तद्वचनात्' इत्यत्र ब्रह्मोपसम्पत्तिः कामचारे हेतूकृता, अत एव निवृत्ततिरोधानस्य मुक्तस्य परमव्योमनिलयस्यैव सर्वविभूतियुक्तब्रह्मानुभवसम्भवात् सञ्चरणं वृथेति शङ्कापि पराकृता, हर्षोद्रेकप्रयुक्तचेष्टायाः प्रयोजनोद्देशप्रवृत्तत्वाभावात् लब्धसविभूतिकब्रह्मानुभवस्यापि चक्षुरादीन्द्रियजन्यसाक्षात्कारादिलिप्सया शरीरान्तरपरिग्रहयथेष्टसञ्चाराद्युपपत्तेः, अत्र विकारावर्तीति ब्रह्म निर्दिशतस्सूत्रकृतोऽयम्भावः, अपक्षयविनाशशून्यब्रह्मानुभवरूपस्यानन्दस्य न वृद्धिह्रासौ, सततैकरूपत्वात्, ईदृशं ब्रह्मानुभवतो मुक्तस्य नाऽवाप्तव्य आनन्दोऽन्योऽस्ति, येन ब्रह्मानुभवस्य आधिकारिकमण्डलस्थभोगापेक्षया न्यूनता कल्प्येतेति ॥ छ ॥

---

१. कठ० २-५-८ ॥

पारः परमपुरुषासाधारण इति दर्शयतः श्रुति-स्मृती– [1]"भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" इति [2]"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादि । तथा [3]"एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" इति च श्रुतिः । स्मृतिरपि [4]"मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् । हेतुनाऽनेन कौन्तेय जगद्धि परिवर्त्तते" इति, [5]"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जग"दिति च । तथा मुक्तस्य सत्यसङ्कल्पत्वादिपूर्वकस्याप्यानन्दस्य परमपुरुष एव हेतुरिति श्रुतिस्मृती दर्शयतः– [6]"एष ह्येवानन्दयाति" [7]"मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते । ब्रह्मणोऽहि प्रतिष्ठाहममृतस्याव्ययस्य च । शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च" इति । यद्यप्यपहतपाप्मत्वादिः सत्यसङ्कल्पत्वपर्यन्तो गुणगणः प्रत्यगात्मनः स्वाभाविक एवाविर्भूतः । तथा-

---

* श्रुतप्रकाशिका *

ब्रह्म—जीवः, अमृतं—मोक्षः, शाश्वतधर्मः— ज्ञानं, सुखम्—आनन्दः, अन्याधीनत्वनित्यत्वयोर्विशेषमाशङ्क्य परिहरति (यद्यपीत्यादिना) तस्य—अपहतपाप्मत्वादिगुणस्य, तथाविधत्वं— स्वाभाविकत्वं, तस्य— प्रत्यगात्मस्वरूपस्य नित्य-

---

१. तै० आन० ८-१ ॥ २. बृ० ५-८-९ ३. बृ० ६-४-२२ ॥ ४. गी० ९-१० ॥ ५. गी० १०-४२ ॥ ६. तै० आन० ७-२१ ॥ ७. गी० १४-२६-२७ ॥

ऽपि तस्य तथाविधत्वमेव परमपुरुषायत्तं, तस्य नित्यस्थितिश्च तदायत्ता, परमपुरुषस्यैतन्नित्यतायां नित्येष्टत्वान्नित्यतया वर्तत इति न कश्चिद्विरोधः। एवमेव परमपुरुषभोगोपकरणस्य लीलोपकरणस्य च नित्यतया शास्त्रावगतस्य परमपुरुषस्य नित्येष्टत्वादेव तथाऽवस्थानमस्तीति शास्त्रादवगम्यते। अतो मुक्तस्य सत्यसङ्कल्पत्वं परमपुरुषसाम्यञ्च जगद्व्यापारवर्ज्जम् ॥ २० ॥

भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

ब्रह्मयाथात्म्यानुभवरूपभोगमात्रेण मुक्तस्य ब्रह्मसाम्यप्रतिपादनाच्च लिङ्गात् जगद्व्यापारवर्ज्जमित्य-

* श्रुतप्रकाशिका *

स्थितिस्तदायत्तेत्यर्थः,। तदुपपादयति ( परमपुरुषस्येति ) मुक्तस्वरूपतद्गुणनित्यत्वं परसङ्कल्पायत्तमित्युक्तम्, अन्यदपि नित्यं वस्तु तदधीनस्थित्यादिकमित्याह ( एवमिति ) मुक्तस्य नियन्तृत्वाभावान्नानन्दवैकल्यं, प्रत्युत तत्पौष्कल्यमेव, सर्वेषां हि स्वात्माभिमानानुगुणा भोग्यव्यवस्था तद्विपर्ययव्यवस्था च, तथा पुरुषपश्वादिषु दृश्यते, तस्मादात्मन आविर्भूतयथावस्थितस्वरूपस्य शेषत्वमेव स्वाभाविकं रूपमपरोक्षयतः स्वशेषिपरमपुरुषपरिचरणमेव प्रियतमं स्यात्तद्विपर्ययेणेशितृत्वमत्यन्तानिष्टमेव, तस्मान्नानन्दवैकल्यम्, अपि तु तत्पौष्कल्यमेव ॥ २० ॥

भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥ ( ब्रह्मेत्यादि ) 'स एवंवित्सर्वेषां

* भावप्रकाशिका *

ननु 'सह ब्रह्मणा विपश्चिता'इत्यस्य भोग्यसाहित्यपरत्वेन भोगसाम्ये प्रमाणीकरणासम्भवात् इत्याशङ्क्य भोगसाम्यरूपसायुज्यप्रतिपादकश्रुतिवाक्यान्युदाहरति ( स एवंविदित्यादि ) 'पृथिव्यै चैनमग्नेश्च देवी वागाविशति

वगम्यते [१]"सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" इति। अतो मुक्तस्य परमपुरुषसाम्यं सत्यसङ्कल्पत्वं च परमपुरुषासाधारणनिखिलजगन्नियमनश्रुत्यानुगुण्येन वर्णनीयमिति जगद्व्यापारवर्जमेव मुक्तैश्वर्यम् ॥ २१

* श्रुतप्रकाशिका *

भूतानां मतो भवति यथैषा देवतैवं न यथैतां देवतां सर्वाणि भूतान्यवन्ति न ह्येवमेवंविदं सर्वाणि भूतान्यवन्ति तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयती'त्यादिवाक्यान्यप्यभिप्रेतानि 'ह्यागो वा मन्त्रवर्णा' दिति न्यायात्सामान्येनावगतं साम्यं भोगसाम्ये दृष्टे तादृशसाम्यविशेषे पर्यवस्यतीति भावः । परमात्मनियाम्यत्वादिश्रुत्यानुगुण्याच्चायमर्थ इति वदन्नधिकरणार्थमुपसंहरति ( अत इति )

ॐ भावप्रकाशिका ॐ

सा वै देवी वाग्यया यद्यदेव वदति तत्तद्भवति दिवश्चैनमादित्याच्च दैवं मन आविशति तद्वै दैवं मनो येन आनन्द्येव भवति अथ न शोचति अद्भ्यश्चैनं चन्द्रमसो दैवः प्राण आविशति स वै दैवः प्राणो यस्सञ्चरंश्चासञ्चरंश्च न व्यथते न रिष्यति' इति प्राक्प्रस्तुतदैववाङ्मनःप्राणविज्ञानस्य फलमुच्यते । 'स एवंवित् सर्वेषामात्मा भवति यथैषा दैवतैवं स यथैता देवतास्सर्वाणि भूतानि भवन्ति एवं हैवंविदं सर्वाणि भूतान्यवन्ति' इति, आत्मा भवति– आत्मवत्पूज्यो भवति, अवन्ति–पालयन्ति तर्पयन्ति, 'तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' इति, तेन– यथोक्तज्ञानेन एतस्या देवतायाः सायुज्यं सलोकताञ्च प्राप्नोतीत्यर्थः । यद्यप्युदाहृतवाक्यानां न ब्रह्मविद्विषयत्वं तथापि तुल्यन्यायतया ब्रह्मविद्विषयेऽपि भोगसाम्ये लिङ्गतया पर्यवस्यतीति भावः ॥ ॐ ॥

१. तै० आन० १–२ ॥

यदि परमपुरुषायत्तं मुक्तैश्वर्यम्, तर्हि तस्य स्वतन्त्रत्वेन तत्सङ्कल्पान्मुक्तस्य पुनरावृत्तिसम्भवाशङ्केत्यत्राह—

अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥ २२ ॥

यथा निखिलहेयप्रत्यनीककल्याणैकतानो जगज्जन्मादिकारणं समस्तवस्तुविलक्षणः सर्वज्ञः सत्यसङ्कल्पः आश्रितवात्सल्यैकजलधिः परमकारुणिको निरस्तसमाभ्यधिकसम्भावनः परब्रह्माभिधानः— परमपुरुषोऽस्तीति शब्दादवगम्यते, एवमहरहरनुष्ठीयमानवर्णाश्रमधर्मानुगृहीततदुपासनरूपतत्समाराधनप्रीतः उपासीनाननादिकालप्रवृत्तानन्तदुस्तरकर्मसञ्चयरूपाविद्यां विनिवर्त्य स्वयाथात्म्यानुभवरूपानवधिकातिशयानन्दं प्रापय्य पुनर्नावर्तयतीत्यपि शब्दादेवावगम्यते । शब्दश्च [1]"स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते न च पुनरावर्तते"

---

* श्रुतप्रकाशिका *

अनन्तरसूत्रं शङ्कामुखेनावतारयति (यदीति) अपुनरावृत्तिश्रुतिः पाक्षिकविषया, ईश्वरस्वातन्त्र्यात्कस्यचिदनावृत्तिसम्भवादिति च पूर्वपक्ष्यभिप्रायः ।

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥ (यथेत्यादि) भगवता मुक्तस्यापरित्याज्यत्वोपपादनार्थं मुक्तस्य ब्रह्मानुभवजिहासानुदयज्ञापनार्थं प्रामाणिकत्वे दृष्टान्तसिद्ध्यर्थं च निखिलहेयप्रत्यनीकत्वादिगुणा उक्ताः, अन्येन निवृत्तिशङ्काव्यावृत्त्यर्थं 'निरस्तसमाभ्यधिकसम्भावनः' इति पदम्, 'स यदि

---

1. छा० ८-१५-१ ॥

इत्यादिकः । तथा च भगवता स्वयमेवोक्तम् [1]"मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति । न चोच्छिन्नकर्मबन्धस्यासङ्कुचितज्ञानस्य परब्रह्मानुभवैकस्वभावस्य तदेकप्रियस्यानवधिकातिशयानन्दं ब्रह्मानुभवतोऽन्यापेक्षातदर्था-

* श्रुतप्रकाशिका *

पितृलोककामः' इत्याद्युक्तभगवत्परिचरणार्थविग्रहव्यावृत्त्यर्थं 'पुनर्जन्म दुःखालयमशाश्वत'मिति वचनमुपात्तम्, दुःखालयत्वादिविशेषणाभावेऽप्येतदैकार्थ्यं स्यादित्यभिप्रायेण 'पुनर्जन्म न विद्यते' इति वचनमुदाहृतम् । अनेनावृत्तिः कर्मकृता न भवति 'इमान्लोकानित्युक्तकामसञ्चारादिति च फलितं । पुनरावृत्तिहेतुत्वेन सम्भावितानि शिरांस्याशङ्क्य परिहरति ( न चेत्यादिना ) प्रमाणस्यानुग्राहकतर्ककृतार्थतां चार्थाद्दर्शयति, स्वेच्छा वा- कर्म वा-भगवत्सङ्कल्पो वा त्रयमेव पुनरावृत्तिहेतुतया सम्भावितं, तत्र स्वेच्छाकर्मभ्यामावृत्तिशङ्कां परिहरति ( न चेति ) ( तदर्थारम्भाद्यसम्भवादिति ) कर्म विद्यमानं चेत्सजातीयकर्मान्तरारम्भरुचिरूपां वासनामुपजनय्य तद्द्वारा कर्मान्तरं कारयति

* भावप्रकाशिका *

( एतदैकार्थ्यं स्यादित्यभिप्रायेणेति ) 'पुनर्जन्म न विद्यते' इत्यत्र ब्रह्मणि दुःखालयत्वादिविशिष्टजन्मनिषेधे पर्यवस्यतीति भावः ( अनेनावृत्तिरिति ) जन्मसत्त्वेपि हेयास्पदजन्मनिषेध इत्यभ्युपगमन्यायेन पुनरावृत्तिसत्त्वेपि हेयास्पदावृत्तिर्नास्ति, अपि तु कामनिमित्त एव सञ्चार इति भावः, स्वेच्छा वा कर्म वा- इत्यस्यायम्भावः, मुक्तानां प्राक्तनपुण्यपापयोः विद्यामाहात्म्यान्नाशेपि मुक्तिकाले कृतभगवद्द्रोहादिपापवशेन नहुषादेः पदच्युतिवत् अस्यापि

१. गी० ८-१५-१६ ॥

रम्भाद्यसम्भवात् पुनरावृत्तिशङ्का । न च परम-पुरुषः सत्यसङ्कल्पोऽत्यर्थप्रियं ज्ञानिनं लब्ध्वा कदाचिदावर्तयिष्यति; य एवमाह– [1]"प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥ आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् । बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ॥ वासुदेवः सर्वमिति स महात्मा सुदुर्लभः" इति । सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयतीति सर्वं समञ्जसम् ॥

जगद्व्यापारवर्जाधिकरणं समाप्तम् ।



इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

चतुर्थस्याध्यायस्य चतुर्थः पादः ॥



* श्रुतप्रकाशिका *

कर्मणः सवासनस्य विनष्टत्वात् कर्मान्तरासम्भवात् न कर्म पुनरावृत्तिहेतुः, अनवधिकातिशयानन्दभगवदनुभवैकतानस्य नान्यापेक्षेति न स्वयं स्वस्य पुनरावृत्तिहेतुरित्यर्थः । भगवत्सङ्कल्पस्य पुनरावृत्तिहेतुत्वं परिहरति ( न चेति ) मुक्तान् पुनर्नावर्तयिष्यामीति सङ्कल्पो नान्यथा स्यादित्यभिप्रायेण सत्यसङ्कल्प इत्युक्तम्, ज्ञानिनोऽत्यर्थं प्रियत्वाच्च तथा सङ्कल्पः । अत्यर्थ-प्रियत्वे प्रमाणं दर्शयति ( य एवमाहेति ) एवं न चोच्छिन्नेत्यादिना अपुनरावृत्तिश्रुतेरनुग्राहकस्तर्क उक्तो भवति ।

१. गी० ७-१७, १८, १९, ॥

* श्रुतप्रकाशिका *

परे तु 'प्रत्यक्षोपदेशा'दित्यत्र 'आप्नोति स्वाराज्य'मित्युदाहृत्य सवितृमण्डलादिस्थानेषु भोगोक्तेर्न जगद्व्यापार इत्याहुः, स्वाराज्यशब्दस्य परमाकाशावस्थानेऽप्युपपत्तेस्तस्यानुपादानं, सर्वलोकक्रमणशङ्काबीजत्वादिमान् लोकानित्याद्युपादानमुचितं, तेन हि निरङ्कुशैश्वर्यं दर्शितं भवति, विकाररूपं विकारोत्तीर्णं च नित्यमुक्तं, परं ब्रह्म, द्विधा हि स्थितिमाह 'पादोऽस्य' इति 'न तत्र सूर्यो भाति' 'न तद्भासयते सूर्यः' इति प्रत्यक्षानुमाने च विकारावर्तित्वं दर्शयत इति व्याचक्षते, किमर्थं सूत्रद्वयमिति चेत्– विकारालम्बनानां निर्विकारपररूपप्राप्तिरनुपपन्ना अतत्क्रतुत्वादित्यभिप्राय इति चाहुः, इदमपि विकारालम्बना न प्राप्नुवन्तीत्यध्याहारसापेक्षत्वादनुपपन्नम्, अध्याहारेऽपि जगद्व्यापारवर्जनस्यानुपयोगि सूत्रद्वयं, परं नाप्नुवन्ति– सगुणेऽपि न निरवग्रहैश्वर्यमिति ज्ञापनार्थमिति चेत्– अतिदूराभिप्रायकल्पनमेव दोषः, 'तथा हि स्थितिमाह' इत्यत्रैव निर्विकारस्वरूपविषयश्रुतीनामपि विवक्षितत्वे पुनः प्रत्यक्षशब्देन परस्वरूपविषयश्रुत्युपादानवैयर्थ्यं च । ऐश्वर्यं चेदन्तवत् तस्मादावृत्तिरिति शङ्काव्युदासार्थम् 'अनावृत्तिः शब्दा'दिति सूत्रमिति, निर्गुणप्राप्तावावृत्तिशङ्काया अभावादित्याहुः, तदयुक्तम्, अकर्मकृतसहजैश्वर्ये ऐश्वर्यत्वादावृत्तिशङ्काया मन्दतरत्वात्, अतः पाराधीन्यकृताऽऽवृत्तिशङ्काव्युदासपरत्वमेव युक्तं सूत्रस्य, सगुणनिष्ठविषयत्वं चायुक्तं निर्गुणप्राप्तेरप्रामाणिकत्वात्

ॐ भावप्रकाशिका ॐ

पदच्युतिस्सम्भाव्यत इति ( सवितृमण्डलादिस्थानेषु भोगोक्तेरिति ) सवितृमण्डलादिगतपरमात्मोपासनायत्तैश्वर्यत्वात् इतरेषां न निरवग्रहं मुक्तानामैश्वर्यमित्यर्थः ( किमर्थं सूत्रद्वयमिति चेदिति ) सूत्रद्वयस्य कोऽभिप्राय इति चेदित्यर्थः, ( निर्विकारप्राप्तिरुपपन्नेति ) अयमर्थः– यथा सगुणब्रह्मोपासकानां सगुणे ब्रह्मणि वस्तुगत्या सदपि विकारावर्तित्वरूपं न प्राप्यम्, अतत्क्रतुत्वात्, एवं सगुणे ब्रह्मणि स्थितमपि निरवग्रहैश्वर्यं सगुणोपासकानां न प्राप्यम्, अतत्क्रतुत्वात्, सत्यकामत्वादिलक्षणैश्वर्यस्योपास्यत्वेपि निरवग्रहैश्वर्यविशिष्टं उपासीतेति श्रुत्यभावेन निरवग्रहत्वांशस्यानुपास्यतया तत्प्राप्त्यभावात् न निरवग्रहैश्वर्यं सगुणोपासकस्येति, ( निर्गुणप्राप्तावावृत्तिशङ्काया अभावादिति ) ततश्च

* श्रुतप्रकाशिका *

विशेषणवैयर्थ्यम्, निर्गुणप्राप्त्यभावादेवात्रावृत्तिशङ्काऽनुदयश्चानुपपन्नः ।– अपरे तु वेदान्त एव मुक्तस्य भेदेनावस्थानं मन्यमानानां मतमभ्युपगम्य तत्र सावधिकमैश्वर्यमिति प्रतिपादनार्थमिदमधिकरणमित्याहुः, तत्र परेषामिव सूत्रयोजना, अस्मिन् पक्षे विकारप्रलये तदाश्रितैश्वर्यप्रलयादावृत्तिः स्यादेव, अविभागपक्ष एवानावृत्तिरित्याह 'अनावृत्तिः शब्दा'दितीत्याहुः । तत्तावदयुक्तम् अप्रामाणिकपक्षस्य निरसनमेव हि कर्तव्यं, न तु तदभ्युपगमेन निर्वाहः, सावधिकैश्वर्यप्रतिपादनमेव तन्निरसनमिति चेन्न, प्रतीकालम्बनोपासनानां सावधिकैश्वर्ये कथितेऽपि तेषां निरस्तत्वाभावात्, अप्रामाणिकत्वसमर्थनं हि निरसनम् सावधिकैश्वर्यं प्रामाणिकं चेत्– कथं तस्य निरासः, अनावृत्तिसूत्रमविभागपक्ष एवेत्यशाब्दम् अविभागशब्दस्याप्रकृतत्वात्, अर्थस्वभावादविभागपक्षविषयत्वमिति चेन्न, अक्षरपरमव्योमगतानां मुक्तानामैश्वर्यप्रच्युत्यसम्भवादेवार्थस्वभावासिद्धेः, विकारलोकाश्रितमैश्वर्यं प्रध्वस्तमिति चेत् ततः किम्, ईश्वरस्येव तदानीमप्रच्युतगुणाष्टकत्वादपरिच्छिन्नानन्दत्वोपपत्तेः, न हि जगत्प्रलयादीश्वरस्यैश्वर्यभङ्गः, तथा तदवस्थतदनुभवरूपमैश्वर्यं मुक्तानामपि न भ्रश्येत, अतस्सूत्रासङ्गतिः । ननु विभागपक्षे सावधिकैश्वर्यप्रसङ्गो विवक्षितः, न तु तत्पक्षनिर्वाह इति चेन्न, जगद्व्यापारवर्जत्वप्रसङ्ग इति सूत्रितत्वाभावात्, यथा 'नित्योपलब्ध्यनुपलब्धिप्रसङ्गः' 'कृत्स्नप्रसक्ति'रिति च, तस्मात्सूत्रस्वारस्यविरोधः, 'विकारावर्ती'त्यादिसूत्रद्वयवैयर्थ्यातिदूरलक्षणादोषः पूर्ववत्, अविभागपक्षे वा कथं 'जक्षत् क्रीडन् रममाणः' 'सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ती'त्याद्यैश्वर्यमुपपद्यते, किमीश्वरव्यापारा एव तदभिन्नस्य मुक्तस्य क्रीडात्वेनोच्यन्ते ? उत व्यापारान्तराणि, प्रथमे बद्धस्यापि तदभिन्नत्वादीश्वरव्यापारा एव क्रीडाः किन्न स्युः, उपाधितो भिन्नत्वादिति चेत्, तर्हि ईश्वरस्यापि ते व्यापारा लीला न स्युस्तस्यापि सवितृमण्डलाद्युपाधिभिर्भिन्नत्वात्, भिन्नत्वेऽपि सर्वज्ञः स्वलीलात्वेन सर्वत्र प्रत्यभिसन्धत्त इति चेत्तर्हि बद्धव्यापारेष्वपि प्रत्यभिसन्धानात् दुःखित्वेन लीलात्वं तद्व्यापाराणां न स्यात्, एवं मुक्तानामपीश्वरादभिन्नत्वात् प्रत्यभिसन्धानाच्च दुःखितत्वमिति तेषामविभागपक्ष एवावृत्तिः । यदीश्वरव्यापारात् व्यापारान्तराणि मुक्तानां

* श्रुतप्रकाशिका *

लीला, तर्हि व्यापारान्तरत्वमाश्रयभेदात्स्यात्, अन्यथेश्वरव्यापारानतिरेकेण प्रागुक्तदोषप्रसङ्गात्, आश्रयभेदेन व्यापारान्तरत्वे मुक्तेश्वरविभागपक्ष एवाङ्गीकृतः स्यात्।—अन्ये तु वर्णयन्ति 'प्रकरणा'दिति 'य आत्मे'त्यादिमुक्तप्रकरणस्य भोगगोचरत्वान्न जगद्व्यापार इति 'असन्निहितत्वात्' सृष्टिप्रकरणेष्वसन्निहितत्वात्, परमाकाशस्थस्य मुक्तस्य विकारस्थानेष्वसन्निहितत्वादिति 'प्रत्यक्षोपदेशा'दिति 'आप्नोति स्वाराज्य'मित्युपदेशान्न निरवग्रहं मुक्तस्यैश्वर्यमिति चेत्, आधिकारिकपदावच्छेदकदेशविशेषेषु हिरण्यगर्भसायुज्यं गतस्य तदधीनभोगोक्तेः, न तु परमाकाशस्थस्येति विकारावर्तीति, 'परमे व्योमन्सोऽश्नुते' इति मुक्तैश्वर्यस्य परमाकाशस्थस्य विकारस्थानावर्तितया परमात्मन एव जगदनुप्रवेशादिरिति, 'दर्शयतश्चैव'मिति 'यत्पुराणमाकाशं तत्र मे स्थानं कुर्वतः पुनर्भवाय' इत्यादि श्रुतिः स्मृतिश्च परमाकाशस्थितिं दर्शयत इति, 'सोऽश्नुते' इति भोगमात्रसाम्यलिङ्गाच्च न जगद्व्यापारः, 'इमं मानवमावर्तं नावर्तन्ते' तेषु ब्रह्मलोकेषु परावतो वसन्ति तेषामिह न पुनरावृत्तिरिति इमंशब्देहशब्दविशेषितत्वाद्ब्रह्मलोकगतानामन्यस्मिन्मानव आवर्ते पुनरावृत्तिशङ्कां व्युदस्यति 'अनावृत्तिः शब्दा'दिति, इमंशब्देहशब्दौ सन्निहितत्वमात्रावलम्बनौ न तु व्यक्तिविशेषपरौ श्रुतेरनित्यार्थत्वप्रसङ्गात्, अतो नावर्तान्तरे पुनरावृत्तिः, मानव आवर्ते जन्माभावोऽनावृत्तिशब्देनोच्यते गमनमात्रं न प्रतिषिध्यते, अतस्सर्वेषु कामचारो भवतीत्यदोषः, ब्रह्मलोकगतानां मानवावर्तगमनं स्वदेशात् परदेशगमनवदुपपन्नं, तस्मान्न ब्रह्मलोकगतानामिह पुनर्जन्मेत्यनावृत्तिरुपपन्ना। तदेवं मुक्तैश्वर्यं निरवग्रहमिति, तत्र ब्रूमः— मुक्तप्रकरणे भोगप्रतिपादनस्य हेतुतयोक्तिर्विफला, तावता जगद्व्यापाराप्रतिषेधात् विकारस्थानेष्वसन्निधानादिति चायुक्तम्, अन्तिमसूत्रे मुक्तस्य स्वदेशात्परदेशगमनवत्सर्वलोकसञ्चरणस्याभ्युपगमादिमाँल्लोकानिति श्रुतत्वाच्च, आदित्येत्रज्ञस्य हिर-

ॐ भावप्रकाशिका ॐ

ण्यगुणप्राप्तिविषयमेवेति भावः (अन्ये त्वित्यादि) (वर्त्मान्तरे पुनरावृत्तिरिति) नचैवम् इतिशब्दवैयर्थ्यमिति शङ्कनीयम्, अनेकार्थास्पदत्वसूचनार्थत्वेन

* श्रुतप्रकाशिका *

ण्यगर्भस्योभयभावनान्वितस्य मुक्तप्राप्यत्वायोगान्मुक्तस्य तत्पारतन्त्र्यायोगाच्च द्वितीयसूत्रार्थोऽनुपपन्नः। विकारस्थाने सञ्चरणाभ्युपगमादेवानन्तरसूत्रद्वयार्थोऽनुपपन्नः, तथा हि स्थितिमाहेत्यस्य प्रत्यक्षानुमाने इति प्रत्यक्षशब्देन पुनरुक्तिश्च, श्रुत्यन्तरविषयः प्रत्यक्षशब्द इति चेन्न, एकार्थविषयानेकश्रुत्युपादानस्य सूत्रभेदसापेक्षत्वाभावात् तद्भावे च सूत्रान्तराणामपि करणप्रसङ्गाच्च। यदि तत्सूत्रद्वयं मुक्तैश्वर्यस्य परमाकाशस्थितिमात्रपरं तन्निरवग्रहैश्वर्यविरुद्धं, यदि तत्रैवावस्थानपरं तदा विकारस्थानसञ्चरणतदभ्युपगमविरोधः। अन्तिमसूत्रस्य चेहादिशब्दानां सन्निहितार्थमात्रपरतयाऽन्यस्मिन्नावर्ते पुनरावृत्तिशङ्काव्युदासपरत्वं चानुपपन्नं वैदिकशब्दानामनित्यव्यक्तिविशेषवाचित्वशङ्कायाः समाननामरूपत्वादित्यत्रैव निरस्तत्वेनात्र तच्छङ्काया एवानुत्थानात्। अत ईश्वरपाराधीन्यप्रयुक्तशङ्कैवात्र परिहर्तव्या, सा च सुपरिहृता, अतो यथाभाष्यमेवाधिकरणवर्णनं युक्तम्। (इति सर्वं समञ्जसमिति) सर्वशब्देन भेदश्रुत्यभेदश्रुतिघटकश्रुतिगुणादिविधिनिषेधश्रुतिभगवत्कृपास्वातन्त्र्यादिपरवाक्यप्रत्यक्षादीन्यभिप्रेत्य तेषां सामञ्जस्यमुक्तम्, इतिशब्दोऽखिलभुवनेत्यादिभाष्योक्ताशेषार्थपरामर्शी। सर्वशब्देनानुदाहृतश्रुतिस्मृतीतिहासपुराणवचांसि तदनुग्राहकतर्कजातं च विवक्षितम्, तेषामनया दिशा सामञ्जस्यं द्रष्टव्यम्। उक्तार्थबाधकत्वेन ये प्रमाणतर्काः परैः प्रयुक्ताः, तेषां सर्वेषां परिहारोऽत्राऽस्त्येव, एतदनन्तर्भूतार्थो नास्ति, तस्मादुक्तप्रकारेण बाधकप्रमाणतर्क-

ॐ भावप्रकाशिका ॐ

तत्साफल्यात् (मुक्तप्राप्यत्वायोगादिति) यद्यपि यादवमते 'आप्नोति स्वाराज्य'मित्यस्य न मुक्तविषयत्वम्, तथापि स्वाराज्यपदस्वारस्यात् मुक्तविषयत्वमभिप्रेत्य एतद्दूषणमुक्तमिति द्रष्टव्यम्। (भाष्योक्ताशेषार्थपरामर्शीति) अशेषार्थहेतुत्वपरामर्शीत्यर्थः। सर्वं समञ्जसमित्येतत् उक्तमिति पदाध्याहारेण उक्तं सर्वं समञ्जसमिति व्याख्याय सर्वशब्दस्यानुदाहृतश्रुत्यादिपरत्वमभिप्रेत्य द्रष्टव्यपदाध्याहारेण व्याचष्टे (सर्वशब्देनानुदाहृतेति) ननु परोक्तबाधकप्रमाणतर्काणां भाष्येऽनुपन्यस्तानां परिहारप्रकारस्याप्रदर्शितत्वात् कथं सर्वसामञ्जस्यं द्रष्टव्यं स्यादित्याशङ्क्याह (उक्तार्थबाधकत्वेनेति) भाष्योपन्यस्तैरेव न्यायैः परोत्प्रेक्षि-

* श्रुतप्रकाशिका *

परिहारश्चानुसन्धेय इत्यभिप्रायेण इति सर्वं समञ्जसमित्युक्तम् ॥ २३ ॥

जगद्व्यापारवर्जाधिकरणं समाप्तम् ।

इति श्रीहारितकुलतिलकवाग्विजयसूनुना श्रीरङ्गराजदिव्याज्ञालब्ध-
वेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधि-
गतभगवद्रामानुजविरचितशारीरकमीमांसा-
भाष्यहृदयेन श्रीसुदर्शनसूरिणा विलि-
खितायां श्रुतप्रकाशिकायां चतुर्थ-
स्याध्यायस्य चतुर्थः पादः ॥

नमो भगवते बोधायनाय वेदान्तविशदीकरणदीक्षाय ।
नमः पूर्वाचार्येभ्यः ।

गुरवे वरदार्याय कुर्वीमहि नमस्क्रियाम् ।
यत्पदाम्भोजसेवा नः सूते वेदान्तसम्पदम् ॥
श्रीमते व्यासविदुषे यतीन्द्राङ्घ्रिरजोजुषे ।
नमः कारुण्यवपुषे मायावादतमोमुषे ॥
व्यासार्यचरणाम्भोजयुगलं शरणं भजे ।
यद्गिरां परिणामस्य फलं नो भाष्यवेदनम् ॥

७ भावप्रकाशिका ७

तानामुत्प्रेक्षिष्यमाणानाञ्च प्रमाणतर्काभासानां परिहारस्सुगम इति भावः ॥ ७ ॥

इति जगद्व्यापारवर्जाधिकरणम् ।

इति तातार्यचरणारविन्दचञ्चरीकैः वात्स्यानन्तार्यसेवासमधिगतशारीरकमी-
मांसाभाष्यहृदयैः परकालमुनिकृपालब्धपारमहंस्यैः श्रीमदुभो-
पनिषद्भाष्यकारैः श्रीरङ्गरामानुजमुनिभिर्विर-
चितायां श्रुतप्रकाशिकाव्याख्यायां भाव-
प्रकाशिकायां चतुर्थस्याध्या-
यस्य चतुर्थः पादः ॥

समाप्तश्चाध्यायः ।

समुदित अधिकरणसङ्ख्या-१५६- समुदितसूत्रसङ्ख्या ५४४ ।

# श्रीभाष्यषष्ठखण्डस्थविषयानुक्रमणिका ।




| विषयः | पृष्ठ |
|---|---|
| अनियमाधिकरणम् | १०१५ |
| अक्षरध्यधिकरणम् | १०२२ |
| अन्तरत्वाधिकरणम् | १०३३ |
| कामाद्यधिकरणम् | १०४७ |
| तन्निर्धारणानियमाधिकरणम् | १०५९ |
| प्रदानाधिकरणम् | १०६३ |
| लिङ्गभूयस्त्वाधिकरणम् | १०६७ |
| पूर्वविकल्पाधिकरणम् | १०७८ |
| शरीरेभावाधिकरणम् | १०९० |
| अङ्गावबद्धाधिकरणम् | १०९७ |
| भूमज्यायस्त्वाधिकरणम् | ११०२ |
| शब्दादिभेदाधिकरणम् | १११० |
| विकल्पाधिकरणम् | १११४ |
| यथाश्रयभावाधिकरणम् | १११८ |


## तृतीयाध्याये तृतीयः पादः समाप्तः ।



## तृतीयाध्याये चतुर्थः पादः ।


| | |
|---|---|
| पुरुषार्थाधिकरणम् | ११३० |
| स्तुतिमात्राधिकरणम् | ११६३ |
| पारिप्लवार्थाधिकरणम् | ११६७ |
| अग्नीन्धनाद्यधिकरणम् | ११७० |
| सर्वापेक्षाधिकरणम् | ११७२ |
| शमदमाद्यधिकरणम् | ११७७ |

सर्वान्नानुमत्यधिकरणम् ११७६
विहितत्वाधिकरणम् ११८५
विधुराधिकरणम् ११९०
तद्भूताधिकरणम् ११९५
स्वाम्यधिकरणम् १२०५
सहकार्यन्तरविध्यधिकरणम् १२१०
अनाविष्काराधिकरणम् १२२१
ऐहिकाधिकरणम् १२२३
मुक्तिफलाधिकरणम् १२२५


## तृतीयाध्याये चतुर्थः पादः समाप्तः ।

## चतुर्थाध्याये चतुर्थः पादः ।


आवृत्त्यधिकरणम् १२२९
आत्मत्वोपासनाधिकरणम् १२३७
प्रतीकाधिकरणम् १२४४
आदित्यादिमत्यधिकरणम् १२४८
आसीनाधिकरणम् १२५५
आप्रयाणाधिकरणम् १२५८
तदधिगमाधिकरणम् १२६१
इतराधिकरणम् १२७०
अनारब्धकार्याधिकरणम् १२७३
अग्निहोत्राद्यधिकरणम् १२७५
इतरक्षपणाधिकरणम् १२८१


## चतुर्थाध्याये प्रथमः पादः समाप्तः ।

## चतुर्थाध्याये द्वितीय पादः ।


वागधिकरणम् १२८६
मनोधिकरणम् १२९१

अध्यक्षाधिकरणम् १२९५
भूताधिकरणम् १२९८
आसृत्युपक्रमाधिकरणम् १३०१
परसम्पत्त्यधिकरणम् १३१६
अविभागाधिकरणम् १३१८
तदोकोऽधिकरणम् १३२३
रश्म्यनुसाराधिकरणम् १३२५
निशाधिकरणम् १३२७
दक्षिणायनाधिकरणम् १३३०

## चतुर्थाध्याये द्वितीयः पादः समाप्तः ।

---

## चतुर्थाध्याये तृतीय पादः ।

अर्चिराद्यधिकरणम् १३३५
वाय्वधिकरणम् १३३९
वरुणाधिकरणम् १३४२
आतिवाहिकाधिकरणम् १३५२
कार्याधिकरणम् १३५८

## चतुर्थाध्याये तृतीयः पादः समाप्तः ।

## चतुर्थाध्याये चतुर्थः पादः ।

सम्पद्याविर्भावाधिकरणम् १३७९
अविभागेन दृष्टत्वाधिकरणम् १३९१
ब्रह्माधिकरणम् १३९६
सङ्कल्पाधिकरणम् १४०३
अभावाधिकरणम् १४०८
जगद्व्यापारवर्जाधिकरणम् १४२०

## चतुर्थाध्याये चतुर्थः पादः समाप्तः ।

